SAMPŪRṆĀNANDA-GRANTHAMĀLĀ

[ Vol. 12 ]

# SVAPNAVIMARŚAḤ

WRITTEN & EDITED

BY

PT. ŚRI RĀMANĀRĀYAṆA TRIPĀTHĪ
Ex-Head of Deptt. in Oriental Sanskrit
Lucknow University
Lucknow

VARANASI
1987

Research Publication Supervisor :—
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi - 221002.

Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi-221002.

Available at :—
Sales Department,
Sampurnanand Sanskrit University
Varanasi-221002.

First Edition—1100 Copies
Price Rs. 50.00

printed by:—
Ghan Syam Upadhyaya
Manager,
Sampurnanand Sanskrit Vishvavidyalaya Press
Varanasi.

सम्पूर्णानन्द–ग्रन्थमाला

[ द्वादशं पुष्पम् ]

# स्वप्नविमर्शः

लेखकः सम्पादकश्च

**पण्डितश्रीरामनारायणत्रिपाठी**

अध्यक्षचरः

प्राच्यसंस्कृतविभागस्य, लखनऊ-विश्वविद्यालये

लखनऊ।

वाराणस्याम्

२०४४ तमे वैक्रमाब्दे   १९०९ तमे शकाब्दे   १९८७ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः,
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी।

प्रकाशकः —
डा० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी—२२१००२

प्राप्तिस्थानम् —
विक्रय विभागः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी—२२१००२,

प्रथमं संस्करणम् ११०० प्रतिरूपाणि
मूल्यम्, ५०.०० रूप्यकाणि

मुद्रकः —
घनश्याम उपाध्यायः
व्यवस्थापकः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयीय मुद्रणालयस्य
वाराणसी।

# समर्पणम्

यस्या धन्याह्वयाया निजजनिमलभे पुण्यगर्भाज्जनन्याः
स्वस्रा तस्या ययाऽहं सततमृषिमया पालितो मातृभावैः ।
मार्गान् सर्वान् प्रशस्तानकृत मम कृते यः पितृव्यश्च तातः
तेभ्यः साष्टाङ्गप तं विमलकृतिमिमामर्पये सद्गुरुभ्यः ॥

# आमुखम्

बहोः कालान्मनसि मे भावनैषाऽङ्कुरिता यत् स्वप्नविषये कश्चिन्निबन्धः सुव्यवस्थितः संग्रहात्मकः सविवेचनं करणीयः, येन स्वप्नस्य इतस्ततो विकीर्णा अंशतश्चापि यत्र तत्र प्रतिपादिताः सर्वाः सामग्र्यः सङ्गृहीता एकसूत्रेण संबद्धाः सम्यग् विमृष्टाः स्युः। तयैव भावनया सम्प्रति प्रेरितोऽयं जनो निबन्धममुं कर्तुं प्रायतत। निबन्धेऽस्मिन् स्वप्नं पूर्णतया विवृण्वानेन मया प्रसङ्गवशात् संक्षेपेण जाग्रत्सुषुप्त्यवस्थयोरपि स्वरूपं किञ्चिद् विविच्य तदनन्तरं स्वप्नस्य मोक्षा कृता। प्रायो ह्यत्र स्वप्ननिरूपणे वेदब्राह्मणोपनिषत्सूत्रपुराणेतिहासायुर्वेदधर्मशास्त्रा-गमकाव्यलोकव्यवहारवचनान्युपादाय स्वप्नस्य स्वरूपं तदधिष्ठानादीनि भेदं फलं प्रतीकारोपायश्चेति विविच्य सविस्तरं सर्वमुपन्यस्तम् अनन्तरं बौद्धजैनवेदान्ता-दिषड्दर्शनानां मतेन ज्यौतिषदृष्ट्या च स्वप्नस्वरूपादिविचारो विहितः। सङ्ग्रह-दृष्ट्या मनोवैज्ञानिकानां परेषां विवेचकानाञ्च मतेन समासतः स्वप्नं विविच्य कतिपयैरेव शब्दैः पाश्चात्त्यपौरस्त्यमतयोः पर्यालोचनं कृतम्, विशेषतो ह्यत्र भारतीय-पद्धत्यनुसारेणैव विवेचनम्। न ह्यस्मिन् निबन्धे सर्वेषामेकत्र समीक्षा अपि तु तत्तन्मतनिरूपणावसर एव।

यद्यपि स्वप्नविषयमादाय वेदमारभ्य काव्यं यावत् संस्कृतवाङ्मये बहुषु स्थलेषु स्वप्नस्य विवेचनमस्ति तथा च स्वातन्त्र्येण विषयेऽस्मिन् संस्कृतभाषायां हिन्दी-भाषायामन्यासु च प्रदेशीयभाषासु विद्वद्भिर्विरचितानि बहूनि पुस्तकान्युपलभ्यन्ते। आङ्ग्लभाषायां पाश्चात्यैर्मनोवैज्ञानिकैर्मनोविज्ञानविषयकेषु ग्रन्थेषु विषयोऽयं बहुधा विचारितः, स्वतन्त्रा ग्रन्थाश्च विरचिताः। एवं वैदेशिकैरन्यैर्मनोषिभिरपरासु भाषासु निर्मिता ग्रन्थाः वर्तन्ते, तथापि भारतीयमुनीनां वचनस्य विविधग्रन्थेषु विकीर्णत्वात्तेषां संग्रहस्यावश्यकत्वाद् इतरेषु ग्रन्थेषु विषयस्यास्यैकदेशेन स्वल्परूपेण च विचारितत्वा-न्मनोवैज्ञानिकानामन्यवैदेशिकानाञ्च विचारसरण्याः परमार्गाश्रितत्वाद् भारतीय-पद्धतिस्पर्शरहितत्वाच्च एतादृशो विमर्शात्मकः स्वप्नविमर्शः, निबन्ध आवश्यकः।

विद्यते जगत्यस्मिन् प्राणिनां खलु व्यावहारिको जाग्रत्स्वप्नसुषुप्त्यभिधेया त्रिविधा दशा सर्वपरिचिता विहायालौकिकीं तुरीयां दशाम्। तत्र जाग्रद्दशायां यावत् क्षेत्रं वर्तते ततो विशालतरं क्षेत्रं स्वप्नदशाया अस्ति, यतो जाग्रति इन्द्रियापेक्षो

वस्तुन्येव मनो रमते, तत्र मनसः पारतन्त्र्यात्। स्वप्ने तु इन्द्रियापेक्षैव नास्ति। अतः स्वातन्त्र्येण सर्वत्र गन्तुं मनो विशालं क्षेत्रमधिकरोति, दृष्टमदृष्टं सर्वमनुभवति। आर्यधर्मिणां प्राचीनकालादारभ्य वेदपुराणदर्शनसाहित्यधर्मशास्त्रादिग्रन्थेष्वपरधर्मावलम्बिनां ग्रन्थेषु च सुस्पष्टं स्वप्नवर्णनं स्वयमेव प्रकटयति स्ववेदनीयत्वं रहस्यात्मकत्वं परमावश्यकत्वञ्च। तस्मात् सुस्थिरं मन्ये यत् स्वप्नविमर्श आवश्यक एव मानवानां जीवने हिताय।

यद्यपि वायुप्रधानप्रकृतया जना बाहुल्येन स्वप्नान् पश्यन्ति, परन्तु नैतादृशा जना लोके सन्ति ये कदापि स्वप्नं नावालोकन्त। स्वप्ना अपि केचिदेतादृशाः सन्ति येषां कारणानि सुस्पष्टानि सन्ति यद्विषये जिज्ञासा नोदेति। अजीर्णतया, अन्येन वा व्यतिक्रमेण मस्तिष्के क्षुब्धे जाते सति जाग्रदनुभूतया न्यूनाधिकरूपेण स्वप्ना आवर्तन्ते। ते स्वप्ना विचारकोटौ नावतिष्ठन्ते। साधारणजना अपि तद्धेतुं जानन्ति, किन्तु सर्वे स्वप्ना न समानमानाः। बहवस्तु दुर्बोधहेतवो विज्ञापितकारणेऽपि न सुबोधतां गच्छन्ति। प्रायो हि मानवाः स्वप्नानवगन्तुं प्रयतन्ते, यतो रोगनिदाने, भाविसूचनायाम्, स्वात्मनो वास्तवस्थितौ च साहाय्यं लभन्ते। तद्यथा—स्वप्नदोषाद्रय। बहवो रोगा ईदृशाः सन्ति येषां ज्ञानं नियमनं च स्वप्नाध्ययनमन्तरा न सम्भवति। नात्युक्तिर्यत् स्वप्नाध्ययनं समेषां रोगाणां निदानं कारणं वा सम्यग् विज्ञापयतीति। भाविनीनां घटनानां सूचकाश्च भवन्ति स्वप्नाः। कुर्वन्ति च लोकाः स्वप्नदर्शनेन भाविनः कार्यस्य विचारम्। नात्र जातिदेशपरिच्छेदः। एतादृशो विचारः प्राचीनकालादेव नैरन्तर्येण जगति प्रचलति।

जाग्रद्दशायां बाह्यप्रदर्शनमधिकं भवति, प्रायो मानवो वस्तुतो यादृशो यादृशाकृतिलज्जाभयशोकदौर्बल्यादियुक्तोऽस्ति तादृशधर्मान् स्वार्थवशाच्छक्तिवैकल्यादहङ्कारवशात् तथा न प्रकाशयति, स्वकृतमनुचितमपि स्वबुद्ध्या युक्तत्वेन समर्थयते, किन्तु स्वप्नावस्थायां मानवः स्वात्मनो वास्तवस्थितिं ज्ञातुं पारयति। अतः स्वात्मनो वस्तुस्थितेर्विज्ञानाय अध्यात्मक्षेत्रे प्रवेशाय च स्वप्नाध्ययनम् आवश्यकम्। एतदध्ययनं भारते वैदककालादेव जातम्। मानवप्रादुर्भावकालात् तज्जीवनधारया सहैवाविरतरूपेण प्रचलन्त्याः स्वप्नावस्थाया अध्ययनमपि सर्गादित एव प्रवृत्तम् इत्युक्तिर्नात्युक्तिमधिरोहति।

वेदेष्वथर्ववेदस्य पूर्णे षोडशकाण्डे, अन्यकाण्डेऽपि केषुचित् सूक्तेषु मन्त्रेषु च, अपरेष्वपि ऋग्वेदादिषु स्वप्ना वर्णिताः। तत्र मनः, मनोव्यापारः, पुनर्जन्म, पुण्यम्, पापम्, नियतिः, भावि, देवतेत्याद्याधारमवलम्ब्य स्वप्ना निरूपिताः। अनन्तरं ब्राह्मणे, उपनिषदि, दर्शने, दार्शनिकदृष्ट्या निरूपितः स्वप्नविमर्शः। विस्तरेण पुराणे, काव्ये, तन्त्रे, आगमे, आयुर्वेदे, बौद्धजैनग्रन्थेषु शुभाशुभाभ्यां फलाफलाभ्यां शकुनरूपेण

सूचकत्वेन च प्रतिपादिताः सन्ति, स्वप्नाः, तत् सर्वं निबन्धे स्फुटीभविष्यति। विदेशेऽपि प्राचीनग्रन्थे 'बाइबिल' इत्याख्ये स्वप्नविषयको विचारोऽस्ति। यूरोप यूनानादिदेशेऽपि पुरा निःसन्दिग्धं तादृशी व्यवस्था आसीत्। सिकन्दरविजयगाथा-प्रसङ्गे स्वप्नेन शुभाशुभज्ञानस्य चर्चाऽवर्तत। पाश्चात्यदेशेषु सर्वप्रथमं Concerning Dreams and Their Intrepretation. पुस्तके अरस्तू महोदयेन स्वप्नस्य विवेचनं, मनोवैज्ञानिकदृष्ट्या कृतम्। किन्तु नैषा प्रणाली तत्रैवोद्भाविता, भारतेऽपि पुरा चरकप्रभृतिग्रन्थे स्वप्नं मनःप्रसूतं मत्वा तद्द्वारा रोगनिदानविधिः प्रतिपादितोऽस्ति। एवं यवनसाहित्येऽपि स्वप्नविमर्शो वर्तते तत्र स्वप्नहेतवो भिन्ना अङ्गीकृता इत्यन्यदेतत्। आधुनिककाले फ्रायडमहोदयेन स्वप्नसम्बन्धे बहुधा परिष्कृत्य व्याख्यातम्। अत्र संक्षेपेण क्रमशश्च भारतीयपाश्चात्यपद्धतिभ्यां स्वप्नविचारा उपस्थापिताः।

शयनार्थकात् 'ष्वप्' धातोर्भावार्थकेन 'नन्' प्रत्ययेन निष्पन्नः स्वप्नशब्दः स्वपन-स्वाप-सुषुप्ति-शयन-प्रसाद-निद्रादिपर्यायः। यद्यप्येकस्या एव प्रकृतेरेकार्थ-प्रत्ययद्वयेन निष्पन्नयोः स्वप्नसुषुप्तिशब्दयोः शास्त्रे पर्यायतो व्यवहारादभेदः प्रतीयते, तथापि लोके विभिन्नार्थेषु शास्त्रे च विभिन्नावस्थासूभयोः शब्दयोः प्रयोगाद् व्यावहारिको भेद एवोपलभ्यते। स चेत्थम्—बाह्येषु करणेषूपसंहृतेषु जागरितवासनानुसारेण मनस्तदर्थाभासाकाराभासनं स्वप्नशब्दितम्। यथाहुः—

> इन्द्रियाणामुपरमे मनोऽनुपरतं यदि।
> सेवते विषयानेव तं विद्यात् स्वप्नदर्शनम्॥[1]
> स्वप्नस्तु मानसोल्लासः इति।[2]

जाग्रत्स्वप्नभोगद्वये श्रान्तस्य सवासनस्यान्तःकरणस्य कारणात्मना स्थितिः सुषुप्तिः। तदुक्तम्—'यत्र सुप्तो न कञ्चन कामं कामयते तत् सुषुप्तम्'[3]।

> अभावप्रत्ययावलम्बना वृत्तिर्निद्रा'[4]।
> सर्वविशेषविज्ञानप्रत्यस्तमयो सुषुप्तिः'।[5]

स्वप्नश्चायुर्वेदे सप्तविधः कथितः, दृष्टश्रुतानुभूतप्रार्थितकल्पितभाविकदोषज-भेदात्। क्वचास्याष्टविधत्वं पञ्चविधत्वञ्चापि वर्णितम्। दृष्टस्य पदार्थस्य दर्शनं प्रथमः, श्रुतस्य वस्तुनो दर्शनं द्वितीयः, अनुभूतस्य पदार्थस्य दर्शनं तृतीयः। एते हि दृष्टश्रुतानुभूताः पदार्था इह जन्मनि संस्थिता जन्मान्तरे वा ते सर्वेऽत्र विषयत्वे-नाधिकृताः सन्ति—

---

१. महाभा० शा०, प० २७५।२४। २. त्रिपुरार० ज्ञा० ख० ९।४७।
३. श्रीविद्यातारकोपनिषत् ३। ४. यो० सू० १।१०।
५. भामती ३।२।२७।

अदृष्टमप्यर्थमदृष्टवैभवात् करोति सुप्तिर्जनदर्शनातिथिम् ।' इत्युक्तेः[1] ।

देवविशेषात् प्रार्थितस्य वस्तुनो दर्शनं चतुर्थः, मनसा कल्पितस्य दर्शनं पञ्चमः, भविष्यत्कालिकवस्तुसूचकः षष्ठः, कफवातपित्तस्थानसमयदशाभयमनोदोषजातः सप्तमः । एवं च भेदः कारणत आकृतितश्च जायते ।

फलाफलभेदेन स्वप्नो द्विविधः—सफलो विफलश्च । तत्र दृष्टश्रुतानुभूतप्रार्थितकल्पिताः पञ्च स्वप्नाः दिवास्वप्नः, अतिह्रस्वः, अतिदीर्घः, प्रकृतिजः, विस्मृतः भयवेगरोधरोगचिन्ताजन्या, नग्नादिदृष्टाः स्वप्ना विफलाः । अन्यौ द्वौ भाविकदोषजौ सफलौ, तावपि कालदेशावस्थादितारतम्येनाऽल्पाधिकशीघ्रविलम्बरूपैश्च सफलौ । सफला अपि स्वप्नाः काकतालीयन्यायेन फलन्तीति केषाञ्चिन्मतम्—

'फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति' ।[2]

सफलभाविकस्वप्नस्य विषये किमपि बहुचर्चितं साम्प्रतिकं विमृश्यते प्रसङ्गोपात्तत्वात् । तद् यथा—धर्मप्राणप्राचीनभारतीयार्याणां दैवीं शक्तिं पूर्वजन्मार्जितशुभाशुभमयमदृष्टं च प्रति दृढो विश्वास आसीद्, येयं नियन्त्री शक्तिः पूर्वसञ्चितादृष्टस्य (प्रारब्धस्य) भावि फलं सूचयतीति, सैव विचारधाराऽद्यावधि सातत्येन प्रवहन्ती भारतीयजनमानसे विराजते । प्रायो ह्येषा गतिः किञ्चिन्न्यूनाधिकभेदेन अपरेष्वपि देशेषु दृश्यते । ईश्वरधर्माधर्मान् प्रति दृढे विश्वासे तेषाञ्च हेतुत्वे किमपि न वक्तव्यमस्ति । विहायैतत्पक्षं तार्किकदृष्ट्या विचारे क्रियमाणे सति इदं सुस्थं प्रतिभाति विचारकुशलानां सविधे यत् सर्वाणि कार्याणि सर्वे च पदार्थास्तदैव साकारतां भजन्ति, यदा यत्कार्यस्य पदार्थस्य वा उपादानम्, असमवायि, निमित्तम्, प्रागभावः, कर्त्रादि, कार्यात् प्रागेव सन्ति । तैरेवोपादानादिभिः कार्याभावे कार्योत्पत्तिमनुमातुं शक्यते येन केनापि । एतेषामभावे झटित्यकस्मात् कार्योत्पत्तौ काचन युक्तिर्नावलोक्यते । युक्त्यभावापन्नायामोदृश्यामवस्थायां केवलेन स्वप्नेन भाविनः कार्यस्यानुमानेऽहैतुकविश्वासादन्यः को हेतुर्भवितुमर्हति, येनान्धविश्वासेन कारणाभावे कार्योत्पत्तिं वदितुं शक्नुवन्ति ? एष चान्धविश्वासो मानवसहजातेन मानसिकधर्मेणाज्ञानेन भयेन चोत्पद्यते क्वचनाऽज्ञानेन क्वचन भयेन । भयञ्च क्वचन सविवेकम्, क्वचन विवेकरहितम् । अग्निस्पर्शादिभयं विवेकरहितम्, अग्निः स्पर्शेन मां धक्ष्यतीति बुद्ध्या मानवोऽग्निस्पर्शाद् विभेतीतिकार्यकारणभावाद् विवेकयुक्तम् । अविवेकेन युक्तं भयञ्चाज्ञानेन जायते । रात्रौ गर्दभद्वारा दक्षिणदिशि गमनमिति स्वप्नदर्शनेन स्वस्य स्वजनस्य च कृते भाविनोऽरिष्टस्य शङ्कया जायमाना भीतिरविवेकयुक्ता । एवं

१. नैषधे १।३९
२. वेणीसंहारे २।१५

संसारे बहुषु समाजेषु अज्ञानतः, अविवेकयुक्ताद् भयाच्च समुत्पन्ना बहवो निर्मूला विश्वासाः (अन्धविश्वासाः) वर्तन्ते। तेष्वन्यतमः स्वप्नविषयकोऽन्धविश्वास इति।

भाविन्या घटनाया जिज्ञासावशादपि मानवो येन केनापि प्रकारेण बहुविधं तर्कते। तेषु प्रकारेष्वेकः स्वप्नप्रकारोऽपि वर्तते। अतो भाविजिज्ञासापि स्वप्नस्य शुभाशुभसूचकत्वे हेतुः। एषा विचारपद्धतिः केवले भाविके स्वप्ने एव संगता, न तु दोषजे नापोतरेषु पञ्चसु।

पूर्वोक्तास्ते सफलाः स्वप्ना नहि केवलं द्रष्टा एव फलं प्रयच्छन्ति, अपि तु स्वजनेन दृष्टाः संबन्धिदृष्टा मित्रदृष्टाश्च फलं ददति—

**सुहृदो यांश्च पश्यन्ति व्याधितो वा स्वय तथा**[1]। इति।

शुभाशुभफलभेदेन सफलोऽपि स्वप्नो द्विविधः – सुस्वप्नो दुःस्वप्नश्च। तत्र यो दर्शनसमये द्रष्टुः सुखं जनयन् भावि भद्रं सूचयति स सुस्वप्नः। यथा मनोरमादिदर्शनम्। यश्च दर्शनसमये द्रष्टुर्दुःखं जनयन् भाव्यरिष्टं सूचयति स दुःस्वप्नः। यथा श्वकरभगर्दभानारुह्य दक्षिणदिग्गमनमित्यादि।

एवं सति कैश्चित् स्वप्नदर्शनं त्रिविधं मन्यते—अपार्थकम्, यथार्थम्, अन्यार्थञ्चेति। वैशेषिका अपि त्रैविध्यमङ्गीकुर्वन्ति - किञ्चित् संस्कारपाटवात्, किञ्चिद् वातपित्तादिदोषात्, किञ्चिददृष्टवशादिति। नैयायिका इत्थं वदन्ति भयोपसंहितः, प्रमोदोपसंहितः, उभयविपरीतश्चेति स्वप्नस्त्रिविधः। ज्यौतिषकोविदा जन्मकुण्डलीस्थग्रहवशाद् विभिन्नप्रकारकस्वप्नानां दर्शनं तेषां शुभाशुभफलञ्चामनन्ति। भारतीयवाङ्मये यत्र यत्र शुभाशुभस्वप्नविचारचर्चा वर्तते, तत्र तत्र अशुभफलविधायिनां स्वप्नानां दोषनिवृत्तये बहव उपाया स्नान-दान-हवन-विष्णु-ब्रह्मेशानार्कगोद्विजपूजनगजेन्द्रमोक्षस्तवादयोऽपि निरूपिताः। येषां करणेन अरिष्टशान्तिः शुभाप्तिश्च भवतः।

प्रसङ्गाद् दार्शनिकदृष्ट्या किमप्युच्यते—अद्वैतदर्शनानुसारेण ब्रह्मणोऽतिरिक्तस्य निखिलस्य प्रपञ्चस्य मायामयत्वात् स्वाप्निकस्यापि वस्तुनो मायामयत्वं सुस्थरम्। मायामयत्वेऽप्यस्य नास्ति जगत्प्रपञ्चवद् व्यावहारिकत्वम्, अपि तु प्रातिभासिकत्वमेव। व्यावहारिकपदार्थे यादृशो चिरस्थायिता यादृश्याः साधनसामग्र्यो न तादृशी दशा स्वाप्निकेषु, अपि तु विलक्षणैव। तदित्थम्—यत्र व्यावहारिकसर्गोऽविद्यातिरिक्तदोषाऽजन्यो ब्रह्मसाक्षात्कारोदयं यावदनुवर्तते निवर्तते च ब्रह्मसाक्षात्कारात् तत्र स्वाप्निकः सर्ग आगन्तुकनिद्रादिदोषजन्यः प्रबोधं यावदनुवर्तते

---

1. सुश्रुते सू० २९ अ० ५५ श्लो०

प्रबोधात् प्रत्यहं निवर्तते यथा काचादिदोषजन्यं शुक्तिरजतम्। उक्तञ्च—[1]"शुक्तिरूप्यवत् स्वप्नोपलब्धरथादयोऽपि प्रतिभासिका यावत् प्रतिभासमवतिष्ठन्ते' इति। अस्य स्वाप्निकपदार्थस्योपादानविषये साक्षान्मूलाविद्यैव जाग्रत्पदार्थस्येवास्ति, इति केषाञ्चिन्मतम्[2] अन्तःकरणद्वारा—इत्यन्येषां[3] मतम्।

शुक्तिरजतस्य शुक्त्यधिष्ठानवत् स्वाप्निकपदार्थस्य सत्त्वेन ज्ञायमानं चैतन्यमेवाधिष्ठानम्। तत्र केचनान्तःकरणावच्छिन्नं जीवचैतन्यमङ्गीकुर्वन्ति, परे मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमेव मन्यन्ते। एवं स्वाप्निकपदार्थस्य मायिकत्वात्प्रातिभासिकत्वान्मिथ्यात्वमपि सिद्धमद्वैतदर्शने। माध्वाः स्वप्नविषयकं ज्ञानं मिथ्येति स्वीकुर्वन्तः, स्वप्नसृष्टिं सत्यां निरुपादानां च वदन्ति। वल्लभाः स्वाप्निकीं सृष्टिर्मायामात्रम्, न तु वस्तुभूता तत्र भगवानेव कर्त्ता मायैव कारणमिति कथयन्ति। रामानुजाः स्वप्नज्ञानं सत्यम्, न भ्रमः स्वप्नजाता सृष्टिरपि स्वप्नद्रष्टृपुरुषानुभाव्या स्वप्नकालावसाना सत्या एवेति निगदन्ति। सांख्या अपि स्वप्नस्य मायिकत्वं ब्रुवन्ति। नैयायिका वैशेषिकाश्च अयथार्थज्ञानाभ्यन्तरे एवैनं परिगणयन्ति। मीमांसका बौद्धा जैनाश्चापि मिथ्येति मन्यन्ते। ज्योतिष आयुर्वेदस्य तु विचारसरणिरन्यैव न तु दार्शनिकी। ज्ञायते चैतदेतावता यत् कतिपयाचार्याणां मतं विहाय प्रायो बहूनामाचार्याणां मते स्वाप्निकपदार्थो मिथ्यैव। एवं सति सर्वेषां दार्शनिकानामन्येषाञ्च मते स्वप्नस्य मिथ्यात्वेऽपि भाविनः सूचकत्वं तस्य निर्विवादमेव। तदुक्तं बादरायणेन—[4]सूचकश्च हि श्रुतेराचक्षते च तद्विदः, इति।

मनोवैज्ञानिकाः पाश्चात्यविद्वांसः—जाग्रन्निद्राप्रेरणामय उभयमध्यगतः स्वप्नो हि नहि निद्राभङ्गकरः, नापि निद्राविरोधी, अपि तु तत्सहायक एव, किन्तु नहि नैयत्येन, न च सार्वत्रिकत्वेन, अर्थाद् यत्र निद्राप्रेरणा प्रबला तत्र स्वप्नस्तत्साधकः। यत्र च निर्बला तत्र बाधकः। एवंभूतस्य स्वप्नस्य प्रेरको द्विविध आन्तरो (मानसः) बाह्यश्च (भौतिकः)। तत्राद्यः—जीवनसंबन्धिन्योऽपूर्णाः कामनाः, यावत् पूर्त्तिताः कामनाः कर्मणे प्रेरयन्ति। ताश्च कामना द्विधा—प्रवृत्तिरूपा निवृत्तिरूपाश्च आशाऽऽशङ्कामयाः, यत्र रागद्वेषादयः सर्वेऽन्तर्भवन्ति। बाह्यश्च भौतिकः, सोऽपि द्विविधः-एकः शारीरः, यथा पिपासादिः। द्वितीयो बाह्य एव, यथा शब्दादिः। एवम् इच्छा स्वप्नप्रेरिका, इच्छापूर्तिप्रयत्नः स्वप्नः। सा इच्छा मूर्तिकरण-रूपान्तर-आकुञ्चन-प्रसारण-रूपसाधनाख्यैःषड्भिः स्वरूपैः स्वप्नावसरे आत्मानं प्रकटयति, येन बहुविधाः स्वप्ना जायन्त इति।

---

१. वे० प० प्र० खं० ६५ पृ० ( चौ० वाराणसी १९९४ )

२. वे० प० प्र० खं० ६७ पृ०

३. वे० प० प्र० खं० ६८ पृ०

४. ब्र० सू० ३।२।४

कस्यचिद् वैज्ञानिकचिकित्सकस्य मते वायु-पित्त-कफानां प्रकोपाद् देवाभिनिवेशात् पुनः पुनः कार्याभ्यासाद् भाविकार्यवशाच्च स्वप्ना भवन्तीति ।

भारतीयवाङ्मये बृहदारण्यकाद्युपनिषदां तद्भाष्याणां च अध्ययनेन प्रतिभाति यदेष वैज्ञानिकसिद्धान्तोऽपि सूक्ष्मरूपेण तत्र निरूपितो वर्तते । तद् यथा—

स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति ।
शुक्रमादाय पुनरैति स्थानं हिरण्मयः पुरुष एकहंसः ॥[१]

तथा च भाष्यम्[२]—स्वप्नेन स्वप्नभावेन, शारीरं शरीरम् अभिप्रहत्य निश्चेष्टमापाद्य सुप्तः, स्वयमलुप्तदृगादिशक्तिस्वाभाव्यात्, सुप्तान् वासनाकारोद्भूतान्तःकरणवृत्त्याश्रयान्, बाह्याध्यात्मिकान् सर्वानेव भावान् स्वेन रूपेण प्रत्यस्तमितान् सुप्तान् अभिचाकशीति अलुप्तया आत्मदृष्ट्या पश्यत्यवभासयतीत्यर्थः । शुक्रं शुद्धं ज्योतिष्मदिन्द्रियमात्रारूपम् आदाय गृहीत्वा, पुनः कर्मणे जागरितस्थानम् ऐति-आगच्छति इत्यादि ।

एतेन प्रतीयते यत् पाश्चात्यमनोवैज्ञानिकानां स्वप्नविषयक सिद्धान्तो न सर्वथा नवीनः । यदि ते मनोवैज्ञानिकशिरोमणयो मनोविज्ञानसरण्या स्वप्नमधीत्य प्रयोगेण मन्त्रेण च समीक्ष्य तत् सिद्धान्तं स्थिरीकृतवन्तस्तत्र योगेन विमलेन मनसा कृतसर्वसाक्षात्कारा भारतीयदार्शनिकमनीषिणो दार्शनिकपद्धत्या साधु विमृश्य साङ्गोपाङ्गं व्यवेचयन् ।

अस्य ग्रन्थस्य निर्माणे येभ्यः पुस्तकेभ्यः सहायता समवाप्ता तत्कर्तॄणामाचार्याणां नतिपूर्विकामधमर्णतां वहामि । तेभ्यः सर्वेभ्यो गुरुभ्यः शतशः शिरोऽञ्जलीन् समर्पये येषां कृपालेशतः कार्यमेतन्निभालयितुं तत्परः सफलश्चाभूवम् ।

परमोदात्तचित्तानाचार्यप्रवरान् पं० श्रीबलदेवोपाध्यायान् सादरं स्तौमि यैर्वाराणसेयसंस्कृतविश्वविद्यालयीयशोधसंस्थानस्य निदेशकपदमलङ्कुर्वद्भिः प्रकाशयितुं पुस्तकमिदं स्वीकृतम् । अस्मिन् कार्ये साहाय्यं कृतवतः शुक्लचरितान् पण्डितप्रवरान् स० सं० वि० वि० व्याकरणविभागाध्यक्षान् डा० कालिकाप्रसादशुक्लान् प्रति कृतज्ञतां ज्ञापये । परमसुहृदः सौजन्यमूर्तेर्विद्वत्तल्लजस्य विश्वविद्यालयीयपुराणेतिहासविभागप्राध्यापकस्य डा० कपिलदेवत्रिपाठिन उपकारजातं कदापि विस्मर्तुं न शक्नोमि यो हि विश्वविद्यालयीये गेहीये च कार्ये व्यस्तोऽपि पुस्तकस्यास्य शोधने सद्विमर्शप्रदाने चापेक्षितसमयश्रमद्वारा पुस्तकप्रकाशने सहयोगं कृतवान् ।

---

१. बृ. उ. ४।३।११

२. तत्रैव शाङ्करम् ।

विश्वविद्यालयस्यास्यानुसन्धानसंस्थाननिदेशकान् विद्वद्वरेण्यान् डा० भगीरथ प्रसादत्रिपाठिनः ( वागीशशास्त्रिणः ), प्रकाशनाधिकारिणो विद्यारसिकान् डा० हरिश्चन्द्रमणित्रिपाठिनो मुद्रणाधिकारिणः श्रीघनश्यामोपाध्यायान् सभाजये, येषां सौजन्येन जातेऽपि महति विलम्बे मन्थरगत्या पुस्तकस्य प्रकाशनं सम्पन्नम् ।

अन्येभ्यः स्वजनेभ्यो मित्रेभ्यश्च बहून् साधुवादान् वितरामि यैरस्मिन् कार्येऽल्पमनल्पं वोपकृतम् । विशेषतः स्वपुत्रमायुष्मन्तं गिरिधरत्रिपाठिनमाशीराशिभिः संवर्धये येनात्र प्रतिलिपिकरणे सम्पादनादिकार्ये च बहु श्रमो विहितः ।

अन्ते च भवानीजानिं विश्वनाथं प्रणमामि, यत्कृपया ग्रन्थोऽयं 'स्वप्नविमर्शः' परिपूर्णतामगमत् ।

कार्तिकपूर्णिमा
वि० सं० २०४३

रामनारायणत्रिपाठी
सी-५, सेक्टर सी, अलीगंजस्कीम, लखनऊ

## विषयानुक्रमणिका

श्रीगणेशाय नमः

# स्वप्नविमर्शः

## जागरणस्वरूपाध्यायः

यदविद्याविलासेन क्रीडद् यात्यनिशं जगत् ।
तं प्रणौमि महादेवमवस्थात्रयसाक्षिणम् ॥ १ ॥

स्वप्नाधिपतिनानम्य पितरौ शारदां गुरून् ।
स्वप्नविमर्शमाचष्टे रामनारायणो द्विजः ॥ २ ॥

यत्र यत्र यथा यच्च शास्त्रेषु प्रतिपादितम् ।
विषयेऽस्मिन् तथा तत्तु न्यस्य किञ्चित् प्रवक्ष्यते ॥ ३ ॥

तन्नास्ति मामकं किन्तु त्वदीयं तुभ्यमर्पये ।
प्रीयतां तेन भूतेशो भूतानां भूतिदायकः ॥ ४ ॥

अथ स्वप्नविवेचनमारभमाणः प्रसङ्गवशाज्जायमानायाः तत्सार्थभूतजाग्रत्-सुषुप्तिजिज्ञासायाः शान्तये संक्षेपेण जागरणं सुप्तिं च क्रमशो निरूप्य मुख्यविषये गदितुं यतिष्ये ।

तदेतत्त्रयमवस्थापदाभिधेयमित्यतोऽवस्था नाम का इति चेदुच्यते–वयोधाम-पाददशास्थानपदादिशब्दापरपर्यायमवस्थाशब्दमधिकृत्य व्याख्यातॄणामाचार्याणां 'ष्ठा गति निवृत्तौ'[१] इत्यतो 'आतश्चोपसर्गे'[२] इति भावेऽङि अव-स्था-अङ् इति व्युत्पत्त्या अवस्थानम् अवस्थितिर्वेति निरुक्त्या कालकृतभावविकारभेदरूपमर्थमङ्गीकृतवतां विषयभेदेन स्वस्वमतानुसारं यथाशास्त्रं यथाविषयं वहुधा विवेचनं विद्यते । तद् यथा षड्धा निरुक्ते–जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते विनश्यति[३] इति । पञ्चधा योगे–अविद्याऽस्मितारागद्वेषाभिनिवेशाः[४], प्रमाणविपर्ययविकल्पनिद्रास्मृतयो[५] वेति ।

१. सि० कौ० भ्वा० ०, अ० ९२८ । २. पा० सू० ३।३।१०६ । ३. निरुक्ते १।२।८ । ४. यो० सू० २।३ । ५. यो० सू० १।६ ।

त्रिधा सांख्ये-शान्तघोरमूढाभिधा जाग्रत्स्वप्नसुषुप्त्याख्या[१] आविर्भावतिरोभावा वा। उपनिषत्सु त्रिधा चतुर्धा पञ्चधा च—'अथ जाग्रत्स्वप्नसुषुप्तिमूर्च्छामरणावस्थाः पञ्च भवन्ति'।[२] 'जाग्रत्स्वप्नसुषुप्तितुरीयमिति चतुर्विधा अवस्थाः'[३]। जागरितं स्वप्नं सुषुप्तं च तुरीयं च'[४]।

एवं वराह[५] श्रीविद्यातारक[६] परब्रह्म[७] परमहंस[८] महोपनिषद्[९] नारदपरिव्राजक[१०] माण्डूक्योपनिषदादिषु[११] वर्णितम्।

क्वचनात्रैव सप्तविधापि-बीजजाग्रत्, जाग्रत्, महाजाग्रत्, जाग्रत्स्वप्नः, स्वप्नः, स्वप्नजाग्रत्. सुषुप्तिरिति[१२]।

वेदान्ते त्रिधा चतुर्धा वा–जाग्रत्स्वप्नसुप्तीनामागमापायभासनम्[१३]जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते[१४]। एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु[१५] त्रिषु धामसु यद् भोग्यं भोक्ता भोग्यश्च यद् भवेत्,[१६] तिस्रस्तावदवस्थाःशरीरस्थस्य जीवस्य प्रसिद्धा जागरितं स्वप्नः सुषुप्तमिति,[१७] चतुर्थी शरीरादपसृतिः,[१८] तुरीयाप्येकावस्थेति माण्डूक्योपनिषदि माण्डूक्यकारिकासु चोपवर्णिता।

स्मृतिष्वष्टधा त्रिधा चतुर्धा च- –

कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि।
कैशोरमापञ्चदशाद् यौवनं तु ततः परम्॥

आषोडशाद् भवेद् बालस्तरुणस्तत उच्यते।
वृद्धस्तु सप्ततेरुर्ध्वं वर्षीयान् नवतेः परम॥

पिता रक्षति कौमारे भर्ता रक्षति यौवने।
पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥

---

१. 'सुषुप्त्यान्तःसाक्षित्वम्' सां० सू० १।१४८, 'स्वप्नजागराभ्यामिव·····' सा० सू० १।३६
२. पैङ्गलोपनिषद् २।११। ३. शारीरकोपनिषद् १४। ४. सुबालोपनिषद् १।१५। ५. २।५४–६२। ६. २,३ पा०। ७. ५२७ पृ० [ उपनिषद्संग्रहः ]। ८. ४८४ पृ० [ ईशाद्युपनिषद्संग्रहः ]। ९. ४४१ पृ०। १०. ३२१ पृ०। ११. ३-५; ९-११। १२. ४६१ पृ० ४।८-२० महोपनिषद्। १३. ५८।१ आ०। १४. चि० दी० २१३।१। १५. चि० दी० २१४।१। १६. चि० दी० २१५। १७. ब्र० सू० भा० २। २।४।१०। १८. ब्र० सू० भा० ३।२।४।१०।

प्रथमे वयसि नाधीतं द्वितीये नार्जितं धनम् ।
तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति ॥[१]

आयुर्वेदे त्रिधा चतुर्धा वा--कालप्रमाणविशेषापेक्षिणी हि शरीरावस्था······ त्रिविधं बालं मध्यं जीर्णमिति ।[२]

साहित्ये कामावस्था दशधा –

दृङ्मनःसङ्गसंकल्पा जागरः कृशता रतिः ।
ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ॥[३]

अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसम्प्रलापाश्च ।
उन्मादोऽथ व्याधिर्जडता मृतिरिति दशाऽत्र कामदशाः ॥[४]

योगवासिष्ठे[५] जीवस्य सप्तावस्था –

बीजजाग्रत्तथा जाग्रन् महाजाग्रत्तथैव च ।
जाग्रत्स्वप्नस्तथा स्वप्नः स्वप्नजाग्रत् सुषुप्तकम् ॥

तथा मनसस्तिस्रोऽवस्थाः – जाग्रत्स्वप्नसुषुप्त्याख्यं त्रयं रूपं हि[६] ।

व्याकरणे त्रिधा द्विधा वा – 'वयसि[७] प्रथमे' सूत्रे 'ये त्रीणि वयांसीच्छन्ति कौमारयौवनस्थविराणि, यदा तु द्वे एव वयसी उपचयापचयलक्षणे' इति प्रदीपः ।

शैवागमे त्रिधा पञ्चधा वा –

जाग्रत् स्वप्नः सषुप्तं च तुर्यं च तदतीतकम् ।
इति पञ्च पदान्याहुरेकस्मिन् वेदके सति ॥[८]

जाग्रत्स्वप्नसुषुप्तभेदे तुर्याभोगसंवित्[९] ।

पुराणेषु त्रिधा –

जाग्रत्स्वप्नसुषुप्तञ्च माया त्रिपुरमुच्यते ।
अत्रैवान्तर्गतं सर्वं शाश्वतेनाद्वये पदे ॥[१०]

---

१. कौमुद्याः २७३ पृष्ठे त० बो० टीकायामुद्धृतौ । २. च० वि० स्था० ८।१२२ ।
३. रतिरहस्ये । ४. सा० द० ३।२१८ ५. ३।११७।१२ । ६. यो० वा० ६/२ । १२४।३३ ।
७. पा० सू० ४।१।२० । ८. तन्त्रा० १०।२२८-२२९ । ९. शि० सू० वा० १।७ ।
१० ग० पु० २२८।४ ।

'जाग्रत्स्वप्न सुषुप्तञ्च मायया परिकल्पितम्'[१]

लक्ष्मीतन्त्रे चतुर्धा –

जाग्रत्स्वप्नौ सुषुप्तिश्च तुर्यञ्चेति चतुष्टयम् ।[२]

ज्योतिःशास्त्रानुसारन्तु बालादि-जाग्रदादि-दीप्तादि-लज्जितादि-शयनाद्यवस्था-भेदेन पञ्चधा त्रिधा नवधा षड्धा द्वादशधा भेदा वर्त्तन्ते । ते सर्वे ज्योतिःशास्त्रानुसारीयस्वप्नविचारे स्पष्टा भविष्यन्ति ।

एवं विविधव्याख्याने सत्यपि लोकप्रसिद्धां वेदान्तनयप्रतिपादितां

**"न जाग्रन्न मे स्वप्नको वा सुषुप्ति र्न विश्वो न वा तैजसः प्राज्ञको वा ।**
**अविद्यात्मिकत्वात् त्रयाणां तुरीयस्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥[३]"**

पद्धतिमादाय तत्रापि अप्रसिद्धत्वादलौकिकत्वाच्च तुरीयामुपेक्ष्य त्रिविधात्मिकामेव सरणिं विवेचयिष्ये ।

तत्रेदृगवस्थात्वन्नाम प्रमातृरूपायाः संविदस्तत्तत्प्रमेयोपहितं तत्तत्साधारण्यासाधारण्यादिप्रयुक्तं यद् वैचित्र्यं तद् जाग्रदाद्यवस्थाशब्दव्यपदेश्यम् । तथा चोक्तं तन्त्रालोके –

**अत्रैवाध्वनि वेद्यत्वं प्राप्ते या संविदुद्भवेत् ।**
**तस्याः स्वकं यद् वैचित्र्यं तदवस्थापदाभिधम् ॥[४]**

## जाग्रन्निरूपणम्

तत्र प्रथमोपस्थिता जागरणावस्था लोकप्रसिद्धा सर्वविदिता, सैव जाग्रद्वृत्तिपदवाच्यापि वर्तते 'जागृ निद्राक्षये'[५] धातोर्भावे[६] ल्युटि निष्पन्नो जागरणशब्दः कोशाद्युपलब्धानामेकार्थवाचिनां[७] जागर-जागरित-जागर्ति-जागर्या-जागरा-जाग्रिया-जाग्रदादिशब्दानामेकप्रकृतिकानां भावे घञि[८] क्ते[९] क्तिनि[१०] क्यपि[११] शे[१२] कर्तरि शतरि[१३] जातानां भिन्नभिन्नलिङ्गानां पर्यायतां परिवहन् निद्राक्षयेऽर्थे लोके शास्त्रे च

---

१. ग० पु० २२८।१५ । २. २२।२२ । ३. सि० वि० ३४८ पृ० । ४. १०।२२७-२२८,। ५. सि० कौ० अ० प० से० १०७२ । ६ ल्युट्च ३।३।११५ । ७. अमरकोशे ३।८।६४ तत्रैव तट्टीकायां मुकुटः, तथा हेमचन्द्रादावपि । ८. पा० सू० ३।३।१८ । ९. पा० सू० ३।३।११४ । १०. पा० सू० ३।३।९४ । ११. जागर्तेरकारो वा० वा० ३।३।१०१ । १२. पा० सू० ३।१।६६ । १३. ३।२।१२४ पा० सू० । अत्र ७।३।८५ तथा ७।४।२८ सूत्रेऽपि द्रष्टव्ये ।

व्यवह्रियमाणोऽन्तःकरणस्य कृत्स्नवस्तुप्रकाशात्मके वृत्तिभेदेऽप्यस्ति। यद्यपि कर्तरि शतृप्रत्यये जाग्रच्छब्दो जागरणविशिष्टार्थवाची एव भवितुमर्हति, तथापि जागरणपर्यायत्वेनास्य बाहुल्येन प्रयोगदर्शनात् जागरणार्थोऽप्यस्ति। प्रायो हि सर्वत्र जाग्रत्पदेनैषाऽवस्था व्यवह्रियमाणा दृश्यते।

सा चैषा जाग्रदवस्था सकलानुभूताप्यधुना शास्त्रीयरीत्या निरूप्यते— 'इन्द्रियैरर्थज्ञाने स्वप्नदर्शनहेतुकर्मक्षये च जागरितमागच्छन् स्वकीयाध्यन्तःकरणेन्द्रियसचिवस्तत्तदिन्द्रियविषयाननुमेयांश्च स्थूलान् व्यावहारिकान् सर्वाननुभवति, यत्रावस्थायां तज्जागरितमित्युच्यते' इति वेदान्तिमतम्। तथाहि — 'इन्द्रियैरर्थोपलब्धिर्जागरणम्'[१] इति। 'इन्द्रियवृत्तिकालीनोऽर्थोपलम्भो जागरणम्'[२] इति। 'तत्र जाग्रद्दशा नामेन्द्रियजन्यज्ञानावस्था'[३] इति।

जीवधातुः शरीरेऽन्तर्विद्यते येन जीव्यते।
तेजो वीर्यं जीवधातुरित्याद्यभिधमङ्ग यत्॥

व्यवहारी यदा कायो मनसा कर्मणा गिरा।
भवेत्तदा मरुन्नुन्नो जीवधातुः प्रसर्पति॥

तस्मिन् प्रसर्पत्यङ्गेषु सर्वा संविदुदेति हि।
ईक्षणादिषु रन्ध्रेषु प्रसरन्ती बहिर्मयम्॥

नानाकारविकाराढ्यं रूपमात्मनि पश्यति।
स्थिरत्वात्तत्तथैवाथ जाग्रदित्यवगम्यते॥[४]

निद्रानाशोत्तरं जायमानो बोधो विबोधः। इति[५]

इयमेवावस्था बोधविबोधप्रबोधावबोधपदवाच्या। अस्यामवस्थायां चिदाभासयुक्ता बुद्धिर्नखाग्रपर्यन्तं वर्तमाना शरीरं व्याप्य तिष्ठति। सैषावस्था जीवकल्पिता। तदुक्तं पञ्चदश्याम्—

ईक्षणादिप्रवेशान्ता सृष्टिरीशेन कल्पिता।
जाग्रदादिविमोक्षान्तः संसारो जीवकल्पितः॥[६] इति।

---

१. पञ्चीकरणग्रन्थे भाष्यकारवचनम्। २. सि वि०; पृ० ३६८। ३. वे० प०, पृ० १८३ विषयप्रकरणे। ४. यो० वा० ४।१९। १५-१६। ५. रसगङ्गाधरे १०७ पृ०। ६. चि० दी० १३।

तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयम्[१] ...इति। "स एव जीवः स्वपिति प्रबुद्धः[२]" इति।

स्वस्वप्नमापरोक्ष्येण दृष्ट्वा पश्यन् स्वजागरम्।
चिन्तयेदप्रमत्तः सन्नुभावनुदिनं मुहुः ॥[३]

अपि च। 'ईक्षे शृणोमि जिघ्रामि आस्वादयामि स्पृशामि अहम्' इत्याद्यनुभव एव प्रमाणं जीवस्य जागरणे।

अन्यत्राप्येवं वर्णितम् –

य आनन्दमयः सुप्तौ स विज्ञानमयात्मताम्।
गत्वा स्वप्नं प्रबोधं वा प्राप्नोति स्थानभेदतः ॥[४]

तत्र च मूर्तं विराडाख्यं भोग्यं प्रत्यक्षादिप्रमाणषट्केन व्यवह्रियमाणत्वाद् व्यावहारिकं विश्वाख्येन जीवेनोपभुज्यते। स च मूर्तभोक्ता जीवो देहेन्द्रियादिषु प्रवेशाद् व्यापनाद् वा विश्व इत्युच्यते। विश प्रवेशने, विष्लृ व्याप्तौ चेति स्मरणात्।

अत्र च यद्यपि विश्वेनामूर्तम् (स्वाप्नं वस्तु) अव्याकृतम् (सौषुप्तम्) चानुमानादिनानुभूयते, तथापि व्यावहारिकम् (व्यवहारक्षममर्थक्रियाकारितायोग्यम्) सर्वं विश्वेनैव ज्ञायते इति नियमात् स्थूलशरीरोपाध्यभिमानित्वाच्च न तस्यावस्थान्तरव्यापकत्वम्, शुक्तिरजतादिज्ञानानामप्रमाणिकत्वात्। तद्विषयस्याव्यावहारिकत्वेऽपि इन्द्रियव्यापारकालीनत्वाज्जागरणत्वोपपत्तिः। एतेन जाग्रदवस्थाभिमानी जीवो विश्वपदवाच्यो भवतीति निश्चितम्। आत्मनोऽवस्थानुकारि चातुर्विध्यं प्रथमादिपादैरुपपादितं माण्डूक्ये नृसिंहोत्तरतापिन्यां च। तत्र प्रथमपादो विश्वो द्वितीयो तैजसस्तृतीयश्चतुर्थस्त्वेकरसः। सिध्यत्यनेन यज्जाग्रदवस्थाभिमानी आत्मा विश्वः। गुणगुणिनोरभेदाज्जाग्रदपि विश्वः।

माण्डूक्ययोपनिषदि—'जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः प्रथमःपादः[५]।' अस्यायं भावः—जागरणकालिको वैश्वानराख्य आत्मा प्रथमपादात्मको मूर्धचक्षुष्प्राण संदेहवस्तिपादमुखैरङ्गैः सप्तभिरुपेतो विषयव्यापृतबुद्धया पञ्चज्ञानेन्द्रियपञ्चकर्मेन्द्रियपञ्चप्राणमनोबुद्धयहङ्कारचित्तरूपैरेकोनविंशतिमुखैः स्थूलान् विषयान् भुङ्क्ते। तस्यात्मनो मूर्धा एव द्युलोकस्तथा चक्षुरेव

---

१. ऐ० उ० ३।१२, वस्तुतस्तु एतत्त्रयमपि मायामात्रमेव केवलमात्मैव सत्यम् इतिवर्णितम्, नृ० सिं० ता० उ० १।१०। २. कै० उ० १।१४। ३. प० द० चि० दी० प्र० १७२। ४. प० द० यो० प्र० ९०। ५. मा० उ० ३।

सूर्यः, प्राण एव वायुः, संदेहः ( देहस्य मध्यभागः ) एव आकाशः, वस्तिः (मूत्रस्थानम्) अन्नम्, पादावेव पृथिवी, मुखमेवाग्निः ।

तथा च श्रुतिः—तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो वस्तिरेव रयिः पृथिव्येव पादौ ।'

अधिकन्तु भाष्यादध्यवसेयम् ।

नृसिंहोत्तरतापिन्यां प्रथमखण्डे—जागरितस्थानः स्थूलप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुक् चतुरात्मा विश्वो वैश्वानरः प्रथमः पादः[1] ।'

अस्याप्यर्थो माण्डूक्यवज्ज्ञेयः ।

अधिकस्त्वयम्—एकैकस्यामवस्थायां स्वाविद्यापदस्थूलांशप्रविभक्तव्यष्ट्यादिस्थूलसूक्ष्मबीजार्धमात्रांशानुयोगतो विश्वविश्व-विश्वतैजस-विश्वप्राज्ञ-विश्वतुर्यभेदेन आत्मानो यस्य स चतुरात्मा विश्वः । तच्चात्मनश्चातुर्विध्यं जाग्रदवस्थाभेदस्वीकारं विना नोपपद्यते, उपाधिं विना उपधेयासंभवात् । अतो जाग्रदवस्थाभिमानिन आत्मनश्चातुर्विध्यात् जाग्रदवस्थापि चतुर्विधा-जागरणजागरण-जागरणस्वप्न-जागरणसुषुप्ति-जागरणतुर्यभेदात् । तत्र जाग्रदवस्थायां यदा प्रमाता स्मरणादिव्यापृतिविरलो भूत्वा केवलचक्षुरादीन्द्रियद्वारा रूपादि विषयाननुभवति, तदा जागरणजागरणम् । अस्या अवस्थाया व्यष्ट्या अभिमानी आत्मा विश्वविश्वो भवति तत्समष्ट्यभिमानी आत्मा विराड्विराट् भवति । व्यष्टिसमष्ट्यैक्याभिमानी ओत्रोता[क] भवति । यदा चक्षुरादिनैरपेक्ष्येण मनसैव विषयान् गृह्णाति, तदा जागरणस्वप्नः । तदा नेत्रादिव्यावृतिसत्त्वासत्त्वाभ्यां निर्व्यापृतिर्न निद्रातः । तद्व्यष्ट्यभिमानी आत्मा विश्वतैजसः । तत्समष्ट्यभिमानी विराट्सूत्रम् । उभयैक्याभिमानी आत्मा ओत्रनुज्ञाता भवति । यदा चक्षुरादिना मनसा रूपादिना वा आत्मानं न प्रतिपद्यते, केवलमचेतन इव तिष्ठति, तदा जागरणसुषुप्तिः । नेयमचेतना स्वापजन्या, अपितु निर्व्यापारत्वादेव । तद्व्यष्ट्यभिमानी विश्वप्राज्ञः, समष्ट्यभिमानी विराडीश्वरः, ऐक्याभिमानी ओत्रनुज्ञैकरसः । यदा आचार्योपदेशात् पुण्यपाकद्वारा सामान्यविशेषमलभमानः समाध्यधिरूढ इव साक्ष्यहमस्मीति भासते, तदा जागरणतुर्यम् । तद् व्यष्ट्यभिमानी विश्वतुरीयः, समष्ट्यभिमानी विराट्तुरीयः, ऐक्याभिमानी ओतृतुरीयः ।

---

१. नृ० ता० उ० ६

क. उङ्शब्दे वा० ९५४ धातोस्तृचि सति निष्पन्न ओतृशब्दः शैवागमानुसारेण तत्तदवस्वस्थापन्नस्यात्मनः क्रमश ओत्रोता, ओत्रनुज्ञाता, ओत्रनुज्ञैकरसः ओतृतुरीयः, इति सञ्ज्ञामभिधत्ते ।

जाग्रदवस्थैव विश्वमित्युक्तं परमार्थसारे – 'जाग्रद् विश्वं भेदात्[1] ।

अस्यायं भावः – जाग्रदवस्थैव विश्वं ब्रह्मणो वैराजं स्वरूपम्, कुतः ? भेदात् । शब्दादिविषयपञ्चकस्य बाह्यतया परमेश्वरसृष्टस्यैव सर्वप्रमातॄणां चक्षुरादीन्द्रियप्रवृत्तेरिति एकस्यैव ब्रह्मणो विषयविषयिभावेन स्थितस्य नानेन्द्रियज्ञानवैचित्र्यम् । अत एव शिवसूत्रेषु –

'ज्ञानं जाग्रत्[2] ।
तन्त्रालोकेपि संवेदनगतं वेद्यं तज्जाग्रत् समुदाहृतम्[3] ।

सा जाग्रदवस्था त्रिविधैवेति मन्यन्ते केचनाचार्याः[4] । तत्र प्रथमा जाग्रज्जाग्रत् । यथा प्रमाज्ञानम् । द्वितीया जाग्रत्स्वप्नाख्या । यथा शुक्तिरजतादिविभ्रमः । तृतीया जाग्रत्सुषुप्तिः – यथा श्रमादिना स्तब्धीभावः । अस्यामवस्थायां जीवो न केवलमेकस्मिन् स्थानविशेषे तिष्ठति, अपितु सम्पूर्णं देहं व्याप्य जागर्ति । तदुक्तं योगानन्दे –

नेत्रे जागरणं कण्ठे स्वप्नः सुप्तिर्हृदम्बुजे ।
आपादमस्तकं देहं व्याप्य जागर्ति चेतनः[5] ॥

अत्र नेत्रशब्दस्य कृत्स्नदेहस्योपलक्षणपरत्वम्, अन्यथोत्तरार्धस्य व्यर्थत्वात् । एवमन्योपनिषदुक्तस्थानविशेषस्यापि ज्ञेयम् । आग्रहे तु विशेषरूपेण तत्तत्स्थानेषु निवसतिरित्येव बोध्यम् ।

शैवागमे तु – बाह्याभ्यन्तरजन्यज्ञानोपेता जाग्रदवस्था चिदात्मनो ग्रहीतृग्रहणग्राह्यरूपज्ञानशक्तिस्फुरणं वा तदुक्तम्— 'ज्ञानं जाग्रत् ।[6]

बौद्धं गार्वं च सांकल्पं शाब्दं स्पार्शं च रूपजम् ।
रसजं गन्धजं चान्यदैन्द्रियज्ञानमेव यत् ॥

अत्र ग्रहीतृग्रहणग्राह्यरूपा चिदात्मनः ।
स्फुरत्येव ज्ञानशक्तिर्जाग्रद्वृत्तिरिहैव सा ॥

---

१. ३५ । २. १।८ । ३. १०।२३१ । ४. सि० वि० ४३७ पृ० । ५. ग० द० यो० प्र० ९१ । ६. शि० सू० ८ ।

पशोः स्वरूपहान्यैव सा वृत्तिः परिभाष्यते[१] ।

सैषा जाग्रद्वृत्तिः स्वात्मव्यवधायिनी यतीनां तु स्वरूपस्फूर्तिदायिनी ।

प्रत्यभिज्ञाकारादयो ह्येत्थं कथयन्ति —

तत्राक्षवृत्तिमाश्रित्य बाह्याकारग्रहो हि यः ।
तज्जाग्रत्स्फुटमासीनमनुबन्धि पुनः पुनः[२] ॥

सर्वाक्षगोचरत्वेन या तु बाह्यतया स्थिरा ।
सृष्टिः साधारणी सर्वप्रमातॄणां स जागरः[३] ॥

जाग्रत्स्वरूपविवेचने मतभेदेऽपि तात्पर्यमेकत्रैवावसीयते । तदुक्तम्—

यस्य यद् तत् स्फुटं रूपं तज्जाग्रदिति मन्यताम्[४] ।

यदा प्रमेय ज्ञानगत तज्जाग्रदवस्थापददवाच्यम् संकल्पाद्यात्मनि ज्ञाने यत् किञ्चिन्नीलादितादात्म्येन भासते तदेवेत्यर्थः । अस्यां ह्यवस्थायां प्रमातृप्रमाणप्रमेय-प्रमात्मकं चतुष्टयमधिष्ठेयरूपमेव भवति । यथा हि—चैत्रपदार्थे भासमाने यो देहांशः स प्रमेयांशः, यतो हि स देहो भौतिक,: अतः प्रमेयरूपः, स एवाबुद्ध इति कथ्यते । प्राणादिसंस्पर्शेनैव शरीरस्य चेतनामयत्वं संजायते, नान्यथा । ज्ञानकर्ता प्रमात्रंशः, स एव प्रबुद्धः कथ्यते; यतो हि प्रमाता बुद्धयादिरूप एव भवति । प्रमामात्रं हि प्रमित्यंशः ।

लौकिकस्य पिण्डस्थनाम्नो जाग्रतश्चातुर्विध्यन्तु अबुद्ध-बुद्ध-प्रबुद्ध-सुप्रबुद्धभेदेन भवति । एतदेव चतुष्टयं जाग्रज्जाग्रत्, जाग्रत्स्वप्नः, जाग्रत्सुषुप्तिः, जाग्रत्तुर्यम्— इति नामभिः कीर्त्यते । तदुक्तं मालिनीविजये

चतुर्विधन्तु पिण्डस्थमबुद्धं बुद्धमेव च ।
प्रबुद्धं सुप्रबुद्धं च····································[५]॥ इति

जाग्रतो हि नामद्वयं पिण्डस्थः सर्वतोभद्र इति । उक्तञ्चैतन्मालिनी-विजये—

---

१. शि सू० वार्तिके ३८-४० । २. त० आ० १०।२८९ । ३. ई० प्र० ३।२।१७ ।
४. त० आ० १०।२९४ । ५. २।४३ ।

पिण्डस्थः सर्वतोभद्रो जाग्रन्नामद्वयं मतम्[१]। विस्तरेण तन्त्रालोके दशमाह्निके २३१ श्लोकादारभ्य प्रतिपादितं तत्, सर्वं जिज्ञासुभिस्तत्रैव द्रष्टव्यम्।

अस्यामवस्थायां मेयभूमिरेव मुख्या जाग्रदवस्था। इयं पिण्डस्थनाम्नी लौकिकी संज्ञैव योगिनामपि जाग्रतः संज्ञाऽस्ति। ज्ञानिनां तु सर्वतोभद्रमेव जाग्रतः संज्ञा। परमेश्वरस्येयमेव जाग्रदाद्यवस्था द्विधा शक्तिरुच्यते परा, अपरा चेति। तत्र तुर्यात्मा संवित् परा, जाग्रत्स्वप्नौ-अपरा, सुषुप्तं च पराऽपरा।

मतभेदेन जाग्रतः स्वरूपं त्वेतत्—

> तत्राक्षवृत्तिमाश्रित्य बाह्याकारग्रहो हि यः।
> तज्जाग्रत्स्फुटमासीनमनुबन्धि पुनः पुनः[२]॥

यन्नाम बाह्यत्वात् सर्वप्रमातृसाधारणस्यार्थस्य सर्वाक्षगोचरतया ग्रहणं तज्जागरमिति। तच्चार्थस्य बाह्यत्वादेव स्फुटमासीनं स्पष्टावभासतया तिष्ठत्' अत एव बाधानुदयात् पुनः पुनरनुबन्धि स्फुटं स्थिरार्थविषयम् इति।

शैवपरिभाषायां तु[३]—आत्मनः शुद्धकेवलसकलेति त्रिविधावस्थामुपवर्ण्य सकलावस्थातः केवलावस्थाप्राप्तिसमये जाग्रदादिपञ्चविधोऽवस्थाभेदः प्रदर्शितः। 'अवस्थाभेदोपेत आत्मा पशुरिति गीयते। तत्र जाग्रदवस्था द्विधा—सप्रतिभा, अप्रतिभा चेति। नादादिपृथिव्यन्तषट्त्रिंशत्तत्त्वैः सह यदा ललाटस्थः सर्वान् विषयाननुभवति तदा सप्रतिभा जाग्रदवस्था। तदुक्तं सिद्धान्तसारावल्याम् –

बाह्यान्तःकरणैरणोः स्वविषयज्ञानं तु जाग्रत् ततः[४]।

सैव सकलावस्था। विषयभोजकादृष्टाभावेन प्रेरकाणि शुद्धानि पञ्चतत्त्वानि भोजयितृकाणि सप्ततत्त्वानि पञ्चमहाभूतानि च। एतेषु सप्तदशसूपरतेषु श्रोत्रादीनि पञ्च, वागादीनि पञ्च, मनोबुद्धि-अहङ्कारचित्तानि तत्त्वानि शब्दादीनि पञ्च, तात्त्विकानि वचनादीनि पञ्च, प्राणादीनि दश चेत्येतैः सह क्षेत्रज्ञनामक आत्मा पञ्चत्रिंशो यदा मुखे तिष्ठन्नपि प्रेरकभोजयितृकाण्डयोर्निर्व्यापारत्वेनाणवातिशयाज्जाग्रदपि विषयान् सम्यङ् न जानाति, तदाऽप्रतिभाजाग्रत्।

---

१. २।३६। २. त० आ० १०।२८९। ३. पृ० ६२-६४। ४. यो० वा० ८ श्लोकः।

एवमात्मनो निर्मलजाग्रदादयोऽनुपपद्यन्ते। तत्र—अकारोकारबिन्दुनादाधिष्ठातृ-शिवशक्तियोगेन निर्मलान्तःकरण आत्मा हृदये तिष्ठन् सर्वं दृश्यमानं प्रपञ्चं शिवाकारतया वैषयिकसुखं च स्वरूपानन्दतयाऽनुभवति। तन्निर्मलजाग्रत्। तदुक्तं सिद्धान्तबोधे—

जाग्रत् कारणमेवार्णयोगसंवेदनं हृदि।
उभयेन्द्रियवृत्त्याथ लीनमाकारवेदनम् ॥

इत्थं जाग्रदवस्था त्रिधा व्याख्याता—सप्रतिभा-अप्रतिभा-निर्मल-भेदादिति। विवेचितञ्चैतत् सम्यक् शैवपरिभाषायाम्[१]।

योगवासिष्ठे जीवस्य सप्तावस्था अप्युक्ता बीजजाग्रद्जाग्रन्महाजाग्रज्जाग्रत्स्वप्न-स्वप्नस्वप्नजाग्रत्सुषुप्तभेदात्। तदुक्तम्—

बीजजाग्रत्तथा जाग्रन्महाजाग्रत्तथैव च।
जाग्रत्स्वप्नस्तथा स्वप्नः स्वप्नजाग्रत् सुषुप्तकम्[२] ॥

तत्र जाग्रदवस्था बीजजाग्रत्-जाग्रत्-महाजाग्रत्-जाग्रत्स्वप्नभेदेन चतुर्विधा। सृष्ट्यादौ निर्मलं यच्चैतन्यं भाविजीवादिनामभाजनं जाग्रदवस्थाया बीजरूपं बीजजाग्रदिति। नवप्रसूतस्य जीवस्य 'अहमिदं ममेदम्' इति ज्ञानं पूर्वकालिकस्मृति-विहीनं जाग्रदिति। पूर्वजन्मान्तरोदितदृढप्रत्ययः 'अहमिदं ममेदम्' इति महाजाग्रदिति। मनोराज्यं जाग्रत्स्वप्न इति। एतत् सर्वं विस्तरेण तत्र प्रतिपादितम्[३]।

लक्ष्मीतन्त्रे—'जाग्रद् बाह्येन्द्रियक्रमः' इति निरूपयताऽवस्थाचतुष्टयं च प्रति-पादयता जाग्रतो भेदः कश्चन न वर्णितः[४]।

पैङ्गलोपनिषदि—तत्तद्देवतानुग्रहान्वितैः श्रोत्रादिज्ञानेन्द्रियैः शब्दाद्यर्थ-विषयग्रहणज्ञानं जाग्रदवस्था भवति। तत्र भ्रूमध्यगतो जीव आपादमस्तकं व्याप्य कृषिश्रवणाद्यखिलक्रियाकर्ता भवति। तत्तत्फलभुक् च भवति। लोकान्तरं गतः कर्मार्जितफलं स एव भुङ्क्ते। स सार्वभौमवद् व्यवहाराच्छ्रान्त अन्तर्भवनं प्रवेष्टुं मार्गमाश्रित्य, तिष्ठति[५]। अत्र अन्तर्भवनपदेन स्थूलशरीराभ्यन्तरेति गृह्यते।

---

१. पृ० ६२, ६३, ६४। २. यो० वा०, ३।११७, १४। ३. यो० वा० ३।११७, १३-१९। ४. २२, १०-२६। ५. २, ११।

शारीरकोपनिषदि – ज्ञानेन्द्रियकर्मेन्द्रियान्तःकरणचतुष्टयं चतुर्दशकरणयुक्तं जाग्रत् इति[१]।

सर्वसारोपनिषदि –मनआदिचतुर्दशकरणैः पुष्कलैरादित्याद्यनुगृहीतैः शब्दादीन् स्थूलान् यदोपलभते, तदात्मनो जागरणम्[२]।

एष जाग्रदनुभवः स्थूलकोशे एव भवति।

लौकिकव्यवहारान् या प्रवर्तयति भूतले।
सा जागर्तिदशाऽऽख्याता परिच्छेदेऽत्र सुस्फुटम्॥

---

१. शा० उ० १४। २. १।

# सुषुप्तिनिरूपणम्

यत्राविद्यात्मिका वृत्तिरानन्दानुभवस्तथा ।
तां सुषुप्तिदशां वच्मि विद्वज्जनमनोमुदे ।।

जगति कियता कालेन नानाक्लेशादिरहितमानन्दं दैनन्दिनमनुभवतां समेषां प्राणिनां नित्यप्रलयरूपा सुषुप्तिः परिचितैवास्ति ।

तस्यामवस्थायामिन्द्रियमनोलये सति बाह्यवस्तूनां भानाभावेन धर्माधर्म-संस्कारवासनादिविशिष्टः स्वं रूपमवाप्तः सूक्ष्मयाऽविद्यावृत्त्या स्वरूपानन्दमनुभवन् सुषुप्तिकालं यावत् सुखं शेते। सा च सुषुप्तिः का, कस्य, कथं वा जायत इति विचारपथथमारूढानां समेषां क्रमेण निरूपणं क्रियते ।

'सुषुप्तिस्तु[1] जाग्रत्स्वप्नातिरिक्तोऽवस्थाविशेषः। तथा चोक्तं मधुसूदनेन— "जाग्रत्स्वप्नभोगद्वयेन श्रान्तस्य जीवस्य तदुभयकारणकर्मक्षये ज्ञानशक्त्यवच्छिन्नस्य सवासनस्य अन्तःकरणस्य कारणात्मनावस्थाने सति विश्रामस्थानं सुषुप्त्यवस्था"[2] इति। "मनोऽवच्छिन्नस्य जीवस्य ब्रह्मणो वा स्वप्नाध्यासोपादानत्वे मनोलयसहितं तद्विषयकमवस्थानं सुषुप्तिः, शुद्धब्रह्मण एव तदुपादानत्वे तद्विषयकमूलाज्ञानमेव मनोलयसहितं सुषुप्तिर्वा" इति गौडब्रह्मानन्दः[3] सर्वस्य स्थूलसूक्ष्मोपाधेः कारणोपाधौ लीनत्वं सुषुप्तित्वम्" इति सदानन्दः[4]

---

१. उपनिषत्स्वेवमस्याःस्वरूपम् – 'चित्तैककरणा सुषुप्तिः' शारीरकोपनिषद् १४। 'चतुर्दशकरणोपरमाद् विशेषविज्ञानाभावाद् यदा शब्दादीन्नोपलभते तदात्मनः सुषुप्तम्' ...सर्वसारोपनिषद् ४। 'चित्तैककरणा सुषुप्त्यवस्था भवति। भ्रमविश्रान्तशकुनिः पक्षौ संहृत्य नीडाभिमुखं यथा गच्छति, तथा जीवोऽपि जाग्रत्स्वप्नप्रपञ्चे व्यवहृत्य श्रान्तोऽज्ञानं प्रविश्य स्वानन्दं भुङ्क्ते" पैङ्गलोपनिषद् २।१३।

२. सि. वि. ४१७ पृ० ना. ना० टी. युते। ३. सि. वि. टीका ४१७ पृ०। ४. अद्वैतब्रह्म सिद्धौ।

"सुषुप्तिर्नाम अविद्यागोचराविद्यावृत्त्यवस्था"[१] इति वेदान्तपरिभाषा। "यत्र सुप्तो न कश्चन कामं कामयते तत्सुषुप्तम्, इति श्रीविद्यातारकोपनिषद्[२] निद्राविभावोत्थज्ञानं सुप्तमिति रसगङ्गाधरः[३]।

अस्यामवस्थायां प्राणान् विहाय इन्द्रियाहङ्कारमनोवासनादीनामविद्यायां स्वकारणोपाधौ लयो जायते। दृष्टिसृष्टिवादे तु समेषां लयो भवतीति विशेषः। व्यावहारिक-प्रातिभासिकज्ञानानामभावो वर्तते, इन्द्रियादीनामभावात्। प्रियमोदादि-वृत्तिसहकृताविद्यावृत्तिमलिनसत्त्वरूपानन्दस्य नित्यानुभवस्वरूपस्य साक्षिचैतन्यस्य सुषुप्तिकालीनभावरूपाज्ञानस्य च सत्ता वरीवर्ति, सुप्तोत्थितस्य तादृशपरामर्शोदयात्। तत्र हि संस्कारापन्नजाग्रत्-स्वप्नविषयकज्ञानाकारं सुखाकारं साक्ष्याकारमिति निर्विकल्पमविद्यावृत्तित्रयमुपलभ्यते, नत्वज्ञानविशिष्टसाक्षित्रिविषयिका सुखाभिन्नसाक्षि-विषयिका वेति समूहालम्बनात्मिका वृत्तिः, तदानीमहङ्काराभावात्। संसर्गविषयक-वृत्तावहङ्कारस्यैव हेतुत्वात्।

नैयायिकमते तु तत्र निर्विकल्पस्याप्यभावः, जन्यज्ञानमात्रे करणमनोयोगस्यैव हेतुत्वात्। तदानीं सुखसाक्ष्यज्ञानानामनुभवो नान्तःकरणवृत्त्या, तत्र तदभावात्। नापि चैतन्येन, नित्यस्य चैतन्यस्य सस्कारानुत्पादकत्वात्। तथा सति सुप्तोत्थितस्य संस्कारमूलकस्तादृशपरामर्शो न सिद्ध्येत्। किन्तु सुषुप्तौ सुखसाक्ष्यज्ञानग्राहक-वृत्तित्रयाकारेण केवलमविद्यैव परिणमते। तदविद्यावृत्त्यवच्छिन्नाश्चैतन्याभासास्तदा सुखादित्रयमनुभूय प्रबोधे सति विनश्यन्ति, तत्संस्कारजन्या स्मृतिश्च जायते।

ननु सुषुप्तावविद्याविशिष्ट आत्माऽनुभविता, प्रबोधेऽन्तःकरणविशिष्ट आत्मा स्मर्ता, इति वैयधिकरण्येन जाग्रदवस्थायां स्मृतिर्न, अनुभवस्मरणयोः सामानाधि-करण्यनियमादिति चेन्न, उभयत्र अविद्याविशिष्टस्यैवाङ्गीकरात्। जागरणे ह्यात्मनः सविकल्पवृत्त्या परामर्ष्टुमन्तःकरणमात्मनि अहंशब्दसंसर्गं केवलमापादयति।

ननु यदि सुषुप्तावहङ्कारविलयोऽस्ति, तर्हि कथं परामर्शो 'अहम्' इत्युल्लेख इति चेच्छृणु विलीनोऽप्यहङ्कारो जागरे पुनश्चोत्पद्य तादृशपरामर्शं कर्तुं यतमान-मात्मानं सविकल्परूपेण स्पष्टव्यवहाराय 'अहम्'इत्युल्लेखेनोपलक्षयति। एतदेव प्रयोजनमहङ्कारवृत्तेः। विहायैनां नान्योऽन्तःकरणवृत्तिभिरात्मा व्यवह्रियते। तदुक्तं

---

१. १८८ पृ०। २, ४७१ पृ० (संग्रहः)। ३. १०६ पृ०।

नैष्कर्म्यसिद्धौ[1]—

अत्यक्तत्वादतिसूक्ष्मत्वादात्मदृष्ट्यनुशीलनात् ।
अतो वृत्तिर्विहायान्या ह्यहंवृत्त्योपलक्ष्यते ॥

आत्माभावाविनाभावामथवा विलयं व्रजेत् ।
न तु पक्षान्तरं यायादतश्चाहंधियोच्यते ॥

वेदान्तकौमुदीकारस्तु[2]—सुषुप्तौ निद्रावस्थोपहितं स्वरूपचैतन्यमेव अज्ञान-सुखादिप्रकाशकम् । उत्थितस्यानुसन्धानमुपाधिभूतावस्थविनाशजन्यरूपसंस्कारेणेति नात्र अविद्यावृत्तिरित्यङ्गीकुर्वन्ति ।[3]

ननु 'सुषुप्ति[4]काले सकले विलीने' इति श्रुत्या आत्मनोऽप्यभानापत्तिरिति चेन्न, आत्मनः सुषुप्तिसाक्षित्वेनाङ्गीकारस्यावश्यकत्वात् । अन्यथा 'मूढोऽहमासम्' इति परामर्शानुपपत्तेः ।

ननु सुषुप्तौ क्लृप्तप्रामाण्यादिसामग्र्यभावात् कथमनुभव इति चेदुच्यते—तस्यामवस्थायां सामग्र्या अभावेऽपि अभावज्ञानसाक्षित्वेनात्मनो वर्तमानोपपत्तेः । तथाहि—यथा प्रतिकर्म-व्यवस्थायां देहस्थ-विषयस्थ-तदन्येषां मनोवृत्तिभागावच्छिन्न-चैतन्यानां प्रमातृ-प्रमिति-प्रमाणरूपत्वम्, तथा सुषुप्तौ मनोवृत्त्यभावेन प्रमाणाद्यभावेऽपि अविद्याविशिष्टा चित् ज्ञात्री, अविद्यावृत्त्यवच्छिन्ना चिज्ज्ञानम्, विषयोपहिता चिज्ज्ञेय-व्यक्तिः—इत्येवंरूपेण प्रमात्रादिसाधकोऽनुभवो निगदनीयः । न ह्यत्र केवलमविद्या-वृत्तिरनुभवो भवितुमर्हति, येन स्मृतिः संपद्येत । यतो हि सा स्वयमप्रकाशरूपा संदिग्धा च, अतः सुषुप्तिकालीनं विषयं न प्रकाशयति । सा च सुषुप्तिः कस्य कदा भवतीति जिज्ञासायां जीव एव मनसि क्लान्ते सति शेते इति ब्रूमः तदुक्तं चरके[5]—

---

१. नै. सि. ।

२.

३. सांख्यास्तु निद्रां वृत्तिमेव मन्यन्ते. तद् यथा—अन्तःकरणस्य प्रमाणादिवृत्तयस्तावदेव जाग्रति यावन्मनसो विषयावलम्बनं तिष्ठति, किन्तु अन्तःकरणे तमोगुणाधिक्यं प्रपद्यमाने वृत्तयोऽवलम्बनं जहति. तदा विषयाभावप्रत्ययीभूतकारणस्वरूपतमोगुणाश्रयेण यस्याः समुदयः सैव वृत्तिर्निद्रायां विषयसंबन्धाभावेऽपि 'सुखमहमस्वाप्सम् दुःखमहमस्वाप्सम्' मूढोऽहमस्वाप्सम्; इति स्मृतीनामनुभवसत्त्वाद् वृत्तिर्वर्तते, इत्यङ्गीकुर्वन्ति ।

४. कै० उ० १।१३ । ५. च० २१।८।८१ ।

यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः।
विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः' ॥ इति।

क्लमस्तु—

योऽनायासश्रमो देहे प्रवृद्धः श्वासवर्जितः।
क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः' ॥[१]

इति श्लोकेन सुश्रुते उक्तः।

मनसश्च क्लान्तिः स्वाधारभूतस्य हृदयस्य तमसावरणेन निमीलनाद् भवति। मनसः क्लमात् तदायत्तानां सर्वेन्द्रियाणां क्लमो भवति। अयमेवाभिप्रायः कैवल्योपनिषद्यप्युपवर्णितः—

'स एव माया परिमोहितात्मा शरीरमास्थाय करोति सर्वम्।
स्त्रियान्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति ॥
स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पितविश्वलोके।
सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ॥
पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स इति प्रबुद्धः ॥[२]

इत्यादिना।

बृहदारण्यकेऽपि प्रश्नोत्तराभ्यां जीवमेव सुप्तिकर्तृत्वेन निर्दिशति—

"स होवाच-अजातशत्रुर्यत्रैष एतत् सुप्तोऽभूद् य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत् कुत एतदागादिति। यत्रैष एतत्सुप्तोऽभूद् य एष विज्ञानमयः पुरुषस्तदेतेषां प्राणानां विज्ञानेन विज्ञानमादाय य एष अन्तर्हृदय आकाशस्तस्मिञ्छेते, तानि यदा गृह्णाति, अथ हैतत् पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति, गृहीता वाग् गृहीतं चक्षुर्गृहीतं मनः,[३] इति।

अतः प्राणादिवन्मनसोऽपि पुरुषगृहीतत्वान्न सुषुप्तिकर्तृत्वम्, अपि तु जीवस्यैव। बृहदारण्यके ४ अध्याये, ३ ब्राह्मणे ७ मन्त्रमारभ्य बहुषु मन्त्रेषु स्वप्नसुषुप्त्योरनुभविता

१. सु० सं० शा० स्था० ४।५१। २. कै० उ० १२-१४ श्लोकाः, प्रथमखण्डे।
३. बृ० उ० २।१।१७।

पुरुषो ज्योतिःस्वरूप एवोपवर्णितः। स च मनसि न संघटते। एवं माण्डूक्योपनिषद्यपि "अयमात्मा ब्रह्म सोऽयमात्मा चतुष्पाद्" इत्यादिना यथा निष्के चत्वारः कार्षापणाः पादत्वेन स्थिताः, तथैवास्य ब्रह्मणो वैश्वानर-तैजस-प्राज्ञ-तुरीयभेदेन चतुष्पात्त्वं प्रतिपाद्य सुषुप्तिस्थानस्य प्राज्ञस्य तृतीयपादरूपेण प्रतिपादनं कृतम्[१]। तथैव नृसिंहोत्तरतापिन्याः प्रथमखण्डेऽपि वर्णितम्[२]। अनेन स्पष्टमेवात्मनः सुषुप्तिकर्तृत्व – मुक्तं भवति।

अपि च—"स एव तु कर्मानुस्मृतिशब्दविधिभ्यः" इति सूत्रे[३] "तस्याः पुनः सत्संपत्तेः प्रतिबुद्ध्यमानः किं य एव सत्सम्पन्नः स एव प्रतिबुद्ध्यते उत स वाऽन्यो वेति चिन्त्यते" इत्युपक्रम्य "स एव जीवः प्रतिबुद्ध्यते" इत्युपसंहृत्यात्मके भाष्ये तदनुसारि-भामती-कल्पतरु-परिमलेषु च संभावितनिखिलपक्षानुपपाद्य श्रुतियुक्त्युपपत्तिभिः सम्यग् निरस्य जीवस्यैव सुप्तित्वं बोधत्वञ्च समर्थितम्। विस्तरत्वात्तन्नात्र प्रदर्शितम्।

यद्यपि "स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयते, एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा प्राणमेवोपाश्रयते" इति छान्दोग्यश्रुतेः[४] "यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः", इति शतपथब्राह्मणवाक्या[५]च्च मनसः सुप्तिकर्तृतया प्राणस्य च सुप्त्याधारतया च प्रतीतिर्भवति, तथापि पूर्वापरपर्यालोचनया प्रकरणाच्च अन्नोपचितषोडशकलात्मकान्तःकरणविशिष्टस्य जीवस्यैव तात्स्थ्येन मञ्चाक्रोशवदुपलक्षितत्वात्तत्र मनःस्थो जीव एवोपलक्ष्यते श्रुत्या, न तु मनसाऽन्तःकरणमुच्यते। एवं ब्रह्मणः प्रकरणात् प्राणशब्देन सर्वकार्यंकरणाश्रयेणोपलक्षिता सदाख्या परा देवता एवोच्यतेऽत्र, न तु प्राणवायुरिति। प्राणशब्दस्य परात्मनि व्यवहारः 'प्राणस्य प्राणं प्राणशरीरो भारूपः'[६] सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते"[७], प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति"[८] अथास्मिन् प्राण एवैकधा भवति"[९] इत्यादि श्रुतिषु दृश्यते। तथा भामत्यामपि[१०] "अथास्मिन् प्राणे ब्रह्मणि स जीव एकधा भवति'; इत्युक्तम्। तेन जीवब्रह्मणोरेव ऐक्यं सुप्तिदशायां समर्थितं भवति।

---

१. यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति, तत्सुषुप्तं सुषुप्तस्थान. एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः" ५ मा० उ०। २. नृ० ता० उ० १।२२८ पृ० (उपनिषद्संग्रहे)। ३. ब्र० सू० ३।२।९। ४. छा० उ० ६।८।२। ५. शत० ब्रा० १०।३।३।६। ६. छा. उ. ४।४।१८ । ७. छा. उ. १।११।५। ८. बृ. उ. ४।४।२। ९. कौ. उ. ४।१९। १०. ब्र. सू. ३।२।७।

तत्र "नाडीषु सुप्तो भवति"[१] "पुरीतति शेते"[२] *"अन्तर्हृदय आकाशस्तस्मिञ्छेते"[३]।

"अथास्मिन् प्राण एकैकधा भवति"[४] "स्वमपीतो भवति"[५] प्राज्ञेनात्मना संपरिष्वक्तः"[६] एभिर्विभिन्नश्रुतिवाक्यैः सुषुप्त्यधिकरणविषये अनेकधा विप्रतिपत्तौ सत्यां सिद्धान्तः प्रदर्श्यते।

कुक्षेरुपरितनो भागो वक्षसोऽधो हृदयं भवति। हृदयं नाम मांसपिण्डम्, तत्तु पुण्डरीकाकारम्, तेनैव कथ्यते लोके शास्त्रे च हृदयकमलमिति। तेनैव स्थितं ब्रह्म वीतरागैर्महर्षिभिरुपास्यते। एतदेव प्राणस्यायतनम्। तदुक्तम्—

**हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले।**
**उदानः कण्ठदेशे तु व्यानः सर्वशरीरगः॥**

अत्रैव स्थितो वायुर्मुखनासिकाभ्यां निष्क्रमणप्रवेशनाद् अर्थाच्छ्वासोच्छ्वासक्रियाभ्यां प्राणिति, अतः प्राणसंज्ञां लभते।

तत्तु हृदयं द्व्यङ्गुलात्मकं भवति जीवनाधायकस्य अष्टबिदुकल्पस्यौजसः परमं स्थानञ्च। तदुक्तं चरके[७] '**यावता हृदयं द्व्यङ्गुलञ्च**" इति, "**तत्परस्यौजसः स्थानं तत्र चैतन्यसंग्रहः**,[८] ' इति च।

**स्मृत्यन्तरेऽपि—**

**हृदि तिष्ठति यच्छुद्धरक्तमीषत् सपीतकम्।**
**ओजः शरीरे संख्यातं तन्नाशान्नाशमृच्छति'**॥ इति।

---

१. छा. उ. ८।६।३। २. बृ. उ. २।१।१९। ३. बृ. उ. २।१।१७।

* हृदयाकाशे सुषुप्त्यनुभवो भवति। तथा च श्रुतिः—"अथ यत्रैतद् दहरं पुण्डरीकं कुमुदमिवानेकधा विकसितं यथा केशः सहस्रधा भिन्नस्तथा हिता नाम नाड्यो भवन्ति हृदयाकाशे परे कोशे दिव्योऽयमात्मा स्वपिति, यत्र सुप्तो न कञ्चन-कामं कामयते, न कञ्चन स्वप्नं पश्यति, न तत्र देवा न देवलोका यज्ञा वा न माता न पिता न बन्धुर्न बान्धवो न स्तेनो न ब्रह्महा तेजस्कायममृतं सलिल एवेदं सलिलं वनं भूपस्तेनैव मार्गेण जाग्राय धावति सम्राडिति हो वाच" सुबालोपनिषद् ४ खं. ४।

४. कौ० उ० ४।१९। ५. छा० उ० ६।८।१। ६. बृ. उ० ४।३।२१। ७. च० सू०। ८. च० सू० १७।७४।

अन्यत्रापि –

**'प्राणाश्रयस्यौजसोऽष्टौ बिन्दवो हृदमाश्रिताः ।'** इति ।

यत्तु कुत्रचिदोजसोऽर्धाञ्जलिपरत्वं प्रसृतिपरत्वञ्चोक्तम्, तत्तु श्लेष्मौजस एव, न तु शुद्धस्यौजसः । तस्य स्थितिर्मस्तके वर्तते, न तु हृदि । मरणे हृदयस्थौजसः क्षयः, प्रमेहे श्लेष्मौजसः, एतस्य क्षये शरीरपातः सद्यो न सम्पद्यते ।

नन्वेतावता द्व्यङ्गुलं हृदयं तत्तु प्राणौजसोः स्थानञ्चेति सिद्धे सत्यपि कथम्—

**षडङ्गमङ्गं विज्ञानमिन्द्रियाण्यर्थपञ्चकम् ।**
**आत्मा च सगुणश्चेतश्चिन्त्यञ्च हृदि संस्थितम् ॥**

**प्रतिष्ठार्थं हि भावानामेषां हृदयमिष्यते ।**
**गोपानसीनामागारकर्णिकेवार्थचिन्तकैः ॥**

इति चरकोक्तं संगच्छते इति चेदुच्यते–न ह्यत्र षडङ्गादीनामाधाराधेयभावेन हृदयस्याश्रयत्वं विवक्षितम्, किन्तु हृदये प्रकृतिस्थे षडङ्गादीनां भावानां प्रकृतिस्थत्वम्, हृदयोपघाते तदुपघात इत्येवंरूपाभ्यामन्वयव्यतिरेकाभ्यामेव ।

यथा हृदयं प्राणादेराश्रयस्तथैव आत्मविज्ञानमनसामपि भवितुमर्हति । मानञ्चात्रोक्तचरकश्लोकोऽनुभवश्च । तद् यथा –यद्यप्यात्मनः सर्वव्यापकत्वाद्धृदयायतनत्वं नोपयुज्यते, तथाप्यत्र तादृश आत्मा नाभिप्रेतः, अपितु संसारीय आत्मा एवाभिप्रेयते । स च हृदयप्रदेशे एव सुखदुःखादुपपद्यते इत्यनुभवसिद्धम् । तेन हृदयाश्रित इवात्मा प्रतीयते । अतः प्रायेणात्मा हृद्येव तिष्ठतीति निश्चिन्मः । एवंभूतस्यैवात्मनो हृदयनाशान्नाश इति । अनयैव रीत्या उक्तचरकग्रन्थसंगतिरपि स्यात् ।

एवमुपरतक्रियं मनोऽपि हृद्येव तिष्ठति, अध्ययने योगे च हृदिस्थमेव भवति । **'आत्मस्थे मनसि स्थिरे'** इत्यत्रात्मशब्दो हृदयपर एव । एवं ज्ञानसुखदुःखानि च हृदयस्थान्येव लक्ष्यन्ते । अतिचिन्तनाद्, दुःखावेशाच्च हृदयमेव पीड्यते, नान्यदङ्गम् । इत्येवं पर्यालोचनया हृदयाश्रित आत्मेति सिद्धम् । तथा चोक्तं वासुदेवेन गीतायाम्—

---

१. च० सू० ३० । २७३ ।

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति[1] ।' इति

पञ्चदश्यामपि—

'केनापि देवेन हृदिस्थितेन

यथा नियुक्तोऽस्मि तथा करोमि[2] ।।' इति ।

एवंभूतं हृदयं द्वासप्ततिसहस्रा नाड्योऽभितः परिवेविषति । एता नाड्यो हित-फलप्राप्तिनिमित्तत्वाद् हिताहितकारिका उच्यन्ते । कुत्रचिदेता हिताश्चाहिता-श्चोच्यन्ते । अस्तु ।

हृदयप्रदेशात् कदम्बकुसुमकेशरवत् सूर्यमण्डलाद् रश्मय इव परितो निःसृताः पुस्तकवेष्टनवत् तदभित आच्छादयन्ति बहिर्मुख्यः प्रवृत्ता एताः सर्वशरीरं व्याप्नुवत्यः पिप्पलपर्णपङ्क्तय इव । इमा नाड्योऽनेकविधवर्णाः—नाभेरूर्ध्वं हृदयादध आमाशयो वर्तते । तत्र पित्ताख्यं सौरं तेजस्तिष्ठति । तदेव जाठराग्निरिति गीयते जनैः । तेनैवाशितस्य ओदनादेः पीतस्य च जलादेः पाको जायते । तत्पाकाभिनिर्वृत्तेनाल्पीयसा कफेन सम्पर्कात् तदेव पित्ताख्यं सौरं तेजः पिङ्गलं भवति । तेन च पिङ्गलीभूतेन तेजसा सम्पर्काद् रसस्य नाडीनाञ्च पिङ्गलत्वं जायते । तच्चान्नरसस्य धात्वन्तर-सहकारिवशाद् वर्णविशेषे कारणम् यथा—'आमाशयगतं पित्तं रञ्जकं रसरञ्जनात्[3]।'

एवं तदेव तेजः पाकाभिनिर्वृत्तप्रभूतवातसम्पर्कात् स्वयं नैल्यं भजत् स्वसम्पर्काद् रसस्य नाडीनाञ्च नैल्यमावहति । एवं कफभूयस्त्वात् शौक्ल्यम्, कफवातसमतायां पीतत्वं शोणितबाहुल्याल्लौहित्यं तत्तेजसोऽभिजायते । तत्सम्बन्धाद् रसा नाड्यश्च तत्तद्वर्णाकाराः सम्बोभुवति ।

तस्मिन् हृदये आकाश इव शुद्धबुद्धचैतन्यस्वरूपोऽसांसारिकः स्वाभाविक आत्मा तिष्ठति । न तु हृदयवर्ति आकाशं भूतात्मकं गृह्यते "दहर उत्तरेभ्यः[4]" इत्यस्मिन् सूत्रे तन्निराकरणात् । तदर्थस्वीकारे तु 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः[5]' इत्याद्याकाशस्वरूपौपम्यं प्रत्यक्षतो न सङ्घटते । उक्तञ्च याज्ञवल्क्ये[6]

द्वासप्ततिसहस्रा हृदयादभिनिःसृताः ।
हिताहिता नाम नाड्यस्तासां मध्ये शशिप्रभम् ।।
मण्डलं तस्य मध्यस्थ आत्मा दीप इवाचलः ।
स ज्ञेयस्तं विदित्वेह पुनराजायते न तु ।।

---

१. गीता-१८।६१ । २. पञ्चदशी ६।१७६ । ३.

४. ब्रह्मसूत्रम्-१।३।१४ । ५. छा. उ. ८।१।३ । ६. याज्ञवल्क्यस्मृतिः-३।१०८, १०९ ।

बृहदारण्यके च[१] —'अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम द्वासप्ततिः सहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते ...........'इत्यादि।

अतोऽत्रैषा परिपाटी जाग्रत्स्वप्नावस्थायां देहाद्यभिमानविशिष्टः सुषुप्तिदशायां देहाद्यभिमानरहितो जीवाख्यो राजा जाग्रत्स्वप्नयोः तत्तत्प्रपञ्चात्मकस्वराष्ट्रे सञ्चारं कृत्वा क्लमवशात् सेन्द्रियसमनस्कः शरीराख्यं स्वपुरं प्रविश्य हृदयमभितः परिवेष्टनाकारा विद्यमानाः स्वप्नादिवाहिनीः नाडीः प्रविशति। तदा नाडीगतेन सौरेण पित्ताख्येन पूर्वप्रकथितरूपात्मकेनाभिव्यक्तकरणो बाह्यविषयापेक्षणासमर्थः सन् नाडीभ्यो निर्गत्य हृत्पुण्डरीकं प्रविशति। हृत्पुण्डरीकावच्छिन्ने ब्रह्मपुरे प्रासादे शेते। यथा महाराजो जानपदान् भृत्यादीनुपादाय जयादिनोपार्जिते स्वस्मिन् जनपदे यथाकामं परिवर्तेत, तथैवैष विज्ञानमयो जागरितस्थानेभ्यः प्राणानुपसंहृत्य स्वशरीरे परिवर्तते। उक्तञ्च[२] — 'तेजसा हि तदा सम्पन्नो भवति' इति। अत्र तेजसः पित्तब्रह्मद्वयार्थस्वीकारेऽपि न क्षतिः। एवमर्थे स्वीकृतेऽपि 'सता हि सोम्य तदा सम्पन्नो भवति[३]' इत्यादिश्रुतिसामञ्जस्यं न विप्रतिपद्येत।

सुषुप्त्यवस्थासमाप्त्यनन्तरं हृत्पुण्डरीकावच्छिन्ने ब्रह्मणि शयानो जीवः प्रबुद्धोऽर्थाद् देहाद्यभिमानविशिष्टः सन् हृत्पुण्डरीकावच्छिन्नब्रह्मलक्षणात् प्रासादादुत्थाय जाग्रत्प्रपञ्चाख्यराष्ट्रदर्शनाय हृत्पुण्डरीकनाडीप्राकारद्वारा शरीराख्यात् पुराद् बहिर्निर्गच्छति। 'स यदा प्रतिबुद्ध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः[४]' इति श्रुतिरेवास्मिन्नर्थे प्रमाणम्। 'सत आगम्य न विदुः सत आगच्छामहे[५]' इति सद्रूपात् परमात्मनः सकाशाज्जीवा आगच्छन्तीति श्रवणात् परमात्मनो जीवस्य प्रबोध उपदिश्यते। अन्यस्य सुषुप्तिस्थानत्वे इदं श्रवणं बाध्येत, अन्यत्र सुप्तस्यान्यस्मात् समुत्थानायोगात्।

यद्यप्येतावत्पर्यन्तमात्मनः संसारित्वेन वर्णनं कृतम्। स एव च गृहीतोऽस्माभिः। अग्रे च तस्यैवासंसारित्वेन शुद्धबुद्धब्रह्मरूपत्वेन च वर्णनमस्मिन् निबन्धे विहितं वर्तते। तथापि वस्तुत उभयोरैक्यान्न तद् दोषावहम्।

परस्परविप्रतिपन्नश्रुतिविरोधपरिहारस्त्वेवं क्रियताम्— पुरीतत्, हृदयपरिवेष्टनमित्यर्थः। तदुपलक्षितं शरीरमिह पुरीतच्छब्देनाभिप्रेतम्। तत्र शयनमौपचारिकं बोध्यम्, लोहपिण्डेऽग्निवत्। वस्तुतस्तु स्वात्मन्येव शेते। अन्यथा 'आकाशे शेते' इति पूर्ववाक्येन सह विरोधः स्यात्।

---

१. बृहदारण्यकोप० २।१।१९। २. छा. उ. ८।६।३। ३. छा. ६।८।१। ४. कौ. ब्रा. उ. ३।३। ५. छा. उ. ६।१०।२।

एवं 'तदा नाडीषु सुप्तो भवति'[१] कुत्रचित् 'सृप्तः' इति च पाठः। तत्रोभयविधत्वेऽपि नाडीष्विति सप्तमी तृतीयया विपरिणम्यते। तदा द्वारभूताभिर्नाडीभिर्हृदयाकाशं गत इत्यर्थः।

न ह्यन्यत्र सत्संपत्तेः स्वप्नादर्शनं भवति। स्वप्नदर्शनं तु धर्माधर्मादृष्टवशादिह जायते। धर्माधर्मादिस्तु सति शरीरसंयोगे प्रेरकः। यदि सुषुप्तिदशायामपि नाडीसंयोगोऽभविष्यत्, तदा स्वप्नमद्रक्ष्यत्। एवं तु न भवति, अतः सत्सम्पन्नमेव तदा सुषुप्तौ वर्तते, न हि शरीरसम्बन्धोऽस्ति। अत एव 'ताभिः प्रत्यवसृप्य'[२] इति बृहदारण्यकवाक्येन सहैकवाक्यत्वमपि भवति।

अत्रायं निष्कर्षः—इमाः सर्वाः शयनपदकाः श्रुतयः परस्परं समुच्चिता एव, न तु व्रीहियववद् विकल्प्यन्ते। तत्र पुरोडाशद्रव्यस्यानियमेन प्रकृतिद्रव्ये यस्मिन् कस्मिंश्चित्प्राप्ते एकैका परस्परानपेक्षा व्रीहिश्रुतिर्यवश्रुतिश्च नियामिका एकार्थतया विकल्पमर्हतः, गत्यन्तराभावात्। प्रकृते तु गत्यन्तरसद्भावो वर्तते। नाडीनां पुरीततपरिवेष्टितहृदयपुण्डरीकमध्यगतब्रह्मप्राप्तौ मार्गत्वेन **'यो हि गङ्गया सागरं गच्छति गत एव स गङ्गायां भवति'**[३] इति भाष्यप्रदर्शितरीत्या समुच्चयो घटते। यथा **'प्राकारे शेते'** इत्यस्य प्राकारमध्यवर्तिप्रासादे शेते इति प्राकारन्यायेन पुरीततोऽपि समुच्चयः। नाडीपुरीततोर्नाडीब्रह्मणोश्च समुच्चयं स्वीकृत्य त्रयाणां विकल्पस्यापि स्वीकाराद् वरं सर्वेषां द्वारभेदेन समुच्चयस्यैव स्वीकारः।

सैषा सुषुप्तिः कथं जायते कीदृशी चेति निरूप्यते सुषुप्तिर्नाम निद्रैव सा अनेकविधा। तथा चोक्तम्—

> **तमोभवा श्लेषसमुद्भवा च मनःशरीरश्रमसम्भवा च।**
> **आगन्तुकी व्याध्यनुवर्तिनी च रात्रिस्वभावप्रभवा च निद्रा॥**
> **रात्रिस्वभावप्रभवा मता या तां भूतरात्रिं प्रवदन्ति निद्राम्।**
> **तमोभवामाहुरघस्य मूलं शेषाः पुनर्व्याधिषु निर्दिशन्ति॥**

अस्यायं भावः—तमो हि स्वभावत एव हृदयावरकम्। तदेव सद्रजोऽनभिभूतं सत् स्वत उद्रिक्तं निद्रां जनयति, सा तमोभवा निद्रा। ईदृशी निद्रा अघस्य कारणम्। तमोगृहीतो हि सदा निद्रालुतया अनुष्ठेयं सद्वृत्तं न करोति, ततश्चाधर्मोत्पादः। द्वितीया केवलेन समेधितेन श्लेष्मणा जायते। तृतीया मनसः शरीरस्य वा श्रमेण

---

१. छा० उ० ८।६।३ २. बृ० उ० २।१।१९ ३. तत्रैव।

यदा स्वस्वविषयेषु मनो वा इन्द्रियाणि वा न प्रवर्तन्ते ततो जायते। चतुर्थी असाध्यव्याधिभवा स्वयमप्यसाध्यभूता व्याधिरूपा सन्निपातज्वरादिकार्या। रात्रिस्वभावात् प्रभवतीति या सा रात्रिस्वभावप्रभवेति। दिवाप्रभवन्ती तु निद्रा तमः प्रभृतिभ्यस्त्रिभ्य एवोत्पद्यते।

यद्यपि प्रायो हि निद्राया हेतुः सामान्येन तम एव वर्तते सर्वेषां प्राणिनां कृते समानरूपतया। उक्तश्चात्र[1]—

हृदयं चेतनास्थानमुक्तं सुश्रुतदेहिनाम्।
तमोऽभिभूते तस्मिंस्तु निद्रा विशति देहिनाम्॥

निद्राहेतुस्तमः सत्त्वं बोधने हेतुरुच्यते।
स्वभाव एव वा हेतुर्गरीयान् परिकीर्त्यते॥

पूर्वदेहानुभूतांस्तु भूतात्मा स्वपतः प्रभुः।
रजोयुक्तेन मनसा गृह्णात्यर्थान् शुभाशुभान्॥

करणानां तु वैकल्पे तमसोऽभिप्रवर्धिते।
अस्वपन्नपि भूतात्मा प्रसुप्त इति चोच्यते[1]॥ इति।

तथापि 'हृदयं चेतनास्थानम्' इत्यादिश्लोकेषु तमोजन्यत्वेन वर्णितत्वेऽपि पूर्वत्र विशेषनिद्रायाः सातत्येनोपजनावधमूलत्वेन वर्णितत्वान्न दोषः। अपि च—

मनसा कर्मणा वाचा यदा क्षुभ्यति नो वपुः।
शान्तात्मा तिष्ठति स्वस्थो जीवधातुस्तदा त्वसौ॥

समतामागतैर्वातैः क्षोभ्यते न हृदम्बरे।
निर्वातसदने दीपो यथाऽऽलोकैककारकः॥

ततः सरति नाङ्गेषु संवित् क्षुभ्यति तेन नो।
न चेक्षणादीन्याति रन्ध्राण्यायाति नो बहिः॥

जीवोऽन्तरेव स्फुरति तैलसंविद् यथा तिले।
शीतसंविद्धिम इव स्नेहसंविद् यथा घृते॥

जीवाकारा कला काचिच्चितिः स्वच्छतयात्मनि।
दशामायाति सौषुप्तिं सौम्यवातां विचेतनाम्॥

—यो० वा० ४।१९।२०-२४।

यद्यपि सुप्तौ सर्वकार्यलयः श्रूयते—सुषुप्तिकाले सकले विलीने'[2] इति कैवल्योपनिषद्युक्तत्वात्। एवञ्च प्राणस्यापि कार्यत्वेन तस्यापि स्थितिर्हि नोपपद्यते, तथापि

---

१. सु. सं. शा. स्था. ४।३४-३७। २. कै. उ. १।१३।

क्रियाशक्तिज्ञानशक्तिमदेकमेव जीवत्वोपाधिभूतमपञ्चीकृतपञ्चमहाभूतकार्यं क्रियाशक्तिप्राधान्येन प्राण इति ज्ञानशक्तिप्राधान्येन चान्तःकरणमिति च व्यपदिश्यत इति। स्पष्टञ्चैतत् सिद्धान्तबिन्दौ। तत्र सुषुप्तौ ज्ञानशक्तिप्रधानस्यान्तःकरणस्य स्वरूपेण विनाशेऽपि क्रियाशक्तिप्रधानस्य सत्त्वेन कश्चिद् विरोधः। एवं सुषुप्तौ धर्माधर्मसंस्काराणामप्यविद्यात्मना स्थितिः स्वीक्रियते। तथा च श्रुतिः—'**पुनश्च कर्मान्तरसन्नियोगात् स एव जीवः स्वपिति प्रबुद्धः**'[१] इति।

वेदान्तपरिभाषाकृता तु श्वासाद्यभावेऽपि तदुपलब्धिः सुप्तशरीरोपलम्भवत् पुरुषान्तरविभ्रममात्रमेव स्वीक्रियते।

यच्च '**सुषुप्तिकाले सकले विलीने**'[२] इति कैवल्योपनिषद्युक्तम्, तत्तु स्वस्वकार्यसहकृतसकरणकान्तःकरणपरम्, न तु धर्माधर्मसंस्कारप्राणदेहपरमिति।

तथा च श्रुतिः—**सुप्तेषु वागादिषु प्राण एवैको हि जागर्ति, प्राण एवैको मृत्युनाऽनाप्तः प्राणः संवर्गो** नागादीन् संवृङ्क्ते प्राण इतरान् प्राणान् रक्षति मातेव पुत्रान्'[३] इति।

नृसिंहतापिन्याम् 'यत्र सुप्तो ……… चतुरात्मा प्राज्ञ ईश्वरस्तृतीयः पादः'[४] इति श्रुत्यनुसारं सुषुप्त्यवस्थाभिमानी प्राज्ञोऽपि प्राज्ञविश्वप्राज्ञतैजसप्राज्ञप्राज्ञप्राज्ञतुरीयभेदेन चतुरात्मा उक्तः। तच्च चातुरात्म्यं सुषुप्त्यवस्थाभेदं विना नोपपद्यते। अतः सुषुप्तिश्चतुर्धाऽर्थतः प्राप्ता। न चात्र करणग्रामोपरतिलक्षणे स्वापे विभागो न भवितुमर्हतीति वाच्यम्, तदानीमपि शरीरेन्द्रियविषयाणां बीजरूपेण विद्यमानत्वात्। सुषुप्तावभानेऽपि ततो निर्गमनप्रथमक्षणे जाग्रत्स्वप्नान्यतरस्थानस्योपलभ्यमानत्वात्। सा च सुप्तिप्रविभक्तजाग्रत्, सुप्तिस्वप्नः, सुप्तिप्रविभक्तसुप्तिः, सुप्तितुरीयश्चेति। तत्र सुषुप्त्यवस्थायां यदा जाग्रत्स्वप्नयोरन्यतरस्थानस्थः पुमान् जागरणाद् स्वप्नाद् वा सुषुप्तस्थानं जिगमिषुः स्वनेत्रादिना रूपाद्यज्ञानमनुभवति, तदेयं सुप्तिप्रविभक्तजाग्रदुच्यते। तद्व्यष्ट्यभिमानी प्राज्ञविभक्तविश्वः तत्समष्ट्यभिमानी बीजात्मप्रविभक्तविराट् तदुभयैक्याभिमानी अनुज्ञैकरसोता। यदोपरतबाह्यरूपाद्यज्ञानः पुमान् जाग्रत्स्वप्नयोरन्यतरस्थानमवलम्ब्य मनसैव रूपाद्यज्ञानमनुभवति, तदा सुप्तिस्वप्नः, तद्व्यष्ट्यभिमानी प्राज्ञतैजसः, समष्ट्यभिमानी बीजतैजसः, (ईश्वरः) ऐक्याभिमानी अनुज्ञैकरसानुज्ञाता। यदा स्वचैतन्यव्याप्ताभिरज्ञानवृत्तिभिरेव अज्ञानमनुभवन्नपि स्तब्ध इव नानुभवति, तदा सुप्तिसुप्तिः, तद्व्यष्ट्यभिमानी प्राज्ञप्राज्ञः, समष्ट्यभिमानी

---

१. कै. उ. १।१४। २. कै. उ. १।१३। ३. ब्र. सू. २।४।५।९ सूत्रे शाङ्करभाष्ये समुद्धृता। ४. १।८।

बीजवीजः (ईश्वरेश्वरः) ऐक्याभिमानी अनुज्ञैकरसानुज्ञैकरसः। यदा स्वापप्रविभक्त-जाग्रत्स्वप्नस्वापभावाभावविज्ञातृप्रत्यगानन्दोऽस्मीत्यात्मानमनुभवति, तदा सुप्तितुरीयः, तदभिमानी आत्मा तुर्यं उच्यते।

सिद्धान्तबिन्दौ—सुषुप्तौ या सात्त्विकी वृत्तिः सुखाकारा सा सुषुप्तिजाग्रत्, तदनन्तरं '**सुखमहमस्वाप्सम्**' इति परामर्शः। तत्रैव या राजसी वृत्तिः सा सुषुप्ति-स्वप्नः, तदनन्तरं '**दुःखमहमस्वाप्सम्**' इति परामर्शः। तत्रैव या तामसी वृत्तिः सा सुषुप्तिसुषुप्तिः, तदनन्तरम् '**गाढं मूढोऽहमस्वाप्सम्**' इति परामर्शः[१]।

अन्यत्र—'चित्तैककरणा सुषुप्तिः[२] चतुर्दशकरणोपरमाद् विशेषविज्ञानाभावाद् यदा शब्दान्नोपलभते, तदात्मनः सुषुप्तम्[३]।

**षडवस्था परित्यागे जडा जीवस्य या स्थितिः।**
**भविष्यद्दुःखबोधाढ्या सौषुप्ती सोच्यते गतिः॥**

**एते तस्यामवस्थायां तृणलोष्टशिलादयः।**
**पदार्थाः संस्थिताः सर्वे परमाणुप्रमाणिनः॥[४]**

**अन्तःकरणवृत्तिर्या संस्कारपरिशेषिणी।**
**सा स्वप्न इति विज्ञेया तदभावे सुषुप्तिका॥[५]**

इत्यादिभिस्तत्स्वरूपमुपवर्ण्य भेदो न वर्णितः।

शैवागमानुसारं शुद्धकेवलसकलेति त्रिधावस्थामात्मन उपवर्ण्य सकलावस्थातः केवलावस्थाप्राप्तिसमये जाग्रदादिभेदेन पञ्चविधोऽवस्थाभेदो दर्शितस्तत्र सकलावस्था-पन्नस्यात्मनः। स्थूलसूक्ष्मदेहभोगान् त्यक्त्वा यदा हृदये चित्तप्राणवायुभ्यां सह तृतीय आत्मा तिष्ठति तदा सुषुप्त्यवस्था। केवलावस्थापन्नस्यात्मनस्तु स्वप्नावस्था-कारणस्योकारस्य मकारे अहमित्यभिमानकारणस्याहङ्कारस्य च बुद्धौ लये सति बुद्ध्यादित्रयस्य तत्प्रेरकस्य मकारादित्रयस्य च सुषुप्तिस्थानभूततालुमूले देहेन्द्रियवृत्ति-रहितवाचा गोचरज्ञेयज्ञातृज्ञानत्रिपुटीरूपेणावस्थानं निर्मलसुषुप्तिः। तदुक्तम् सिद्धान्त-बोधे—'**लीनान्तःकरणं वृत्ते सुषुप्तिस्तालुदेशकः**'[६]। '**सौषुप्तं प्रलयोपमम्**'[७] '**ज्ञेयशून्यता**'[८] इति।

---

१. ४३ पृ.। २. शा. उ. १४। ३. स० सा० उ० ४। ४. यो० वा० ३।११७।२३-२४। ५. ल० तं० २२।२३-२४। ६. शै० प० २।६३-६४ पृ० उद्धृतम्। ७. ई० प्र० ३।२।१५। ८. ई० प्र० ३।२।१३।

बीजं विश्वस्य तत्तूष्णीभूतं सौषुप्तमुच्यते ।
अनुभूतौ विकल्पे च योऽसौ स एव हि ।।

न भावग्रहणं तेन सुष्ठु सुप्तत्वमुच्यते ।
तस्माल्लौकिकीं निद्रां सुषुप्तं मन्वते बुधाः ।।

बीजाभावोऽथाग्रहणं साम्यं तूष्णीं स्वभावता ।
मुख्या मातृदशा सेयं सुषुप्ताख्या निगद्यते ।।[१]

तच्च सुषुप्तं द्विविधम्—रूपस्थं महाव्याप्तिश्च । तत्र रूपस्थं चतुर्विधमुदित-विपुलशान्तसुप्रसन्नभेदात् । उदितं संस्कारमात्रात्मनावस्थानात्, विपुलं संस्कार-मात्रात्मना प्ररोहात्, शान्तं प्रलीनसंस्कारत्वात्, सुप्रसन्नमुद्भवदहंभावरसौन्मुख्यात् । तदुक्तं मालिनीविजये—

'रूपस्थं तु महाव्याप्तिः सुषुप्तस्यापि तद् द्वयम्[२] ।
चतुर्धा रूपसंस्थं तु ज्ञातव्यं योगचिन्तकैः ।
उदितं विपुलं शान्तं सुप्रसन्नमथापरम्'[३] ।।

वृत्तिर्यत्र न मानसी न च गतिर्बाह्येन्द्रियाणां क्वचि-
च्चेष्टा कापि न कायिकी न च भयं चिन्ता न लिप्सा क्लमः ।
मूर्च्छामुक्तिसमाधयोऽपि न परं सौख्यानुभूतिर्वरा
तां सुप्तिं विधिना व्यचारयदिह श्रीरामनारायणः ।।

---

१. त० आ० १०।२५८-२६० । २. मा० वि० २।३७ । ३. मा० वि० २।४४

# स्वप्ननिरूपणम्

आकृतिर्लक्षणं भेदो निमित्तञ्चोपयोगिता।
एतत्सर्वं प्रपञ्चेन स्वप्नस्येह निरूप्यते॥

स्वप्नायितमखिलजगद्व्यवहारमाकलयतामाह्निकचर्यया प्रत्यहमनुभवता मापामर-पण्डितानामाबालवृद्धानां न केषाञ्चिदपि जगत्यपरिचितोऽननुभूत एष तामसीतम इव स्वप्नः। स हि '[1]ञिष्वप् शये' इत्यस्माद् धातोः 'स्वपो[2]नन्' इत्यनेन भावे ननि स्वपनमिति स्वप्नः सिद्धः। स्वपनं स्वापः, सुप्तिः, सुषुप्तिः, शयनं संप्रसादो निद्रेत्यादिशब्दैर्लोके शास्त्रे च व्यवह्रियते। तथा चामरः– 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि[3]।' मेदिनीकारादयस्तु शयने मानसिकज्ञानभेदे दर्शने चैनमामनन्ति। तद् यथा– 'स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्।[4] 'स्वप्नः सुप्तस्य विज्ञाने स्वप्नः स्वापे च दर्शने'[5] इति, 'स्वप्नः स्वापे सुप्तज्ञाने'[6] इति च।

यद्यप्येकस्या एव प्रकृतेरेकार्थप्रत्ययद्वयेन निष्पन्नयोः स्वप्न-सुषुप्तिशब्दयोः[7] शास्त्रे पर्यायतो व्यवहाराभेदः प्रतीयते तथापि लोके विभिन्नार्थेषु शास्त्रे च विभिन्नावस्थासूभयोः शब्दयोः प्रयोगाद् व्यावहारिको भेद एव लभ्यते।

---

१. (१०६८ अ० प० अनि०)। २. (पा० सू० ३।३।९१)। ३. अ० ७।३६। ४. मे० श० २२। ५. वि० प्र० न० द्वि० १३। ६. अने० सं० २।२६२। ७. स्वप्नावस्थायां यथा ऋग्वेदे—'इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति' (८।२।१८) स्वप्नावस्थायामिति सायणः।

तत्रैवास्य सुषुप्तौ प्रयोगो यथा–'य एष स्वप्ननंशनोऽस्तमेति' (१०।८६।२१)।
मनुरपि–'पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्। स्वप्नोऽन्यगेहवासश्च नारीणां दूषणानि षट। (९।१३)।
अकालस्वाप इति कुल्लूकभट्टः। 'लोभः स्वप्नोऽधृतिः क्रौर्यं नास्तिक्यं भिन्नवृत्तिता। (१२।३३)

निद्रात्मतेति भट्टः।
अन्यत्रापि–'दिवा जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा' इति।
तथा–देहवृत्तौ यथाहारस्तथा स्वप्नः सुखो मतः।' इत्यादि।
जैमिनीये च–'स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम्' (मी० द० ११।४।१७)

तत्र का नाम सुषुप्तिः को वा स्वप्न-इति प्रश्ने केन कारणेन जायेते, कीदृग् वा अनयो रूपमिति सर्वं विचारपथमवतरति । अत एकैकशो विचार्यते –

करणेषूपसंहृतेषु जागरितसंस्कारजः प्रत्ययः सविषयः स्वप्नः । मनोलय-सहितं स्वविषयकमवस्थाज्ञानं सुखगोचराऽविद्यागोचराविद्यावृत्त्यवस्था वा सुषुप्तिरिति स्वप्नसुषुप्त्योर्लक्षणम् ।

श्रीमधुसूदनसरस्वतीमहोदयेनाप्युक्तम् – अन्तःकरणगतवासनानिमित्त इन्द्रिय-वृत्त्यभावकालीनार्थोपलम्भः स्वप्नः, जाग्रत्स्वप्नभोगद्वयेन श्रान्तस्य जीवस्य तदुभय-कारणकर्मक्षये ज्ञानशक्त्यवच्छिन्नस्य सवासनस्यान्तःकरणस्य कारणात्मना-ऽवस्थाने सति विश्रामस्थानं सुषुप्त्यवस्था 'न किञ्चिदवेदिषम्, इति कारणमात्रोपलम्भः सुषुप्तिर्वा । तत्र जाग्रत्स्वप्नभोग्यपदार्थज्ञानाभावेऽपि साक्ष्याकारं सुखाकारमवस्था-ज्ञानाकारं च अविद्यावृत्तित्रयमभ्युपेयते[१]' इति ।

यस्यामवस्थायामात्ममनइन्द्रियाणां परस्परं व्यापारपूर्वकमर्थेन सह योगस्त-ज्जागरणम् । जाग्रत्स्वप्नोभयभोगप्रदकर्मोपरमे सति द्विविधदेहाभिमाननिवृत्तिद्वारा विशेषविज्ञानोपरमात्मिका या बुद्धेः कारणात्मनाऽवस्थितिः सा सुषुप्तिः । तद्विप-रीतस्तु स्वप्नः ।

नास्य सुषुप्तावन्तर्भावो मानसिकप्रपञ्चसत्त्वात् । नापि जागरणे, दृष्टप्रपञ्च-विलयात् । अत इयमन्तः करणस्यार्धविकाशे यथा जाग्रदवस्थायां यद् दृष्टं यच्छ्रुतं तज्जनितवासनया निद्रासमये प्रपञ्चो यत्र प्रतीयते, सा स्वप्नावस्थेति वासुदेव-सरस्वती ।

तथा चोक्तलक्षणानुसारं बाह्येषु करणेषु उपसंहृतेषु जागरितवासनानुसारेण मनस्तदर्थाभासाकारावभासनं स्वप्नशब्दितम् । यथाहुः

इन्द्रियाणामुपरमे मनोऽनुपरतं यदि ।
सेवते विषयानेव तद् विद्यात् स्वप्नदर्शनम् ॥[२]

दशरूपकादिसाहित्यग्रन्थेषु[३] योगसूत्रवृत्त्यादिषु[४] च मनसो वृत्तीनां भेदेऽप्य-नयोर्भेदेनैव वर्णनं वर्तते । अत इयं स्वप्नावस्था जाग्रत्सुषुप्तिमध्ये जायते । नाति प्रसुप्तो जनः स्वप्नानवलोकयते, नापि समनस्केन्द्रियो जागरणशीलः । किन्तु अर्ध-निद्रित एव स्वप्नद्रष्टा । अतोऽस्य नाम सन्ध्यमिति **'सन्ध्यं तृतीयं स्वप्नस्थानम्'**

---

१. रत्नावली-नारायणी टीकायुक्ते । सिद्धान्तबिन्दौ पृ० ४१७ । २. म० भा० शा० प० २७५।२४ ३. ४।२३ । सा० द० ३।१५२।१५७ । ४. यो० सू० १।१० ।

इति श्रुतेः[1] । 'सन्ध्ये सृष्टिराह हि[2]' इति शारीरकसूत्रम् । सन्धौ भवं सन्ध्यमिति व्युत्पत्तेर्जाग्रत्सुषुप्त्योः सन्धौ भवा इयमवस्था । यथाऽहोरात्रयोर्मध्यपातिनी सन्ध्या वेला न रात्र्या गृह्यते नापि दिवसेन, किन्तु उभयविलक्षणैकाऽपरा वेलैव पृथगाम्नायते, तयोभयोरवस्थयोर्मध्यगतैषाऽवस्थापि द्वाभ्यां प्रबोधसंप्रसादाभ्यां विलक्षणा तृतीया भवितुमर्हति ।

माण्डूक्योपनिषदि स्वप्नसुषुप्त्योर्विवेचनं यथा—'अयमात्मा ब्रह्म' इति महावाक्यार्थं विवृण्वती ओमिति शब्देन परोक्षं ब्रह्माभिधाय प्रत्यक्षतया कार्षापणवद् वैश्वानरतैजसप्राज्ञतुरीयभेदैः अ-उ-म्-मात्रारूपाऽमात्रात्मकरूपैश्चतुष्पात्त्वं ब्रह्मणो निदर्शयति श्रुतिः । तथा चैषामभिव्यक्तये स्थानभेदाँश्च प्रकटयति । यथा—स्वप्नस्थानेऽन्तः प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः, इति ।[3] यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः' ५ इति च ।[4]

एवं माण्डूक्यकारिकायामपि—

> त्रिषु धामसु यद् भोज्यं भोक्ता यश्च प्रकीर्तितः ।
> स्वप्ननिद्रायुजावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ॥
> न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ।
> अन्यथा गृह्णतः स्वप्नो निद्रातत्त्वमजानतः ॥
> विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ।
> अजमनिद्रमस्वप्नमद्वैतं बुद्ध्यते तदा ॥[5]

इत्यादिभेदः प्रदर्शितः ।

प्रश्नोपनिषद्यपि—'अथ हैनं सौर्यायणिगार्ग्यः पप्रच्छ, भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति कान्यस्मिञ्जाग्रति कतर एष देवः स्वप्नान् पश्यति कस्यैतत् सुखं भवति कस्मिन्नु सर्वे प्रतिष्ठिता भवन्ति' इति ।[6]

तत्रैव भाष्ये—'भगवन्नेतस्मिन् पुरुषे शिरःपाण्यादिमति कानि कारणानि स्वापं कुर्वन्ति स्वव्यापारादुपरमन्ते' उपरते जाग्रत्स्वप्नव्यापारे यत् प्रसन्नं निरायासलक्षणमनाबाधं सुखं कस्यैतद् भवति, इत्यादिवाक्यानि सन्ति ।

---

१. बृ० उ० ४।३।९ । २. ब्र० सू० ३।२।१ । ३. मा० उ० ४ । ४. मा० उ० ५ । ५. मा० का० । ६. प्र० उ० ४।१ ।

एवं श्रुतिभाष्ययोः स्वप्धातुसामान्येऽप्यवस्थाभेदः सुस्पष्टं लक्ष्यते ।

अमुना प्रकारेण विद्यारण्यमुनयोऽपि पञ्चदश्यां बहुषु स्थलेषु 'जाग्रत्स्वप्न-सुषुप्त्यादिप्रपञ्चं यत्प्रकाशते'[१] इत्यादि – प्रकारेणावस्थात्रयसत्तामङ्गीकृतवन्तः ।

नैष्कर्म्यसिद्धावपि––

संप्रसादेऽविकारित्वादस्तं याते विकारिणी ।
पश्यतो नात्मनः किञ्चिद् द्वितीयं स्पृशतेऽण्वपि ।।

यथा प्राज्ञे तथैवायं स्वप्नजागरितान्तयोः ।
पश्यन्नप्यविकारित्वाद् द्वितीयं नैव पश्यति ।।[२]

सर्वत्राद्वैतव्यवस्थापनद्वारा अवस्थात्रयसत्ताऽङ्गीकृता । तस्मादुपपन्नं यदन्यः स्वप्नोऽन्या च सुषुप्तिः । सिद्धे चानयोर्भेदे सुषुप्ति पृथक् स्वप्नोऽवस्थाविशेषः[३] ।

सा च स्वप्नावस्था का—वासनामयविषयोपलब्ध्यावस्था, इन्द्रियाजन्य-विषयगोचरापरोक्षान्तःकरणवृत्त्यवस्था, जाग्रद्भोगप्रदकर्मोपरमे सति इन्द्रियोपरमे जाग्रदनुभवजन्यसंस्कारोद्भूतविषयतज्ज्ञानावस्था वा ? तस्यामवस्थायां योऽनुभूयते पदार्थः सोऽपि स्वप्नशब्दवाच्य एव तात्स्थ्यात् । स च स्वप्नावस्थायां पदार्थानुभवो जीवस्यैव भवति । तदुक्तं चरके—

'यदा तु मनसि क्लान्ते कर्मात्मानः क्लमान्विताः ।
विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः ।।'[४]

अस्यायं भावः कालस्वभावात् श्रमादिहेत्वन्तरतो मनसि चेष्टाहीने मनः प्रयुक्तानि इन्द्रियाणि क्लमान्वितानि वा भूत्वा विषयेभ्यः शब्दस्पर्शादिभ्यो निवर्तन्ते यदा, तदा मानवो राशिपुरुषः अर्थाज्जीवः स्वपिति । क्लमपरिभाषोक्ता सुश्रुते—

---

१. पं॰ द॰ ७।१३　　　　　　　　२. नै॰ सि॰ ४।४७-४८

३. मिद्धामनः संयोगावस्था स्वप्नावस्था, यदा मनः संयोग इन्द्रियैः सार्धं न भवति, किन्तु मिद्धानामिकया, नाड्या सह 'जायते तदा जाग्रदवस्थाविरहाद् इन्द्रियाणां प्रत्यक्षजननायोग्यता जायते । तदानीं मनोव्यापारे शैथिल्यं भवति' तत एव इन्द्रिय-वृत्तिषु शैथिल्यमुपैति, तत्प्रेरकस्य मनसोऽसंयोगात् । मनसः संयोगो यदा शनैः शनैर्मिद्धया सह जायते तदा स्वप्नो भवति ।

४. च॰ सं॰ २१।८।२१

योऽनायासश्रमो देहे प्रवृद्धः श्वासवर्जितः ।
क्लमः स इति विज्ञेय इन्द्रियार्थ प्रबाधकः ॥[१] इति ।

एतेन मनः प्रभृतीनां निश्चेष्टता क्लमः प्रतीयते । तस्माद् यः स्वपिति स स्वप्नद्रष्टा ।

स्पष्टमिदं प्रतिपादितं महाभारते[२] ?

अयमेवाभिप्रायः कैवल्योपनिषद्यप्युर्वर्णित :

"स एव माया परिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।
स्त्रियान्नपानादिविचित्रभोगैः स एव जाग्रत् परितृप्तिमेति ॥
स्वप्ने स जीवःसुखदुःखभोक्ता स्वमायया कल्पितविश्वलोके ।
सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ॥

---

१. सु० शा० स्था० ४।५१

२. स्वप्ने हि रजसा देही तमसा चाभिभूयते ।
देहान्तरमिवापन्नश्चरत्युपगतस्पृहः ।
अत्राह कोऽन्वयं भावः स्वप्ने विषयवानिव ।
प्रलीनैरिन्द्रियैर्देही वर्तते देहवानिव ॥
इन्द्रियाणां श्रमात् स्वप्नमाहुः सर्वगतं बुधाः ।
मनसस्त्वप्रलीनत्वात् तत् तदाहुर्निदर्शनम् ॥
कार्ये व्यासक्तमनसः संकल्पो जाग्रतो ह्यपि ।
यद्वन्मनोरथैश्वर्यं स्वप्ने तद्वन्मनोगतम् ॥
संस्काराणामसंख्यानां कामात्मा तदवाप्नुयात् ।
मनस्यन्तर्हितं सर्वं स वेदोत्तमपूरुषः ॥
गुणानामपि यद्येतत् कर्मणा चाप्युपस्थितम् ।
तत् तच्छंसन्ति भूतानि मनो यद् भावितं यथा ॥
ततस्तमुपसर्पन्ति गुणा राजसतामसाः ।
सात्त्विका वा यथायोगमानन्तर्यफलोदयम् ॥
ततः पश्यन्त्यसम्बुद्ध्या वातपित्तकफोत्तरान् ।
रजस्तमोगतैर्भावैस्तदप्याहुर्दुरत्ययम् ॥
प्रसन्नैरिन्द्रियैर्यद् यत् सङ्कल्पयति मानसम् ।
तत् तत् स्वप्नेऽप्युपगते मनो ह्यन्निरीक्षते ॥
(म० भा० शा० प० अ० २१६)

पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स इति प्रबुद्धः।''[१]
इति।

काठकेऽपि—'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते। तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन। एतद् वैतत्।'[२]

यथेच्छं स्त्र्याद्यर्थमविद्यया निष्पादयन् जागर्ति, तदेवामृतं शुद्धं ब्रह्म उच्यते सर्वशास्त्रेषु।

एवं स्वप्नद्रष्टा जीवेनानुभूतपदार्थस्य स्वप्नशब्दवाच्यतालाभे स स्वप्नः कतिविध इत्याशङ्कायामुच्यते—स्वप्नस्य सप्तविधत्वम्। स्वप्नो हि सप्तविधो भवति—दृष्टश्रुतानुभूतप्रार्थितकल्पितभाविकदोषजभेदात्। तत्र पूर्वदृष्टस्य वस्तुनो यत् स्वप्नावस्थायां दर्शनं स एव प्रथमः। द्वितीयस्तु कर्णगोचरीभूतविषयदर्शनम्। स्वयं सम्यग् ज्ञातविषयावलोकनं तृतीयः। समाराधितदेवान् प्रति प्रार्थितस्य स्वयमीप्सिततमस्य वा अलब्धस्य दर्शनं तुरीयः। पञ्चमो हि मनसा परिकल्पितस्य विषयस्य स्वकल्पनाकल्पितस्य ऊहमात्रस्य वा यद्दर्शनम्। दृष्टश्रुतानुभूतप्रार्थितकल्पितादिरहितस्य प्राक्तनकर्मसमुद्भूतधर्माधर्मरूपादृष्टवशाद् भाविनो भोगजातस्य सूचकं यद्दर्शनं स षष्ठः। वातपित्तादिदोषनिमित्ताद् यद्दर्शनं सोऽन्त्यः। तदुक्तम्—

दृष्टः श्रुतोऽनुभूतश्च प्रार्थितः कल्पितस्तथा।
भाविको दोषजश्चेति स्वप्नः सप्तविधो मतः॥[३] इति।
(अष्टा० शा० ६।६०)

कुत्रचिदित्थं भणिति :—

दृष्टं श्रुतानुभूतञ्च प्रार्थितं कल्पितं तथा।
भाविकं दोषजं चैव स्वप्नं पञ्चविधं विदुः॥

अत्र गणनया सिद्धेऽपि सप्तसंख्यात्वे पञ्चविधत्वं स्वीक्रियते इति तु न सम्यग् प्रतिभाति। पूर्वश्लोकविरोधोऽपि।

---

१. कै० उ० १।१२-१४ २. क० उ० २।५।८
३. दृष्टं श्रुतानुभूतञ्च प्रार्थितं कल्पितं तथा।
भाविकं दोषजं चैव स्वप्नं सप्तविधं विदुः॥
[च० इ० ५।४२]

तथापि पञ्चविधत्व एवाग्रहस्तदाऽत्र दृष्टश्रुतानुभूतानामनुभवसमानतया एकजातीयत्वेनैककक्षाभ्यन्तरसन्निवेशेन तदन्येषां पूर्वत्रयाद् भेदेन अन्यजातीयपरतया गणनायां सिद्धय्यति पञ्चविधत्वम् ।

प्रश्नोपनिषद्यपीत्थं स्वप्नविवरणं निर्दशितम्—

"अत्रैष देवः स्वप्ने महिमानमनुभवति। यद् दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति दृष्टञ्चादृष्टञ्च श्रुतञ्चाश्रुतञ्च अनुभूतञ्चाननुभूतञ्च सच्चासच्च सर्वं पश्यति सर्वः पश्यति ।"[१]

एतच्छ्रुतेरपि पञ्चाधिक्यमेव प्रतीयते। दृष्टश्रुतानुभूतादृष्टाश्रुताननुभूतसदसद्-भेदात् सप्तत्वमेवायाति, न तु पञ्चविधत्वम् । नन्वेवमत्राष्टविधत्वमिति चेन्न, प्रथमतः सदसद्रूपपक्षद्वयं व्यवस्थाप्य तत्र सत्पक्षे दृष्टादयः षट्, असत्तु सप्तम इति व्यवस्था-पनात् । असत्त्वेन मरीचिकाजलादिकमेव गृह्यते, न त्वलीकम् । न चात्रादृष्टाश्रुता-ननुभूतैरसत्त्वं बोध्यम्, यतो हि इह दृष्टादिना इह जन्मनि तत्तदिन्द्रियैः प्रत्यक्षी-कृतम्, अदृष्टादिना तु जन्मन्यस्मिन् अनवलोकनेऽपि जन्मान्तरैरिन्द्रियसार्थीकृतं गृह्यते ।

एवं सति, अष्टाङ्गहृदयस्थ-श्लोकस्य प्रश्नोपनिषदुपवर्णितश्रुत्या सह कथं सामञ्जस्यमिति उच्यते—यद्यपि श्रुतौ नाम्ना यन्निर्दिष्टं स्वप्नविवरणं तच्छ्लोके नावलोक्यते, तथापि विमर्शे एकता संपद्यते । तथा हि—

दृष्टश्रुतानुभूतास्तु उभयत्र समाः। प्रार्थितकल्पितावपि दृष्टाद्यनुकूलावेव, न तु तद्भिन्नौ। यतो हि लोके प्रार्थना कल्पना च दृष्टादिपदार्थं तद्योग्यञ्चानुसृत्यैव क्रियते ।

भाविको दृष्टाद्यनुकूलोऽदृष्टाद्यनुकूलश्च भवति, अतः सोऽपि नातिरिक्तः। दोषजस्तु प्रायोऽसद्रूपानुकूलो दारुणोऽस्ति। यदि सदात्मकस्तदापि भयानक एव प्रतिभाति । एवं विचारे नासामञ्जस्यम् । तथा चाह चरकोऽपि—

दृष्टं श्रुतार्थभूतं च प्रार्थितं कल्पितं तथा।
भावितं दोषजं चैव स्वप्नं सप्तविधं विदुः ॥
तत्र पञ्चविधं पूर्वमफलं भिषगादिशेत् ।[२] इति ।

---

१. प्र० उ० ४।५। , २. च० इ० ५।४२ ।

## स्वप्नसप्तकस्य कारणमीमांसा

अथावसरसंगत्या केन कारणेन सप्तविधानां स्वप्नानां मध्ये कीदृशस्य स्वप्नस्य दर्शनमिति विविच्यते—दृष्टश्रुतानुभूतपदार्थस्मरणान्मुहुर्मुहुस्तेषां चिन्तया केवलदर्शनमात्राच्छ्रवणादनुभूताच्च दृष्टश्रुतानुभूतविषयकं स्वाप्नज्ञानं जायते। प्रश्नोपनिषद्येतदेव वर्णितम् **'यद् दृष्टं दृष्टमनुपश्यति'**[1] इत्यादि।

अयं भावः—यद्विषयकं दर्शनं भवति, तद्विषयकमेव स्वप्नदर्शनम्, न तु तदतिरिक्तविषयकं स्वाप्नज्ञानमुत्पद्यते। अत एव जन्मान्धानां रूपविषयकं स्वप्नदर्शनं नोत्पद्यते। ये केचन आजन्मनश्चक्षुष्मन्तो लोचनगोचरानुभवशीलाः सन्तः किञ्चित्कालानन्तरमन्धा भवन्ति, तेषां तु रूपविषयकं स्वाप्नज्ञानं जायत एव। एवं यद्विषयकश्रवणं जायते, तद्विषयक एव स्वप्नः। न हि जन्मजातबधिराः शब्दविषयकस्वप्नमनुभवितुं क्षमन्ते, श्रवणविषयकानुभवशून्यत्वात्। मध्ये बधिरत्वमापन्नास्तु शक्ता इति निर्विवादम्। यद्यपि इमे जन्मजातान्धबधिरा इह जन्मनि तादृगनुभवशून्या अपि जन्मान्तरानुभवसामर्थ्यात् **'तन्मनो हि जन्मान्तरीयमपि कल्पते'** इति रीत्या रूपात्मकं शब्दात्मकं च स्वप्नं द्रष्टुं श्रोतुं च प्रभवन्त्येव। तथापि पूर्वानुभूतपदार्थसंस्कारे सत्यपि तदुद्बोधकसामग्रीमन्तरेण स्मरणानुत्पत्तिवत् जन्मान्तरीयानुभवे सत्यपि देहान्तरव्यवधानरूपबाधक सामग्रीबलात् प्रबलाज्ञानावरणाच्च जन्मनीह तदिन्द्रियविषयकं स्वप्नं नानुपश्यन्ति। विकलेन्द्रियातिरिक्तेन्द्रियविषयक स्वप्नांस्तु पश्यन्त्येव तादृग्विकलाः।

तथा चेदं पर्यवस्यति—य इह जन्मनि यदिन्द्रियविकलः, स सत्यपि पूर्वजन्मानुभूते बाधकसामग्रीबलात् यदिन्द्रियविषयकं स्वप्नं नावलोकयते। तादृश्येव गतिरनुभूतस्यापि—यादृशानुभवो जन्यते लोके तादृश एव स्वप्नोऽनुभूयते, नत्वननुभूतः। स चानुभव इह जन्मनि प्रायः, क्वचिज्जन्मान्तरीयो वा। तथा चोक्तं नैषधीये—

**"अदृष्टमप्यर्थमदृष्टवैभवात् करोति सुप्तिर्जनदर्शनातिथिम्"**[2]।

तथा च नारायण व्याख्यायाम्—सुप्तिः स्वप्नः कदाचिददृष्टमप्यर्थं वस्तु अदृष्टवैभवाद् धर्माधर्मसामर्थ्याज्जनदर्शनातिथिं जनदर्शनगोचरं करोति, **'यद् दृष्टं दृश्यते स्वप्नेऽननुभूतं कदापि न'** इति न्यायेन जन्मान्तरस्थानान्तरानुभूतं समुत्पन्नसंस्कारमस्मिन् जन्मनि अदृष्टमप्यर्थं धर्माधर्मौ एव दर्शयत इति भावः।

अतः सिद्धमेतद् यददृष्टं तदप्यनुभूतमेव।

---

१. प्र० उ० ४।५, २. नै० च० १।३९।

यत्तु—शिशवोऽत्यन्ताल्पवयस्का निद्रावस्थायां स्वप्नाननुभवन्ति, मध्ये मध्ये हिक्किताः—चकिताश्च जायन्ते। तत्रेत्थं जनैरनुमीयते यदयं बालोऽस्मिन् जन्मनि विषयग्रहणाशक्तेन्द्रियत्वादनुभवशून्य एतज्जन्मानुभूतं स्वाप्नज्ञानं कर्तुमलम्। अपि तु जन्मान्तरीयमेव अनुभवात्मकं स्वप्नं पश्यन् स्वाभिप्रायं प्रदर्शयति इति।

प्रचलत्यस्मिन् विषये ग्रामेषु लोकप्रवादः—न केवलं बालाः, अपि तु प्रौढाः प्रौढतरा अपि दैनन्दिनानुभवविषयीभूतपदार्थानां दृढतरसंस्कारवशात् स्वप्नावस्थायां तादृशमनोव्यापारवेगातिशयवशेन प्रलपन्ति रुदन्ति हसन्ति च। अत आधिक्येन दृष्टश्रुतानुभूतविषयकं स्वाप्नज्ञानं तच्चिन्तासन्तानवितानाकलितमिति सिद्धम्।

(४) एवं प्रार्थितकल्पितौ पूर्वोक्तभेदत्रयाद् भिन्नावपि सदात्मकावेव, नत्वसत्स्वरूपौ यतो हि मनसेप्सितस्यैव प्रार्थना प्रसूयते, सा दृष्टाद्यात्मिका अदृष्टाद्यात्मिका च। तथैव कल्पनापि। अतः इमौ मानसिकचिन्ताध्यानकल्पनाभिर्दृश्येते। यदा कश्चित् कामार्थी कस्यचिद् वस्तुविशेषस्य प्राप्तये कञ्चिद् देवविशेषं ध्यायति,[१] पूजयति, मनोनीतेन पदार्थेन देवताद्वारा किञ्चिद् वस्त्वाकाङ्क्षति, तदा देवविशेषेण स्वप्नावस्थायां प्राप्तमिव वस्त्वनुभवति। अथ च स्वप्नावस्थायां तत्प्राप्तये विशेषोपायं देवविशेषेणोपदिष्टमिव मन्यते। अथवाऽन्येन पुरुषेण स्वप्नावस्थायामेव ज्ञातमुपायं शृणोति। किञ्च, स्वप्नावस्थायां देवविशेषैः कार्यसम्पादनायादिष्टं कर्मानुभव—विषयतयैव गम्यमानम्। एतत्सर्वं प्रार्थितपदेन गृहीतमभिधीयते।

विशेषतस्त्वस्यां प्रक्रियायां समाराधनप्रकारः **पराशरेणोक्तः**—"अभियातव्य दिगीशेन्द्रयमवरुणसोमेभ्यः पृथिव्यै वायवे सूर्याय ग्रहेभ्यश्च यथाकल्पं यथामन्त्रं यथोपहारमुपकृत्य शुचौ देशे कुशसंस्तृतायां भूमौ शय्यायां शीर्षकश्रियै पादाभ्यां भद्रकाल्यै बालमुपहृत्य उभयतः सर्वरत्नबीजौषधिगर्भान् नवान् उदकुम्भान् कल्पयित्वा कृतस्वस्त्ययनः सावधानः शुचिः सूक्ष्मक्षौमाहतवसनः प्राङ्मुखो रुद्रेति हृदि रुद्रं

---

१. अतः परं प्रवक्ष्यामि दृष्ट्वा यत्फलमश्नुते।
स्वप्ने दृष्टे तु सप्तम्यां पुरुषो नियतव्रतः॥
समाप्य विधिवत् सर्वां जपहोमादिकां क्रियाम्।
भूमौ शय्यां समास्थाय देवदेवं विचिन्तयेत्॥
दृष्ट्वा तु शोभनं स्वप्नं न भूयः शयनं स्वपेत्।
प्रातश्च कीर्तयेत् स्वप्नं यथा दृष्टं खगाधिप॥ (१६/२ १७/१)
(भविष्यपुराणे १६४ अध्याये।)

समाधाय अतिरुद्रं जपेत स्वप्नदर्शनार्थी" इति।[१]

अस्मिन्नेव विषये बृहद् यात्रायां वराहोऽप्याह[२] --

दुकूलमुक्तामणिभृन्नरेन्द्रः समं त्रिदैवज्ञपुरोहितैर्यः ।
स्वदेवतागारमनुप्रविश्य निवेशयेत् तत्र दिगीश्वरार्चाम् ॥

अभ्यर्च्यमन्त्रैस्तु पुरोहितस्तामधश्च तस्यां भुवि संस्तृतायाम् ।
दर्भैस्तु कृत्वास्तरमक्षतैस्तु किरेत् समन्तात् सितसर्षपैश्च ॥

ब्राह्मीं सदूर्वामथ नागपुष्पं कृत्वोपधान शिरसि क्षितीशः ।
पूर्णान् घटान् पुष्पफलापिधानानाशासु कुर्याच्चतुरः क्रमेण ॥

यज्जाग्रतो दूरमुदैति दूरमावर्त्य मन्त्रान् प्रयतस्त्रिरेतान् ।
लब्ध्वेकभुग् दक्षिणपार्श्वशायी स्वप्नं परीक्षेत यथोपदेशम् ॥

भव शम्भो त्रिनेत्राय रुद्राय वरदाय च ।
वामनाय विरूपाय स्वप्नाधिपतये नमः ॥

भगवन् देवदेवेश शूलभृद् वृषवाहन ।
इष्टानिष्टे समाचक्ष्व स्वप्ने सुप्तस्य शाश्वतम् ॥

एकवस्त्रः कुशास्तीर्णे सुप्तः प्रयतमानसः ।
निशान्ते पश्यति स्वप्नं शुभं वा यदि वाऽशुभम् ॥

---

१. योगयात्रायां षष्ठाध्याये वराहेण प्रतिपादितं यद् विजयार्थी यात्रासमये देवविशेषेभ्यो बलिं दत्त्वा प्रार्थयेद् बल्युपहृतदेवान् 'स्वप्ने मां समादिशतु' इति, एवं विस्तरेण सर्वं विधिं तत्रैव निरूप्यान्ते—

स्वप्ने निमित्तमथवा मनुजेश्वरस्य यच्छुध्वमेकतममस्य जयाजयाय ।
एवं भवत्युपकृतं सुमहद् भवद्भिः कार्यं करिष्यति यथा भवतां प्रसादात् । (२६ यो० या ६ अ०) ।
इत्युक्तम् ।

२. अद्भुतसागरे स्वप्नप्रकरणे तथा वाराहसंहिताटीकायामेवमुल्लेखो वर्तते ।

एवं प्रार्थितस्वप्नस्य दर्शनविधिरस्ति।[१]

वीरमित्रोदये राजनीति प्रकाशे यात्राप्रकरणे विजयार्थिनां राज्ञां यात्रातः पूर्वं सप्तदिनपर्यन्तं देवपूजोक्ता। अस्मिंश्च विषये विष्णुधर्मोत्तराग्निपुराणयोर्बहूनि वचनान्युपन्यस्तानि तत्र, किन्त्वहं तेषां सारांशमेवोल्लिखन् कतिचिद् वाक्यानि निर्दिक्ष्ये—तत्र प्रथमदिवसे मोदकाक्षतदधिफलपुष्पाचन्दनवस्त्रालङ्कारधूपदीपैः विनायकं विष्णुं शम्भुञ्च समभ्यर्च्य द्वितीयेऽह्नि सर्वदिक्पालानां पूजनं कृत्वा तेषां पुरः कुशादिशय्यां श्वेतवस्त्रोत्तरच्छदां निर्माय तामभितो नागपुष्पश्वेतसर्षपान् विकीर्य शय्याशिरोभागे लक्ष्मीं पादयोर्भद्रकाली दक्षिणपार्श्वे हरिं वामपार्श्वे ब्रह्माणं संपूज्य नीलपल्लवैराच्छन्नं चारुपुष्पैर्वृतं मनोहरं दृढं कलशं संपूज्य उष्णीषके न्यस्य एककालं हविष्यान्नं लघु भुक्त्वा राजा शयीत; तत्र दक्षिणपार्श्वेन स्वपन् सन् स्वयम्—

---

१. गन्धर्व तन्त्रे २६ पटले एष प्रकारो निरूपितः—

स्वप्नमानवमाश्रित्य स्वापयेत् पूर्वमस्तकम्।
तारो हि लिङ्गयं शूलपाणये द्विजईरितः॥
स्वप्नमानवमन्त्रोऽयं शयने परिकीर्तितः।
नमोऽजाय त्रिनेत्राय पिङ्गलाय महात्मने॥
रामाय विश्वरूपाय स्वप्नाधिपतये नमः।
स्प्वने कथय मे तथ्यं सर्वकार्येष्वशेषतः॥
क्रियासिद्धिं विधास्यामि त्वत्प्रसादान्महेश्वर।
मन्त्रेण स्वापकाले तु देवं प्रार्थ्य ततः स्वपेत्॥
स्वप्ने शुभाशुभं दृष्टं पृच्छेत् प्रातः शिशुं गुरुः।
गुरुणा वार्चनं कृत्वा उपवासी जितेन्द्रियः॥
दर्भशय्यागतो रात्रौ दृष्ट्वा स्वप्नं निवेदयेत्। (७६-८१)

स्वच्छन्दतन्त्रे ३ पटले साधकस्याधिवासविधाने १६२ श्लोकतो विधिमुक्त्वा ''यागभूमौ स्वपेत् पश्चाच्छिष्यैः सह वरानने'' [२१४] अत्र क्षेमराजः—''भगवदधिष्ठिते यागगृहे गुर्वादीनां स्वापो दीक्षाविषयसमुचितस्वप्नदर्शनाय'' इति पुनः शिष्यः प्रत्यूषे आह्निकं निर्वर्त्य 'गुरोः स्वप्नान् निवेदयेत्' इत्याद्युक्तं स्व० नं० ४१०२ श्लोके परशुरामकल्पसूत्रे ७ खं० वा० क्र०—

एतन्निवेदन विधिं शृणु वक्ष्यामि सुन्दरि।
प्रातः स्नानं च संध्यादि विधाय गुरुसन्निधौ॥
तत्समानसमीपे वा देवतानिकटेऽथवा।
नत्वा कृताञ्जलिः सर्वं वाच्यं इष्टवदेव हि॥
शुभस्वप्ने पुनः स्वापो न कर्तव्यः इति।

नमः शम्भो त्रिनेत्राय रुद्राय वरदाय च ।
कामनाय विरूपाय स्वप्नाधिपतये नमः ॥

भगवन् देवदेवेश शूलभृद् वृषवाहन ।
इष्टानिष्टं समाचक्ष्व स्वप्ने सुप्तस्य शाश्वतम् ॥

इति मन्त्रमुदीर्य ततः—

यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य-
तथैवैति दूर गमं ज्योतिषाम् ।
ज्योति रेकं तन्मे मनः शिव संकल्पमस्तु ॥

इति मन्त्रं पौनः पुन्येन पठित्वा शयीत । ततः प्रातरुत्थाय हृदिकुशान् न्यस्य पुरोहितं दृष्टं स्वप्नं पृच्छेत् । तत्र शुभे स्वप्ने दृष्टे एव यात्रा वक्तव्या पुरोहितेन नान्यथा ।

एवं तृतीयेऽह्नि दिक्पालाः पूज्याः । चतुर्थेऽह्नि ग्रहयागः करणीयः । पञ्चमेऽह्नि सर्वयागः करणीयः । तत्र नगरस्थसर्वदेवालयस्थदेवानां देववृक्षचैत्यगोपुराट्टालकचतुष्पथरथ्यापर्वतगुहानदीतीररम्यदेवतायतनानां च पूजां विधाय रात्रौ भूतानामर्चनं कृत्वा तथा स्वगृहेऽपि तान् सम्पूज्य वासुदेवादीनां पूजनं च सम्पाद्य तेभ्यो वलिञ्चोपहृत्य प्रार्थनां कुर्यात् प्रार्थना च तत्रैव-वासुदेवस्य ………स्वप्नं शुभाशुभं वा कथयध्वं सभाहिताः—इत्यादि निर्दिष्टा ।[1] तथा रात्रौ पूर्ववत् कार्यम्, पूर्ववच्च तथा रात्रौ स्वप्नप्रार्थनमिष्यते' इति[2] । तत्र सुस्वप्नदर्शने यात्रोक्ता—

शरीरस्फुरणे धन्ये तथा सुस्वप्नदर्शने ।
निमित्ते शकुने धन्ये जाते शत्रुपुरं व्रजेत् ॥[3]

अनेन प्रकारेण स्वप्नदर्शनस्य विधिरुक्तः ।

विष्णुधर्मोत्तरे—

सप्ताहेन यदा यात्रा भविष्यति महीपतेः ।
तदा दिने तु प्रथमे पूजनीयो विनायकः ॥

---

१. वी० मि० रा० प्र० पृ० ३३१-३३३ । २. तत्रैव ।
३. तत्रैव ( मात्स्योक्तं पद्यमिदमुद्धृतम् ) ।

मोदकैरक्षतैर्दध्ना कुसुमैश्च तथा फलैः ।
गन्धवस्त्रैरलङ्कारैर्धूपैर्दीपैर्मनोहरैः ॥

अग्निपुराणे तु हरिशम्भ्वोरपि पूजोक्ता —

पूजनीयो हरिः शम्भुर्मोदिकाद्यैर्विनायकः । इति ।

द्वितीयेऽहनि कर्तव्यं सर्वदिक्पालपूजनम् ।
दिक्पालपूजनं कृत्वा तेषां च पुरतः स्थितः ॥

शय्यां कुशाद्यैः कुर्वीत सितवस्त्रोत्तरच्छदाम् ।
विकिरेन्नागपुष्पैस्तां तथा सिद्धार्थकैः शुभैः ॥

तच्छीर्षके तु पूज्या श्रीर्भद्रकाली च पादयोः ।
हरिं दक्षिणपार्श्वे तु वामे ब्रह्माणमेव च ॥

पूजितं कलशं हृद्यं कुर्यादुष्णीषके दृढम् ।
नीलपल्लवसंछन्नं चारुपुष्पोज्ज्वलं शुभम् ॥

एककालं हविष्यान्नं लघु भुक्त्वा महीपतिः ।
स्वयं दक्षिणपार्श्वेन मन्त्रमेतमुदीरयेत् ॥

नमः शम्भो त्रिनेत्राय रुद्राय वरदाय च ।
वामनाय विरूपाय स्वप्नाधिपतये नमः ॥

भगवन् देवदेवेश शूलभृद् वृषवाहन ।
इष्टानिष्टं समाचक्ष्व स्वप्ने सुप्तस्य शाश्वतम् ॥

यज्जाग्रतो दूरमिति मन्त्रमावर्तयेत्ततः ।
हृदि न्यस्य कुशान् राज्ञः प्रयतस्तु पुरोहितः ॥

ततः स्वपेच्छुभे दृष्टे यात्रादेया तु नान्यथा ।
तृतीयेहनि संप्राप्ते देव दिङ्नाथमर्चयेत् ॥

एकमेव महाभाग दिङ्नाथं च तथा ग्रहम् ।
यां दिशं नृपतिर्गच्छेन्नाथस्तस्यास्तथैवतम् ॥

चतुर्थेऽहनि संप्राप्ते ग्रहयागो विधीयते ।
पञ्चमेऽहनि संप्राप्ते सर्वयागस्तथैव च ॥

देवतानां स्वनगरे कृता यासां तथालयाः ।
तासां सपूजनं कार्यं स्वपुरे या व्यवस्थिताः ॥

तत्रैव रात्रौ भूतानां कर्तव्यं च तथार्चनम् ।
देववृक्षेषु चैत्येषु गोपुराट्टालकेषु च ॥

चतुष्पथेषु रथ्यासु पर्वतानां गुहासु च ।
तेषां सम्पूजनं कृत्वा स्वगृहे तान् समर्चयेत् ॥

तत्र कृत्वा तथैवार्च्याः प्रमथा भूभुजा स्वयम् ।
वासुदेवस्य देवस्य तथा संकर्षणस्य च ॥

प्रद्युम्नस्यानिरुद्धस्य ब्रह्मणः शङ्करस्य च ।
कीनाशशक्रवरुणधनेशानां तु ये गणाः ॥

वायोश्च निर्ऋतेर्वह्नेस्तथा चन्द्रार्कयोश्च ये ।
ग्रहाणामथ ऋक्षाणां स्कन्दस्य धनदस्य च ॥

महाबला महाकाया महासत्त्वा महाव्रताः ।
अणिमा महिमा चैव गरिमा लघिमा तथा ॥

ईशित्वेन वशित्वेन प्राप्तिनाम्ना तथा च ये ।
अत्र कामावसायित्वं तथा येषां च विद्यते ॥

एवमष्टगुणैश्वर्यसंयुता भीमविक्रमाः ।
नानासत्त्वशिरोग्रीवा नानाप्रहरणायुधाः ॥

नानाविरागवसना नानासत्त्ववपुर्धराः ।
तथा नानाविधाहारा महाचेष्टा महाबलाः ॥

भक्तानुकम्पिनो वीरा वरदाः कामरूपिणः ।
प्रमथाः प्रतिगृह्णन्तु उपहारं नमोऽस्तु वः ॥

सपुत्रमातृभृत्योऽहं सदारः शरणं गतः।
रक्षध्वं मां महाभागा गृहे युद्धे तथाध्वनि ॥
चमूनां पृष्ठतो गत्वा नाशयध्वं तथा रिपून्।
स्वप्नं शुभाशुभं वापि कथयध्वं समाहिताः ॥
विनिवृत्तश्च दास्यामि दत्तादभ्यधिकं बलिम्।
अनिवृत्तेन दातव्याः सयत्नेन च भूभुजा ॥
पूर्ववच्च तथा रात्रौ स्वप्नप्रार्थनमिष्यते ॥ इति ॥

तत्र सुस्वप्नदर्शने यात्रोक्ता मत्स्यपुराणे—

शरीरस्फुरणे धन्ये तथा सुस्वप्नदर्शने।
निमित्ते शकुने धन्ये जाते शत्रुपुरं व्रजेत् ॥ इति ॥

(५) कल्पितस्तु कल्पनानुसारं प्रभवति। नास्त्यत्र नैयत्यं न वा प्रकार-विशेष इति।

(६ क्वचित् प्राक्तनकर्मार्जितपुण्यापुण्यैरदृष्टैर्देवराक्षसादिज्ञानात्मकं स्वाप्न-ज्ञानं जायते, स एव भाविको भविष्यत्कालिकशुभाशुभसूचकः स्वप्नः। तथा चोक्तं वराहेण।

शुभाशुभशकुनेन भाविशुभाशुभफलमिव स्वप्नेनापि तादृशेन भाविफल-मनुमीयते।

प्रत्यक्षवद् भवति यः स्फुरतीव चान्तः स्वप्नस्य तस्य नियमात् सदसत्फलाप्तिः।
स्वप्नाः शुभाशुभफलाः कथिता नराणामुद्देशमात्रमिह तानपि वर्णयामि ॥
स्वाप्नं दर्शनं तत्सुखदुःखसयुक्तमेव भवति।

अतो निश्चप्रचमेतद् यद् भाविकः स्वप्नोऽदृष्टैरेव दृश्यते।

(७) दोषजस्तु कफवातपित्तादिदोषैर्जन्यते।

उक्तञ्चाष्टाङ्गहृदये

मनोवहानां पूर्णत्वात् स्रोतसां प्रबलैर्मलैः।
दृश्यन्ते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् ॥[१]

१. अष्टा० हृ० ( शा० अ० ६ )।

अपरत्र त्वयमेव श्लोकः प्रकारान्तरेण पठ्यते । यथा –

मनोवहानां पूर्णत्वात् दोषैरतिबलैस्त्रिभिः ।
स्रोतसां दारुणान् स्वप्नान् काले पश्यति दारुणे ॥[1]

**गङ्गाधरः—"यदा मनोवहनाडीषु वातपित्तकफा अवरुद्धास्तदा दोषजा दारुणाः स्वप्ना अवलोक्यन्ते ।"[2]**

अष्टाङ्गहृदये दारुणा दोषजाः स्वप्ना निर्दिष्टाः, तान् शुभाशुभस्वप्ननिरूपणावसरे प्रकटयिष्यामः ।

प्रायो हि दोषजं स्वाप्नज्ञानं शशशृङ्गादिवदननुभूतमेव । एतदेव प्रश्नोपनिषदि असद्रात्मकरूपेण निरूपितम् । यतो हि अस्मिन् स्वप्नावसरे यादृश विकृतं रूपमालोक्यते, तादृशं तु कदापि नानुभूयते । दोषजस्वप्नविस्तारो नापेक्षितोऽत्र ।

एष दोषजस्वप्नो नहि केवलं वातपित्तकफात्मकदोषैरुत्पद्यते, अपि तु स्थानकालमनसां दोषैरपि जन्यते । अयं क्रमस्तु लोके जनैरहरहोऽनुभूयते । एक एव जनः स्थानविशेषेऽनेकविधस्वप्नान् पश्यति । स एव ततोऽन्यत्र किञ्चिदपि नावलोकयते ।-तत्र स्थानस्यैव दोषः । अत एव यत्र प्रेतानां वासः, पूतादिकेशास्थितुषेङ्गालकान्तः स्थितिः, श्मशानभूमिः, चैत्यस्थानादिः, तत्र प्रायो दुःस्वप्ना अवलोक्यन्ते । एव कुसमयशयनात् कालदोषात् तथा ऊहापोहात्मिकविकटमनः स्थितिदोषादपि दारुणाः स्वप्नाः संजायन्ते । विस्तरस्तु वैज्ञानिकसिद्धान्ते प्रपञ्चयिष्यते ।

नृसिंहोत्तरतापिन्याम्—**'स्वप्नस्थानः सूक्ष्मप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः सूक्ष्मभुक् चतुरात्मा तैजसो हिरण्यगर्भो द्वितीयः पादः,** । इति[3]

श्रुतौ स्वप्नावस्थाभिमानिनस्तैजसात्मनश्चातुरात्म्यमुक्तम् । तच्च तैजसविश्व, तैजसतैजस, तैजसप्राज्ञ, तैजसतुरीयभेदात् सिद्ध्यति । एतच्च चातुरात्म्यमात्मनः स्वप्नावस्थायाश्चतुर्विधत्वं विना नोपपद्यते । अतोऽस्याः स्वप्नावस्थायाश्चातुर्विध्यं भवितुमर्हति । तच्चेत्थमुपपद्यते – स्वप्नजाग्रत्, स्वप्नस्वप्न, स्वप्न-सुषुप्ति, स्वप्नतुर्यभेदात् ।

तत्र यदा स्वप्ने मानसव्यापारं विना स्वाप्निक चक्षुरादिना रूपादिविशेष—जातमनुभवति तदा स्वप्नजागरणम्, तद्व्यष्टयभिमानी, आत्मा तैजसविश्वो भवति समष्टयभिमानी सूत्रविराट्, उभयैक्याभिमानी अनुज्ञात्रोता भवति । यदा स्वप्नावस्थायां स्वप्नजाग्रत्कलनां विहाय स्वाप्निकचक्षुरादिव्यापारं विना केवलमनसैव

---

१. च० सू० अ० २१ ; २. च० सू० अ० २१ टीकायाम् ; ३. नृ० ना० उ० १ खण्डः ।

विषयाननुभवति, तदा स्वप्नस्वप्नः, तद्व्यष्टयभिमानी तैजसतैजसः, समष्टयभिमानी सूत्रसूत्रम्, उभयैक्याभिमानी अनुज्ञात्रनुज्ञाता भवति ।

यदा स्वाप्नावस्थाप्रविभक्तजाग्रत्स्वकलनां विहाय स्वाप्निकचक्षुरादिना मनसा वा सामान्यविशेषजातमगृहीत्वा बाह्यरूपादीनात्मानं च विस्मृत्य केवलस्तब्धतयैवावस्थितिः, तदा स्वप्नसुषुप्तिः, तद्व्यष्टयभिमानी तैजसप्राज्ञः, समष्टयभिमानी सूत्रेश्वरः उभयैक्याभिमानी अनुज्ञात्रनुज्ञैकरसः ।

यदा स्वकृतपुण्यपरिपाकतः स्वप्नप्रविभक्तजाग्रत्स्वप्नस्वापकलनां विहाय स्वान्तर्बाह्यचित्तकल्पिताशेष विशेषकलनाभावाभावप्रकाशकस्वप्नतुर्यतया अवस्थितिः, तदा स्वप्नतुर्यावस्था, तदभिमानो तैजसतुरीयो भवति । व्यष्टौ, समष्टौ सूत्रतुरीयः, ऐक्ये अनुज्ञातृतुरीयो भवति ।

ऋषिमायाः (रेशमायाः) स्वसुर्मातुर्ध्यात्वा पूतं पदो रजः ।
रामनारायणेनोक्तं विशदं स्वप्नलक्षणम् ॥

# स्वप्नस्वरूपविचारः

अस्मिन् प्रकरणे युक्त्या प्रमाणैश्च मयाऽधुना ।
स्वप्नानां फलभेदेन स्वरूपमुपवर्ण्यते ॥

## पुनः स्वप्नस्य शुभाशुभद्वैविध्यम्—

इत्थं कारणाकृतिभेदाभ्यां स्वप्नस्य सप्तविधत्वेऽपि फलभेदेन द्वैविध्यमुच्यते। स्वप्नो हि द्विविधः—१. सुस्वप्नः, २. दुःस्वप्नश्चेति। तत्र यो दर्शनकाले द्रष्टुः सुखं जनयन् भावि श्रेयश्च सूचयति, स सुस्वप्नः[१]। तस्योदाहरणं छान्दोग्ये—"स यदि स्त्रियं पश्येत् समृद्धं कर्मेति विद्यात्।

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।
समृद्धि तत्र जानीयात् तस्मिन् स्वप्न निदर्शने ॥ इति ॥

स्त्र्यादिप्रशस्तस्वप्नदर्शने कर्मणां फलनिष्पत्तिर्भविष्यति 'इति जानीयात्' इति भाष्यम्।

अथ दर्शनकाले दुःखं जनयन् यः पुरुषस्य भाव्यरिष्टं सूचयति, स दुःस्वप्नः। एतस्योदाहरणं वह्वृचाः पठन्ति[२]—"पुरुषं कृष्णं कृष्णदन्तं पश्यति स्वप्ने स एनं हन्ति वराह एनं हन्ति मर्कट एनमास्कन्दयति आशु वायुरेनं प्रवहति सुवर्णं खादित्वाऽपगिरति मध्वश्नाति बिसानि भक्षयत्येकं पुण्डरीकं धारयति खरैर्वराहैर्युक्तो याति कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणाभिमुखो व्रजति .. .........' इत्यादिशुभाशुभारिष्टस्वप्ना विस्तरेणाग्रे वक्ष्यन्ते।

अत्र तु प्रकरणवशात् कतिचित् प्रदर्श्यन्ते।

स्वप्नाध्याये स्वप्नस्य भाविसूचकं वचनमाहुः—

आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम्।
विष्ठानुलेपो रुदितं मृतं च स्वप्ने त्वगम्यागमनं च शस्तम् ॥

---

१. छा० उ० ५-२-७-८ तथा च—'सुव्यक्तो यश्च सुस्वप्नः संवत्पुण्यफलप्रदः' ब्र० वै० कृ० ख० ७७ अ० ३ श्लोकः।

२. ऐतरेयारण्यकम्—३।२।४।

कृष्णाम्बरधरा नारी कृष्णगन्धानुलेपना।
अवगूहति यं स्वप्ने मृत्युं तस्य विनिर्दिशेत्॥[१] इति॥

एतत्सर्वमभिप्रेत्य स्वप्नाधिकरणे भगवान् वादरायणः सूत्रयामास—"सूचकश्च हि श्रुतेराचक्षते च तद्विदः[२]"

तथा च भाष्यकारः—"आचक्षते च स्वप्नाध्यायविदः कुञ्जरारोहणादीनि स्वप्ने धन्यानि खरयानादीन्यधन्यानि[३] इति। मन्त्रदेवताद्रव्यविशेषनिमित्ताश्च केचित् स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्यन्ते" इति।[४] विस्तरस्तु ब्रह्मसूत्रे शाङ्करभाष्ये च द्रष्टव्यः।

स्वाप्निककृत्यस्यापि पापजनकत्वम्. यथा प्रातिभासिकरज्जुसर्पा स्वयमसत्याः सन्तो द्रष्टुः शरीरकम्पनादिसत्यकार्यं जनयन्ति, एवं स्वप्ना अपि स्वयमसत्याः सन्तः क्वचित् शुक्रपातादिरूपं सत्यंकार्यमुत्पादयन्ति। अतं एव स्वप्नकृतकार्यजन्यः श्रुति-स्मृत्यादिषु दोषो विधीयते। तदर्थं प्रायश्तित्तमप्युपदिश्यते। तथा च ऋग्वेदे – "अस्ति ज्यायान् कनीयस उपारे स्वप्नश्चनेदनृतस्य प्रयोता[५]"

अत्र सायणः – "एवं च सति स्वप्नश्चन स्वप्नोऽपि अनृतस्य पापस्य प्रयोता प्रकर्षेण मिश्रयिता भवति। इदिति पूरकः। स्वप्ने कृतैरपि कर्मभिर्बहूनि पापानि जायन्ते। किमु वक्तव्यं जाग्रति कृतैः कर्मभिः पापान्युत्पद्यन्त इति।"

एवं तदर्थं प्रायश्चित्तमपि मनौ—

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः।
स्नात्वाऽर्कमर्चयित्वा त्रिः पुनर्मामि[६]त्यृचं जपेत्॥२।१८१ इति॥

प्रायश्चित्ताध्याये याज्ञवल्क्यमिताक्षरायामपि एतदेव प्रायश्चित्तं निर्दिष्टम्।

वसिष्ठस्मृतौ—'एतदेव रेतसः प्रयत्नोत्सर्गे दिवा स्वप्ने च' इति। एतद्वाक्यं तु स्त्रीसंभोगमन्तरेण कामतः चरमधातुविसर्गे विहितं नैर्ऋतयागमति-दिशेदिति।

---

१. बृहस्पतिप्रणीतस्वप्नाध्याये ४ श्लोकः १६ श्लोकश्च; २. ब्र० सू० ३।२।४।
३. तत्रैव; ४. शां० भा० (ब्र० सू० ३।२।४); ५. ऋ० वे० ७।८६।६।
६. पुनर्मामैत्विन्द्रियं।

तत्र लोके एवं दृश्यते यत् स्वकीयविषयको दृष्टः स्वप्नः स्वस्मै भाविशुभाशुभ-सूचको भवति, परेषां येषां केषां सुहृत्कुटुम्बसम्बन्धिनामपि[१] शुभाशुभसूचकः सिध्यति। इदमपि निर्विवादं यत्प्राणिसंबन्धि स्वप्नदर्शनं जायते तद्विषयकफलवन्तः स्वप्नाः शतश उपलभ्यन्ते लोके। यथा वाल्मीकीये त्रिजटोक्तिः -

स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः।
राक्षसानामभावाय भर्त्तुरस्या जयाय च ॥ (वा०रा०सु० २७।६)

यस्या ह्येवंविधः स्वप्नो दुःखितायाः प्रदृश्यते।
सा दुःखै र्बहुभिर्मुक्ता प्रियं प्राप्नोत्यनुत्तमम् ॥ (वा.रा.सु० २७।४४)

अर्थसिद्धिं तु वैदेह्याः पश्याम्यहमुपस्थिताम्।
(वा०रा०सु०का० २७।४९)

अत्र विचारणीयमेतद् यत् कार्यकारणयोः सामानाधिकरण्यात् स्वगतादृष्टं स्वसंबन्धि सुखदुःखान्येवोत्पादयितुं प्रभवति। किन्तु स्वप्नविषये लोके वैपरीत्यमेवानुभूयते। स्वविषयकः स्वप्नः स्वस्मै परस्मै वा फलति। तत्र यदि एवं निगद्यते यत् स्वसम्बन्धी स्वप्नः स्वादृष्टैर्भवति, परसंबन्धी च परकीयादृष्टैः। तत्र परस्यादृष्टं वैयधिकरण्यात् कथं परस्मिन् फलमुत्पादयितुं समर्थमिति ?

अत्रोच्यते—अदृष्टं बहुविधं भवति। तत्र किञ्चित् स्व-विषयकं किञ्चिच्च स्वकीयस्वामिभृत्यशत्रुसुतदारसुहृत्संबन्ध्यादिविषयकम्। संबन्धी च ऐहिको जन्मान्तरीयोऽपि संगृह्यते। तस्यापि प्राक्तनसंस्कारवशात् तद्भाविशुभाशुभसूचकं स्वप्नदर्शनं जायते।

अपि च— नरा न केवलं स्वस्यैव सुखेन दुःखेन वा सुखिनो दुःखिनो भवन्ति, अपि तु स्ववर्गीयसुखदुःखाभ्यामपि। अतः स्वादृष्टवशादेव तादृशसुखदुःखे स्वप्नसूचिते भवतः। एवं शत्रुविषयकं स्वप्नदर्शनमपि। तथा हि—शत्रवः सुखिनस्तदाऽस्मानं दुःखाकुर्वन्ति दुःखिनश्चेत्तदा सुखाकुर्वन्ति। अतः स्वादृष्टादेव शत्रुविषयकोऽवलोक्यते स्वप्नः। त्रिजटायाः स्वप्नोऽपि सीतायाः शुभाशुभसूचकः त्रिजटागतादृष्टादेव। सीतागत सुख दुःखादिनाऽऽत्मीयत्वेन तस्या अपि सुखदुःखित्वात्।

---

१. "सुहृदो यांश्च पश्यन्ति व्याधितो वा स्वयं तथा" (सुश्रु० सू० २९ अ० ५.५ श्लोक)
ये दृष्टाः स्वं प्रति स्वप्नाः स्वस्यै फलदाश्च ते।
परं प्रति च ते तस्य फलदाः किञ्चिदात्मनि ॥ (मुहूर्तगणपतौ २४।८६)

**फलसूचकस्वप्ननिरूपणम्—**

सप्तविधानां दृष्टश्रुतानुभूतप्रार्थितकल्पितभाविकदोषजानां स्वप्नानां मध्य आद्याः पञ्च स्वप्ना निष्फला एव। केवलमवशिष्टौ[१] भाविकदोषजौ स्वप्नावेव शुभाशुभसूचकौ। तत्रापि दिने दृष्टौ सद्यो विस्मृतौ नितान्ताल्पावर्तिमहान्तौ तावपि निष्फलौ स्तः। एवं कफप्रकृतिजनानां जलादिदर्शनं वातप्रकृतिजनानां गगनोड्डयनं पित्तप्रकृतिकानां वह्न्यादिदर्शनम्। एतादृशः स्वप्नः सन्नपि भाविको दोषजश्च निष्फलो भवति।

उक्तञ्च वाग्भटे—

'तेष्वाद्या निष्फलाः पञ्च यथा स्वप्रकृतिर्दिवा।' इति।

इमौ द्वौ स्वप्नौ यदि पूर्वरात्रे प्रथमयामे दृष्टौ, तदा चिरादर्थात् संवत्सरेणाल्पतया वा फलदायकौ, द्वितीययामे च षण्मासाभ्यन्तरे। पश्चिमरात्रे प्रथमयामे त्रिमासाभ्यन्तरे, द्वितीययामे च मासेन। अरुणोदये तु दशाहेन फलदायकौ स्तः। जागरणसमकालस्वप्नः तत्क्षणं फलदायकः तद्दिने एव वा। प्रातःकाले स्वप्नदर्शनानन्तरं यदि पुनर्निद्रा नागता, अपि च स्वप्नश्रुतशुभवचनैर्निद्रा निवृत्ता, स शुभसूचकः स्वप्नः शीघ्रं महत्फलं विधत्ते। एव दुःस्वप्नोऽपि तादृश आशुफलकारी सिध्यति। रात्रौ यदा कदा वा स्वप्नं दृष्ट्वा निद्रां विजहाति, तत्पश्चाद् यदि निद्रालुर्न स्यात्, तदा सोऽप्यासन्नतरफलज्ञापकः[२] एकस्यामेव रात्रौ शुभस्वप्नदर्शनमशुभस्वप्नदर्शनञ्च यदि जातम्, तत्र पश्चाद्भव एव स्वप्नः सफलः, प्राग्जातस्तु निष्फलः। पश्चाज्जातेन शुभस्वप्नेन प्राक्तनानामशुभानां मार्जनं शुभफलञ्च भवति। सत्यप्येवं रोगभयवेगरोधादिपीडितश्चिन्तितो[३] नग्नोऽबद्धशिखश्च नरः स्वप्नफलं न भजते। स्वप्नदर्शनानन्तरं यदि निद्रां यो याति, स्वप्नावस्थायां च यः स्वप्नं वक्ति, उभौ तत्फलं न लभेताम्। तदुक्तं वाग्भटे (शा० ६)।

'विस्मृतो दीर्घह्रस्वोऽति पूर्वरात्रे चिरात्फलम्।
दृष्टः करोति तुच्छं च गोसर्गे तदहर्महत्॥

---

१. अत्रापि वृद्धावस्थादृष्टानामतिहासादिगुणोत्पन्नानां क्षुधादिदोषोद्भवानां स्वप्नानां वैतथ्यमेव ज्ञेयम्। तथोक्तम्—
आयुस्तृतीयभागे शेषे पतितः प्रकीर्तितः स्वप्नः।
अतिहासशोककोपोत्साहजुगुप्साभयाद् गुणोत्पन्नः॥
वितथः क्षुधापिपासामूत्रपुरीषोद्भवः स्वप्नः॥ (स्व० प्र० १३९)

२. प्रातः सद्यः फलः स्वप्नस्ततः स्वप्यान्न चेन्नरः। (मुहूर्तगणपतौ २४।४२)

३. रोगचिन्तोद्भवा व्यर्थाश्चिरपाकादि वीक्ष्यताम्॥ (मु० ग० २४।४२)

निद्रया चानुपहतः प्रतीपैर्वचनैस्तथा ।
अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः ॥
पश्येत् सौम्यं शुभं तस्य शुभमेव फलं भवेत् ।"

मात्स्ये २४१ अध्याये—

स्वप्नास्तु प्रथमे यामे संवत्सरविपाकिनः ।
षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्तृतीयके ॥
चतुर्थे मासमात्रेण पश्यतो नात्र संशयः ।
अरुणोदयवेलायां दशाहेन फलं भवेत् ॥
एकस्यां यदि वा रात्रौ शुभं वा यदि वाऽशुभम् ।
पश्चाद् दृष्टस्तु यस्तत्र तस्य पाकं विनिर्दिशेत् ॥
तस्माच्छोभनकेस्वप्ने पश्चात् स्वप्नं न पश्यति[1] ।

कादम्बर्यां च श्रीबाणभट्टः—"अवितथफला हि प्रायो निशावसानसमदृष्टा भवन्ति स्वप्नाः" इति ।

अन्यत्रापि एवं दृश्यते फलपरत्वम्—

आद्ये यामे निशि स्वप्नो वर्षेण फलदो भवेत् ।
द्वितीये मासषट्केन त्रिभिर्मासैस्तृतीयके ॥
प्रातः सद्यःफलः स्वप्नः···· ···· ····इत्यादि । (मु०ग० २।१४१-४२)

ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे ( ७७ अध्याये )—

स्वप्नस्तु प्रथमे यामे संवत्सरफलप्रदः ।
द्वितीये चाष्टभिर्मासैस्त्रिभिर्मासैस्तृतीयके ॥
चतुर्थे चार्धमासेन स्वप्नः स्वात्मफलप्रदः ।
दशाहे फलदः स्वप्नोऽप्यरुणोदयदर्शने ॥
प्रातः स्वप्नश्च फलदस्तत्क्षणं यदि बोधितः ।
दिने मनसि यद् दृष्टं तत्सर्वञ्च लभेद् ध्रुवम् ॥

---

१. वीरमित्रोदये 'शस्यते' इति पाठः । अयं शोभनः प्रतिभाति ।

चिन्ताव्याधिसमायुक्तो नरः स्वप्नश्च पश्यति ।
तत्सर्वं निष्फलं तात प्रयात्येव न संशयः ॥
जडो मूत्रपुरीषेण पीडितश्च भयाकुलः ।
दिगम्बरो मुक्तकेशो न लभेत् स्वप्नजं फलम् ॥
दृष्ट्वा स्वप्नं च निद्रालुर्यदि निद्रां प्रयाति च ।
विमूढो वक्ति चेद् रात्रौ न लभेत् स्वप्नजं फलम् ॥ इति ॥

अग्निपुराणे ( २२९ अध्याये )—

स्वप्नास्तु प्रथमे यामे संवत्सरविपाकिनः ।
षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्त्रियामिकाः ॥
चतुर्थे त्वर्धमासेन दशाहादरुणोदये ।
एकस्यामथ चेद् रात्रौ शुभं वा यदि वाऽशुभम् ॥
पश्चाद् दृष्टस्तु यस्तत्र तस्य पाकं विनिर्दिशेत् ।
तस्मात्तु शोभने स्वप्ने पश्चात् स्वापो न शस्यते ॥ इति ॥

पराशरोऽपि—

"सुरर्षिसिद्धगणगन्धर्वयक्षनागानामुपयाचितानुबन्धे
यथोक्तदर्शननिमित्तानुबन्धिफलम् ।, तथा—
शुभाशुभस्वप्नविधानमुक्तमयुक्तयुक्तञ्च समूह्य बुद्ध्या ।
देशादिवर्णाकृतिसम्पदश्च तत्तत्फलं संपरिकल्पयेच्च ॥
पादादिपादोत्तरपादवृद्ध्या वर्षार्धमासत्रयमासकालाः ।
क्षया विभागेषु चतुर्षु दृष्टाः स्वप्ना अनिष्टेष्टफलप्रदाः स्युः ॥"

वराहोऽपि—

आद्ये वर्षाद् वत्सरार्धाद् द्वितीये
पाको वर्षार्धार्धभागे तृतीये ।
मासात् पाकः शर्वरीपश्चिमान्ते
सद्यः पाको गोविसर्गेषु दृष्टः ॥ इति ॥

सुश्रुते ( सूत्रस्थाने २९ अध्याये )—

यथा स्वं प्रकृतिस्वप्नो विस्मृतो विहतश्च यः ।
चिन्ताकृतो दिवादृष्टो भवन्त्यफलदास्तु ते ॥ इति ॥

वैज्ञानिकास्तु इत्थं ब्रुवन्ति—यथा बाल्यावस्थायां निरोधासामर्थ्यंभयेत्यादि-प्रतिबन्धाद् येषां बालानां मानसिकमूलप्रवृत्तयो निरुन्धन्ति, अर्थात् स्वाभाविकतया-ऽत्यन्तेप्सितक्रीडादिकार्येषु मातृपित्राद्यवरोधान्न स्वेच्छया रमन्ते, ता एव प्रवृत्तयः समापातेऽवसरे प्रबुद्धाः सत्यस्तेषु चापल्यादिकं जनयन्ति। तथैव ये जाग्रद्दशायाम-तृप्तवासनाः सन्ति, ते स्वप्नावस्थायां मानसिकजगति अनेकानेकमनो विकल्पित-स्वप्नाननुपश्यन्ति। अतः स्वप्नेऽतृप्तवासनापि कारणम्। तज्जन्याः स्वप्ना न किमपि फलं विदधति।

केचनापि स्वप्नाः शुभमशुभं वा फलं न ददति। परन्तु केषाञ्चित् काकतालीय-न्यायेन फलं जायते इत्यपि केचिद् वदन्ति। तथा चोक्तं वेणीसंहारे—

> प्रायेणैव हि दृष्यन्ते स्वप्नाः कामं शुभाशुभाः।
> ग्रहाणां चरितं स्वप्नोऽनिमित्तौत्पातिकं तथा॥
> फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति॥ इति॥

धर्मसिन्धौ तृतीय परिच्छेदे कलियुगकार्याकार्यप्रकरणान्ते पृ० ५३९—

> शपथाः शकुनाः स्वप्नाः सामुद्रिकमुपश्रुतिः।
> देवपूजोपहारादेः संकल्पः कार्यसिद्धये।
> प्रश्नोत्तरं कालविदां सम्भवन्ति कलौ क्वचित्॥ इति॥

चरके---इ० स्था० ५।३९---

> अरोगः संशयं गत्वा कश्चिदेव प्रमुच्यते॥ इति॥

अष्टाङ्गहृदयेऽपि शा० ६।६०---

'अरोगः संशयं प्राप्य कश्चिदेव विमुच्यते' इति।

पञ्चतन्त्रे स्वप्नविषये एष विचारोऽपि विचारणीयः—

> यद् वाञ्छति दिवा मर्त्यो वीक्षते वा करोति वा।
> तत्स्वप्नेऽपि तदभ्यासाद् ब्रूते वाथ करोति वा॥ १४५
> शुभं वा यदि वा पापं यन्नृणां हृदि संस्थितम्।
> सुगूढमपि तज्ज्ञेयं स्वप्नवाक्यात्तथा मदात्॥ (१४५ मित्रभेदे)[५]

---

१. वे० सं० २।　　२. धर्म० सि० ३। पृ ५३९।
३. च० इ० स्था० ५।३९।　　४. अष्टा० हृ० शा० ६।६०।
५. पञ्च० मि० मे० १४४।१४५।

के स्वप्ना फलदायकाः कतिविधाश्च, तत्राह पराशरः—तस्य त्रिविधं दर्शनम्, १. अपार्थकम्, २. यथार्थम्, ३. अन्यार्थञ्च। मनो हि निद्रानिहिततत्त्वज्ञानं कदाचिदतिहर्षशोकक्रोधचिन्ताभयमदप्रमोदेर्ष्याकलुषितमतिदृष्टश्रुतार्थभूतार्थभावितमाविशुद्ध-धातुदोषप्रकोपप्रतापप्रतप्तेन्द्रियमिवोद्भवान्तमवशमभिक्षिप्तमतिवहुशोऽतिव्याकुलं-दिवावृत्तं वा स्वप्नगतमनुभवति, तदनियतमपार्थकमुच्यते।

कायवाङ्मनोविशुद्धानां चातिसत्त्वानां देवताः प्रत्यक्षवदभिदर्शयन्ति तद् यथार्थमित्याचक्षते। न चानिमित्तभाविनो भावाः। कालोहि भूतार्थनिमित्तमेष्यफलबोधकं स्वप्नाख्यमभिदधाति। तदन्यथा दृष्टमन्यथानियतफलमिति। भवति चात्र-मनोविकारजस्वप्नमभिवाञ्छन्त्यपार्थकम्। यथार्थदर्शनार्थत्वाद् यथार्थं देवताश्रयं वा।

यो हि अन्यदर्शनादन्यफल आत्मनिमित्तजस्तमन्यार्थमनेकार्थं प्रवक्ष्याम्यखिलार्थतोऽन्यः।

न्यायवैशेषिकदर्शने स्वप्नस्य त्रैविध्यं विभिन्नरूपेण वर्णितम्! तत्तु विभिन्नशास्त्रकाराणां मतनिरूपणावसरे वक्ष्यते।

वासिष्ठामृतादौ पुनः स्वप्नस्य सर्वतो विलक्षणाः त्रिविधाः प्रकाराः प्रदर्शिताः। यथा—स्वप्ना अपि त्रिविधाः, स्वप्नजाग्रत्, स्वप्नस्वप्नः, स्वप्नसुषुप्तिश्चेति भेदात्। स्वप्ने मन्त्रादिप्राप्तिः स्वप्नजाग्रत्। स्वप्नेऽपि 'स्वप्नो मया दृष्टः' इति बुद्धिः स्वप्नस्वप्नः। जाग्रद्दशायां कथयितुं न शक्यते, स्वप्नावस्थायां यत् किञ्चिदनुभूयते तत्स्वप्नसुषुप्तिरिति।

# सुस्वप्ननिरूपणाध्यायः

पुराणादिषु ये स्वप्नाः शुभाः प्रोक्ताः शरीरिणाम् ।
तेषां निरूपणं सम्यक् क्रियतेऽत्र प्रयत्नतः ।।

**शुभस्वप्नाः—**

स्वप्ने शुभवस्तूनां शुभघटनानां च दर्शनेन शुभफलानि जायन्ते। एते हि यत्कृते दृष्टास्तस्यैव फलदा भवन्ति ।

शुभस्वप्नविशेषकृतानि शुभानि विशेषफलानि, यथा—

स्वप्ने गो-गजा-ऽश्व-प्रासाद-पर्वत-वृक्षारोहणदर्शनेन धनलाभः। भोजन-रोदन-वीणाग्रहणेन धान्यपूर्णपृथिवीलाभः शस्त्रास्त्रव्रण-कृमिवेधेन विष्ठा-रुधिरयोगेन च धनलाभः। अगम्यागमनेन भार्यालाभः। शुक्रसेकेन, शुक्रपातेन, नरक-नगर-रक्तसमुद्र-प्रवेशेन सुधापानेन वा शुभवार्तालाभो विपुलधनलाभश्च। गज-नृप-सुवर्ण-वृषभ-धेनु-दीपान्न-फल-पुष्प-कन्या-छत्र-रथ-ध्वजदर्शनेन कुटुम्बकीर्तिविपुलश्रीलाभः। जलपूर्ण-कुम्भ-द्विज-वह्नि-पुष्प-ताम्बूल-मन्दिर-श्वेतधान्य-नट-वेश्यादर्शनेन श्रीलाभः। गोदुग्ध-घृतदर्शनेन धन-पुण्यलाभः। कमलपत्रे पायस-दधि-दुग्ध-घृत-मधु-मिष्टान्न-स्वस्तिक-भोजनेन राज्यलाभः। पक्षिमनुष्यमांसभक्षणेन बहुधन-शुभवार्ता-मनोरथप्राप्तिः। छत्र-पादुकालाभेन धान्यलाभः। निर्मलतीक्ष्णकरवाललाभेनापि धान्यलाभः। अनायासेन सन्तरणेन प्रधानपदप्राप्तिः। फलितवृक्षदर्शनेन निश्चयधनलाभः। सर्पदंशनेन धनलाभः। सूर्यचन्द्रदर्शनेन व्याधिनाशः। वडवा-कुक्कुटी-क्रौञ्चीदर्शनेन निश्चयभार्यालाभः। निगडबन्धनेन प्रतिष्ठापुत्राप्तिः। नदीतटे पद्मपत्रे विशीर्णपद्मपत्रे दध्यन्नपायसभोजनेन राज्यावाप्तिः। जलाशय-वृश्चिक-सर्पदर्शनेन धन-पुत्र-विजय-प्रतिष्ठाप्राप्तिः। शृङ्गि-दंष्ट्रि-सूकर-वानरपीडया नूनं राज्यविपुलधनलाभः। मत्स्य-मांस-मुक्ता-शंख-चन्दन-हीरकदर्शनेन विपुलधनलाभः। सुरा-रुधिर-स्वर्ण-विष्ठा-दर्शनेन धनलाभः। देवप्रतिमा-शिवलिङ्गदर्शनेन धनवृद्धिश्रीलाभः। आमलक-धात्रीफलोत्पलदर्शनेन धनागमः। देव-द्विज-गो-पितृ-ब्रह्मचारिणां परस्परं यद्दानं तादृशफलकमेव। शुक्लवस्त्र-माल्य-चन्दना-वृतनारीणामालिङ्गनं श्रीसुखकरम्। पीतवस्त्र-माल्य-चन्दनचर्चितानां नारीणामा-लिङ्गनं कल्याणदायकम्।

सर्वाणि शुक्लवस्तूनि भस्माऽस्थिकार्पासवर्जितानि शुभदानि। तथैव गो-हस्ति-वाजि-द्विज-देववर्जितानि सर्वाणि कृष्णवस्तूनि अशुभानीति बोध्यम्। भूषणभूषितानां दिव्यस्त्रीणां तादृशब्राह्मणानाञ्चागमनं यस्य गेहे भवति, स प्रियमाप्नोति। सन्तुष्टः सस्मितो ब्राह्मणस्तादृशी ब्राह्मणी वा यस्मै स्वप्ने फलं ददाति स पुत्रवान् भवति। स्वप्ने विप्राणामाशीर्वाद ऐश्वर्यदायकः। गेहे विप्रागमनदर्शनेन हरिहरब्रह्मागमनतुल्येन धनधान्ययशश्शुभसौख्यगौरवमानानि पदे पदे स्युः। धेनुलाभदर्शनेन भूमिलाभः हस्ती यं करेण स्वमस्तके स्थापयेत् तस्य राज्यलाभः। ब्राह्मण्यालिङ्गनेन तीर्थयात्रा। द्विजो यस्मै पुण्यं ददाति स जयी यशस्वी धनी सुखी च भवति। तीर्थसौधरत्नगृह-दर्शनेन जयधनतीर्थप्राप्तिः। पूर्णकलशलाभेन पुत्रसम्पत्तिलाभः यस्य गेहे सुन्दरी धान्य-पात्रेण सहागच्छति तद्गेहे लक्ष्म्या आगमनम्। दिव्यस्त्री यद्गेहे पुरीषं विसृजति, तत्रार्थलाभो दरिद्रापलायनञ्च।

यस्य गेहे ब्राह्मण्या सह ब्राह्मणः, गिरिजया सह शङ्करः, लक्ष्म्या सह नारायणो वाऽऽयाति, अथवा ब्राह्मणो ब्राह्मणी वा यस्मै धान्यं पुष्पाञ्जलिं वा ददाति, तेन सर्वतोमुखी श्रीर्लभ्यते। मुक्ताहारं पुष्पमालां चन्दनञ्च यो लभते, अथवा-एतानि विप्रो यस्मै ददाति गोरोचनं पताकां हरिद्रामिक्षुदण्डं सिद्धान्नं वा यः स्वप्ने लभते, तेषां श्रीः सर्वतोमुखी जायते। यस्य मस्तके ब्राह्मणो ब्राह्मणी वा छत्रं धारयति शुक्लधान्यं वा ददाति स राजा भवति। यः शुक्लमाल्यानुलेपनो रथस्थो भवति, अथवा रथस्थः सन् यो दधि पायसं वा भुङ्क्ते, अथवा यस्मै ब्राह्मणो ब्राह्मणी वा सुधां दधि प्रशस्त-पात्रं वा ददाति सोऽपि राजा भवति। रत्नभूषणभूषिता अष्टवर्षीया कुमारी यस्योपरि प्रसन्ना जाता, अथवा यस्मै पुस्तकं ददाति स कविर्भवति। सा कन्या स्वप्ने यं पाठयति पुस्तकं च प्रयच्छति, अथवा यो हि पथि यत्र तत्र वा पुस्तकं प्राप्नोति, ते सर्वे पण्डिता भवन्ति। ब्राह्मणो यस्मै महामन्त्रं मन्त्रं शिलामयीं प्रतिमां च ददाति स धनी गुणी विज्ञो मन्त्रसिद्धिकर्ता वा भवेत्। यो विप्रगणान् दृष्ट्वा नत्वा आशिषं च लभते, अथवा यस्मै विप्रः शुक्लधान्ययुतां भूमिं ददाति तौ नृपपदमाप्नुतः। यं विप्रो रथे संस्थाप्य नानास्वर्गान् प्रदर्शयति तस्यायुर्धनवृद्धिर्भवेत्। कन्याप्राप्ति-सरोवर-नदी-नद-शुक्ल सर्प-शुक्लपर्वतदर्शनं लक्ष्मीकरं स्यात्।

आत्मनोऽरोगित्वसुखित्वमृतत्वसंदर्शनेन क्रमशः आरोग्यं सुखं चिरजीवनञ्चा-प्नोति। दिव्यस्त्री यं वदति भवान् मम स्वामी भवेति, तत् स्वप्नं दृष्ट्वा सद्यो यो जागर्ति स राजा स्यात्। कालिकास्फटिकमालेन्द्रचापदर्शनं प्रतिष्ठाकरं स्यात्। मम दासो भवेति यं ब्राह्मणो वदति, स हरिसेवको भवति। स्वप्ने विप्रदर्शनं हरिहर-दर्शनतुल्यम्। एवं ब्राह्मणी, लक्ष्मीः, पार्वती, शुक्ला स्त्री, वेदमाता, जाह्नवी, सरस्वती, बालः, कृष्णः, बालिका, राधिका वेत्येतेषां दर्शनमपि।

उपर्युक्ताः स्वप्नास्तत्तद्विशेषफलदायकाः सकेतानुसारेणोपवर्णिताः। एतेषु मध्ये कतिचित् तथा चान्ये सौम्यदृष्टाः स्वप्नाः सामान्यतः। शुभावहाः रुधिरदर्शनं रुधिरस्नानं पायसभक्षणमार्द्रमांसभक्षणं शत्रुविनाशः सूर्यचन्द्रताराग्रहणं शक्तध्वजालिङ्गनमित्याद्याः स्वप्ना अपि साधारणतः शुभाः। एतत् सर्वमग्निपुराणादिषु प्रपञ्चितम्।

तथा चोक्तं ब्रह्मवैवर्तपुराणे श्रीकृष्णजन्मखण्डे ७७ अध्याये[1]—

गवाञ्च कुञ्जराणाञ्च हयानाञ्च व्रजेश्वर।
प्रासादानाञ्च शैलानां वृक्षाणां च तथैव च ॥१४॥

आरोहणञ्च धनदं भोजनं रोदनं तथा।
प्रतिगृह्य तथा वीणां शस्याढ्यां भूमिमालभेत् ॥१५॥

शस्त्रास्त्रेण यदा विद्धो व्रणेन कृमिणा तथा।
विष्ठया रुधिरेणैव स युक्तोप्यर्थवान् भवेत् ॥१६॥

स्वप्नेप्यगम्यागमनो भार्यालाभं करोति यः।
मूत्रसिक्तः पिबेच्छुक्रं नरकं च विशत्यपि ॥१७॥

नगरं प्रविशेद् रक्तं समुद्रं वा सुधां पिबेत्।
शुभवार्तामवाप्नोति विपुलञ्चार्थमालभेत् ॥१८॥

गजं नृपं सुवर्णञ्च वृषभं धेनुमेव च।
दीपमन्नं फलं पुष्पं कन्यां छत्रं रथं ध्वजम् ॥१९॥

---

१. एतदध्यायोक्तस्वप्नानां माहात्म्यं स्वयमेव भगवता कृष्णेनेत्थं प्रतिपादितम्, नन्द उवाच—
केन स्वप्नेन किं पुण्यं केन मुख्यो भवेत् सुखम्।
कोऽपि कोऽपि च सुस्वप्नः तत्सर्वं कथय प्रभो।
श्रीभगवानुवाच—
वेदेषु सामवेदश्च प्रशस्तः सर्वकर्मसु।
तत्रैव काण्वशाखायां पुण्यकाण्डे मनोहरे।
सुव्यक्तो यश्च सुस्वप्नः संवत्पुण्यफलप्रदः।
तत् सर्वं लिखितं तात कथयामि निशामय। (ब्र० कृ० खं ७७ यू०)
एतेनास्य वेदमूलत्वञ्च सुस्पष्टं ध्वनितम्।

कुटुम्बं लभते दृष्ट्वा कीर्तिञ्च विपुलां श्रियम् ।
पूर्णकुम्भं द्विजं वह्निं पुष्पताम्बूलमन्दिरम् ॥२०॥

शुक्लधान्यं नटं वेश्यां दृष्ट्वा श्रियमवाप्नुयात् ।
गोक्षीरञ्च घृतं दृष्ट्वा चार्थं पुण्यधनं लभेत् ॥२१॥

पायसं पद्मपत्रे च दधि दुग्धं घृतं मधु ।
मिष्टान्नं स्वस्तिकं भुक्त्वा ध्रुवं राजा भविष्यति ॥२२॥

पक्षिणां मानुषाणाञ्च भुङ्क्ते मांसं नरो यदि ।
बह्वर्थं शुभवार्ताञ्च लभते वाञ्छितं फलम् ॥२३॥

छत्रं वा पादुकां वापि लब्ध्वा धान्यं च गच्छति ।
असिञ्च निर्मलं तीक्ष्णं तत्तथैव भविष्यति ॥२४॥

हेलया सन्तरेद् यो हि स प्रधानो भविष्यति ।
दृष्ट्वा च फलितं वृक्षं धनमाप्नोति निश्चितम् ॥२५॥

सर्पेण भक्षितो यो हि अर्थलाभश्च तद् भवेत् ।
स्वप्ने सूर्यं विधुं दृष्ट्वा मुच्यते व्याधिबन्धनात् ॥२६॥

वडवां कुक्कुटीं दृष्ट्वा क्रौञ्चीं भार्यां लभेद् ध्रुवम् ।
स्वप्ने यो निगडैर्बद्धः प्रतिष्ठां पुत्रमालभेत् ॥२७॥

दध्यन्नं पायसं भुङ्क्ते पद्मपत्रे नदीतटे ।
विशीर्णपद्मपत्रे च सोऽपि राजा भविष्यति ॥२८॥

जलौकसं वृश्चिकञ्च सर्पञ्च यदि पश्यति ।
धनं पुत्रञ्च विजयं प्रतिष्ठां वा लभेदिति ॥२९॥

शृंगिभिर्दंष्ट्रिभिः कोलैर्वानरैः पीडितो यदि ।
निश्चितं च भवेद् राजा धनं च विपुलं लभेत् ॥३०॥

मत्स्यं मांसं मौक्तिकञ्च शंखं चन्दनहीरकम् ।
यस्तु पश्यति स्वप्नान्ते विपुलं धनमालभेत् ॥३१॥

सुराश्च रुधिरं स्वर्णं दृष्ट्वा विष्ठां धनं लभेत् ।
प्रतिमां शिवलिङ्गं च लभेद् दृष्ट्वा जयं धनम् ॥३२॥

फलितं पुष्पितं विल्वमाम्रं दृष्ट्वा लभेद्धनम् ।
दृष्ट्वा च ज्वलदग्निश्च धनं बुद्धि श्रियं लभेत् ॥३३॥

आमलकं धात्रीफलमुत्पलञ्च धनागमम् ।
देवताश्च द्विजा गावः पितरो लिङ्गिनस्तथा ॥३४॥

यद्ददाति मिथः स्वप्ने तत्तथैव भविष्यति ।
शुक्लाम्बरधरा नार्यः शुक्लमाल्यानुलेपनाः ॥३५॥

समाश्लिष्यन्ति यं स्वप्ने तस्य श्रीः स्वप्नतः सुखम् ।
पीताम्बरधरां नारीं पीतमाल्यानुलेपनाम् ॥
अवगूहति यः स्वप्ने कल्याणं तस्य जायते ॥३६॥

सर्वाणि शुक्लानि प्रशंसितानि भस्मास्थिकार्पासविवर्जितानि ।
सर्वाणि कृष्णान्यतिनिन्दितानि गोहस्तिवाजिद्विजदेववर्ज्यम् ॥३७॥

दिव्या स्त्री सस्मिता विप्रा रत्नभूषणभूषिता ।
यस्य मन्दिरमायाति स प्रियं लभते ध्रुवम् ॥३८॥

स्वप्ने च ब्राह्मणो देवो ब्राह्मणी देवकन्यका ।
ब्राह्मणो ब्राह्मणी वापि सन्तुष्टा सस्मिता सती ॥३९॥

फलं ददाति यस्मै च तस्य पुत्रो भविष्यति ।
यं स्वप्ने ब्राह्मणा नित्यं कुर्वन्ति च शुभाशिषम् ।
यद् वदन्ति भवेत्तस्य तस्यैश्वर्यं भवेद् ध्रुवम् ॥४०॥

परितुष्टो द्विजश्रेष्ठश्चायाति यस्य मन्दिरम् ।
नारायणः शिवो ब्रह्मा प्रविशेत्तु तदाश्रयम् ॥४१॥

सम्पत्तिस्तस्प भवति यशश्च विपुलं शुभम् ।
पदे पदे सुखं तस्य स मानं गौरवं लभेत् ॥४२॥

अकस्मादपि स्वप्ने तु लभते सुरभिं यदि।
भूमिलाभो भवेत्तस्य भार्या चापि पतिव्रता ॥४३॥

करणे कृत्वा हस्ती यं मस्तके स्थापयेद् यदि।
राज्यलाभो भवेत्तस्य निश्चितं वै श्रुतौ मतम् ॥४४॥

स्वप्ने तु ब्राह्मणस्तुष्टः समाश्लिष्यति यं व्रज।
तीर्थस्नायी भवेत् सोऽपि निश्चितं च श्रियान्वितः ॥४५॥

स्वप्ने ददाति पुष्पं च यस्मै पुण्यवते द्विजः।
जययुक्तो भवेत् सोऽपि यशस्वी च धनी सुखी ॥४६॥

स्वप्ने दृष्ट्वा च तीर्थानि सौधरत्नगृहाणि च।
जययुक्तश्च धनवान् तीर्थस्नायी भवेन्नरः ॥४७॥

स्वप्ने तु पूर्णकलशं कश्चित् कस्मै ददाति च
पुत्रलाभो भवेत्तस्य सम्पत्तिं वा समालभेत् ॥४८॥

हस्ते कृत्वा तु कुडवमाढकं वारसुन्दरी।
यस्य मन्दिरमायाति स लक्ष्मीं लभते ध्रुवम् ॥४९॥

दिव्या स्त्री यद्गृहं गत्वा पुरीषं विसृजेद् व्रज।
अर्थलाभो भवेत्तस्य दारिद्रयञ्च प्रयाति च ॥५०॥

यस्य गेहं समायाति ब्राह्मणो भार्यया सह।
पार्वत्या सह शम्भुर्वा लक्ष्मीर्नारायणोऽथवा ॥५१॥

ब्राह्मणो ब्राह्मणी वापि स्वप्ने यस्मै ददाति च।
धान्यं पुष्पाञ्जलिं वापि तस्य श्रीः सर्वतोमुखी ॥५२॥

मुक्ताहारं पुष्पमाल्यं चन्दनं च लभेद् व्रज।
स्वप्ने ददाति विप्रश्च तस्य श्रीः सर्वतोमुखी ॥५३॥

गोरोचनं पताकां वा हरिद्रामिक्षुदण्डकम्।
सिद्धान्नञ्च लभेत् स्वप्ने तस्य श्रीः सर्वतोमुखी ॥५४॥

ब्राह्मणो ब्राह्मणी वापि ददाति यस्य मस्तके ।
छत्रं वा शुक्लधान्यं वा स च राजा भविष्यति ॥५५॥

स्वप्ने रथस्थः पुरुषः शुक्लमाल्यानुलेपनः ।
तत्रस्थो दधि भुङ्क्ते च पायसं वा नृपो भवेत् ॥५६॥

स्वप्ने ददाति विप्रश्च ब्राह्मणो वा सुधां दधि ।
प्रशस्तपात्रं यस्मै वा सोऽपि राजा भवेद् ध्रुवम् ॥५७॥

कुमारी चाष्टवर्षीया रत्नभूषणभूषिता ।
यस्य तुष्टा भवेत् स्वप्ने स भवेत् कविपण्डितः ॥५८॥[1]

ददाति पुस्तकं प्रीत्या स च तत्सदृशो भवेत् ।
प्राप्नोति पुस्तकं स्वप्ने पथि वा यत्र यत्र वा ॥५९॥

स पण्डितो यशस्वी च विख्यातश्च महीतले ।
स्वप्ने यस्मै महामन्त्रं विप्रा विप्रो ददाति चेद् ॥६०॥

स भवेत् पुरुषः प्राज्ञो धनवान् गुणवान् सुधीः ।
स्वप्ने-ददाति मन्त्रं वा प्रतिमां वा शिलामयीम् ॥६१॥

यस्मै ददाति विप्रश्च मन्त्रसिद्धिश्च तद् भवेत् ।
विप्रो विप्रसमूहञ्च दृष्ट्वा नत्वाशिषं लभेत् ।
राजेन्द्रः स भवेद् वापि किं वा च कविपण्डितः ॥६२॥

---

१. ५८ श्लोकानन्तरमपरपुस्तके कियन्तः श्लोका अधिका न दृश्यन्ते —
यशस्वी धनवान् भूमिप्रजावान् पण्डितो भवेत् ।
किं वा महाधनाढ्योऽपि किं वा राजा भवेद्ध्रुवम् ॥
शुक्लपीताम्बरधरा रत्नभूषणभूषिता ।
यस्य तुष्टा भवेत् स्वप्ने स भवेत् कविपण्डितः ॥
य पाठयति सा स्वप्ने मातेव स्वसुतं यथा ।
सरस्वती सुतः सोऽपि तत्परो नास्ति पण्डितः ॥
ब्राह्मणः पाठयेद् यञ्च पितेव यत्नपूर्वकम् ।
ददाति पुस्तकं प्रीत्या स च तत्सदृशो भवेत् ॥

शुक्लधान्ययुतां भूमिं यस्मै विप्रः समुत्सृजेत् ।
स्वप्नेऽपि परितुष्टश्च स भवेत् पृथिवीपतिः ॥६३॥

स्वप्ने विप्रो रथे कृत्वा नानास्वर्गं प्रदर्शयेत् ।
चिरञ्जीवी भवेदायुर्धनवृद्धिर्भवेद् ध्रुवम् ॥६४॥

विप्राय विप्रः सन्तुष्टो यस्मै कन्यां ददाति च ।
स्वप्ने च स भवेन्नित्यं धनाढ्यो भूपतिः स्वयम् ॥६५॥

स्वप्ने सरोवरं दृष्ट्वा समुद्रं वा नदीं नदम् ।
शुक्लाहिं शुक्लशैलञ्च दृष्ट्वा श्रियमवाप्नुयात् ॥६६॥

यः पश्यति मृतं स्वप्ने स भवेच्चिरजीवि च ।
अरोगो रोगिणं दुःखी सुखिनञ्च सुखी भवेत् ॥६७॥

दिव्या स्त्री यं प्रवदति मम स्वामी भवानिति ।
स्वप्ने दृष्ट्वा च जागर्ति स च राजा भवेद् दृढम् ॥६८॥

स्वप्ने वा कालिकां दृष्ट्वा लब्ध्वा स्फटिकमालिकाम् ।
इन्द्रचापं शक्रध्वजं स प्रतिष्ठां लभेद् ध्रुवम् ॥६९॥

स्वप्ने विप्रो हरिः शम्भुर्ब्राह्मणी कमला शिवा ।
शुक्ला स्त्री वेदमाता वा जाह्नवी वा सरस्वती ॥७०॥

गोपालिकावेषधरा बालिका राधिका मम ।
बालश्च बालगोपालः स्वप्नविद्भिः प्रकाशितः ॥७१॥

एतत् ते कथितं नन्दः सुस्वप्नः पुण्यहेतुकः ।
श्रोतुमिच्छामि किं वा त्वं किं भूयः कथयामि ते ॥७२॥

इति श्रीब्रह्मवैवर्तपुराणे सुस्वप्नदर्शनम् ।
नात्राध्यायसमाप्तिरपि तु सुस्वप्नकथनसमाप्तिरेवावगन्तव्या ।

मत्स्यपुराणे २४१ अध्याये २१-३५ श्लोकाः :—

**शुभस्वप्ना :—**

शैलप्रासादनागाश्ववृषभारोहणं हितम् ।
द्रुमाणां श्वेतपुष्पाणां गमने च तथा द्विज ॥२१॥

द्रुमतृणोद्भवो नाभौ तथैव बहुबाहुता ।
तथैव बहुशीर्षत्वं फलितोद्भव एव च ॥२२॥

सुशुक्लमाल्यधारित्वं सुशुक्लाम्बरधारिता ।
चन्द्रार्कताराग्रहणं यदि मार्जनमेव च ॥२३॥

शक्रध्वजालिङ्गनञ्च तदुच्छ्रायक्रियातथा ।
भूम्यम्बुधीनां ग्रसनं शत्रूणां च वधक्रिया ॥२४॥

जयो विवादे द्यूते च संग्रामे च तथा द्विज ।
भक्षणञ्चार्द्रमांसानां मत्स्यानां पायसस्य च ॥२५॥

दर्शनं रुधिरस्यापि स्नानं वा रुधिरेण च ।
सुरारुधिरमद्यानां पानं क्षीरस्य चाथवा ॥२६॥

अन्त्रैर्वा वेष्टनं भूमौ निर्मलं गगनं तथा ।
मुखेन दोहनं शस्तं महिषीणां तथा गवाम् ॥२७॥

सिंहीनां हस्तिनीनाञ्च वडवानां तथैव च ।
प्रसादो देवविप्रेभ्यो गुरुभ्यश्च तथा शुभः ॥२८॥

अम्भसा त्वभिषेकस्तु गवां शृङ्गाश्रितेन वा ।
चन्द्राद् भ्रष्टेन वा राजन् ज्ञेयो राज्यप्रदो हि सः ॥२९॥

राज्याभिषेकश्च तथाच्छेदनं शिरसस्तथा ।
मरणं वह्निदाहश्च वह्निदाहो गृहादिषु ॥३०॥

लब्धिश्च राज्यलिङ्गानां तन्त्रीवाद्याभिवादनम् ।
तथोदकानां तरणं तथा विषमलङ्घनम् ॥३१॥

हस्तिनीवडवानाञ्च गवां च प्रसवो गृहे।
आरोहणमथाश्वानां रोदनञ्च तथा शुभम् ॥३२॥

वरस्त्रीणां तथा लाभस्तथालिङ्गनमेव च।
निगडैर्बन्धनं धन्यं तथा विष्ठानुलेपनम् ॥३ ॥

जीवतां भूमिपालानां सुहृदामपि दर्शनम्।
दर्शनं देवतानाञ्च विमलानां तथाम्भसाम् ॥३४॥

शुभान्यथैतानि नरस्तु दृष्ट्वा प्राप्नोत्ययत्नाद् ध्रुवमर्थलाभम्।
स्वप्नानि वै धर्मभृतां वरिष्ठ ! व्याधेर्विमोक्षञ्च तथाऽतुरोऽपि ॥३५॥

अग्निपुराणे २२६ अध्याये १९-३१ श्लोकाः—

शैलप्रासादनागाश्ववृषभारोहणं हितम् ॥१९॥

द्रुमाणां श्वेतपुष्पाणां गगने च तथा द्विज ? ॥
द्रुमतृणोद्भवो नाभौ तथा च बहुबाहुता ॥२०॥

तथा च बहुशीर्षत्वं पलितोद्भव एव च।
सुशुक्लमाल्यधारित्वं सुशुक्लाम्बरधारिता ॥

चन्द्रार्कताराग्रहणं परिमार्जनमेव च।
शक्रध्वजालिङ्गनञ्च ध्वजोच्छ्रायक्रिया तथा ॥

भूम्यम्बुधाराग्रहणं शत्रूनाञ्चैव विक्रिया।
जयो विवादे द्यूते च संग्रामे च तथा द्विज ॥२३॥

भक्षणञ्चार्द्रमांसानां पायसस्य च भक्षणम्।
दर्शनं रुधिरस्यापि स्नानं वा रुधिरेण च ॥२४॥

सुरारुधिरमद्यानां पानं क्षीरस्य वाप्यथ।
अस्त्रैर्विचेष्टनं भूमौ निर्मलं गगनं तथा ॥

मुखेन दोहनं शस्तं महिषीणां तथा गवाम्।
सिंहीनां हस्तिनीनाञ्च वडवानां तथैव च ॥२६॥

प्रसादो देवविप्रेभ्यो गुरुभ्यश्च तथा द्विज !
अम्भसा चाभिषेकस्तु गवां श्रृङ्गच्युतेन च ॥२७॥

चन्द्राद् भ्रष्टेन वा राम ! ज्ञेयं राज्यप्रदं हि तत् ।
राज्याभिषेकश्च तथा छेदनं शिरसोऽप्यथ ॥२८॥

मरणं वह्निलाभश्च वह्निदाहो गृहादिषु ।
लब्धिश्च राजलिङ्गानां तन्त्रीवाद्याभिवादनम् ॥

यस्तु पश्यति स्वप्नान्ते राजानं कुञ्जरं हयम् ।
हिरण्यं वृषभं गाञ्च कुटुम्बस्तस्य वर्द्धते ॥३०॥

वृषेभगृहशैलाग्रवृक्षारोहणरोदनम् ।
घृतविष्ठानुलेपो वा अगम्यागमनं तथा ।
सितवस्त्रं प्रसन्नाम्भः फली वृक्षो नभोऽमलम् ॥३१॥

भविष्यपुराणे १९४ अध्याये ३-२० श्लोकाः :—

हन्त सुप्तो यदि नरः पश्येत्स्वप्ने दिवाकरम् ।
शक्रध्वजं वा चन्द्रं वा तस्य सर्वाः समृद्धयः ॥३॥

भृंगारचमरादर्शकनकाभरणानि च ।
रुधिरस्य स्रुतिः केशपात ऐश्वर्यकारकः ।
स्वप्ने वृक्षाधिरोहे तु क्षिप्रमैश्वर्यमाहवे ॥४॥

दोहनं महिषीसिंहीगोधेनूनां करे स्वके ।
बन्धश्चासां राज्यलाभो नाभेः स्पर्शो तु दुर्मतिः ॥५॥

अविं हत्वा स्वयं खादेत्सिहमबुजमेव च ।
स्वांगमस्थि हुताशं च सुरापानं खगाधिप ॥६॥

हैमे वा राजते वापि यो भुंक्ते पायसं नरः ।
पात्रे तु पद्मपत्रे वा तस्यैश्वर्यं समं भवेत् ॥७॥

द्यूते च वाथ वा युद्धे विजयो हि सुखावहः ।
गात्रस्य स्वस्य ज्वलनं शिरोबन्धश्च भूतये ॥८॥

माल्यांबराणां शुक्लानां हयानां पशुपक्षिणाम्।
सदा लाभं प्रशंसंति विष्ठानां चानुलेपनम् ॥९॥

हययाने भवेत्क्षिप्रं रथयाने प्रजागमः।
नाना शिरोबाहुता च गृहस्थां कुरुते श्रियम् ॥१०॥

अगम्यागमनं धन्यं वेदाध्ययनमुत्तमम्।
देवद्विजश्रेष्ठवीरगुरुवृद्धतपस्विनः ॥११॥

यद्वदंति नरं स्वप्ने सत्यमेवेति तद्विदुः।
प्रशस्तं दर्शनं चैषामाशीर्वादः खगाधिप ॥१२॥

राज्यं स्यात्स्वशिरश्छेदे धनं बहुवधे भवेत्।
रुदिते भक्ष्यसंप्राप्ती राज्यं निगडबन्धने ॥१३॥

पर्वतं तुरगं सिंहं वृषभं गजमेव हि।
महदैश्वर्यमाप्नोति यो विक्रम्याधिरोहति ॥१४॥

आगृह्णानो ग्रहांस्तारा मरीचिं परिवर्तयन्।
उन्मूलयति पर्वतांश्च राजा भवति भूतले ॥१५॥

हान्निष्क्रांतिरंत्राणां सर्वेषां च खगाधिप।
पानं समुद्रसरितामैश्वर्यसुखकारकम् ॥१६॥

बलं चांबुनिधिं वापि तीर्थपारं प्रयाति यः।
तस्यापत्यं भवेद्वीर अचलं च खगाधिप ॥१७॥

भवत्यर्थागमः शीघ्रं कृमिर्वा यदि भक्षयेत्।
अंगानां च सुरूपाणां लाभो दर्शनमेव च।
संयोगश्चैव मांगल्यैरारोग्यं धनमेव च ॥१८॥

ऐश्वर्यं राज्यलाभश्च यस्मिन्स्वप्न उदाहृतः।
सप्त स्यान्नात्र संदेहश्चतुर्भिः श्रुत उत्तमः ॥१९॥

पंचभिः पुत्रबाहुल्यं षड्भिरायुः सुतान्धनम्।
सप्तभिर्विविधान्कामानष्टभिर्विविधं यशः ॥२०॥

कालिकापुराणे ८६ षडशीतितमेऽध्याये—

गोवाजिकुञ्जराणां तु प्रासादस्य गिरेस्तरोः ॥२५। ॥
आरोहणं शुभकरं राज्यश्रीवृद्धिकारकम् ।
दधिदेवसुवर्णानां ब्राह्मणस्य प्रदर्शनम् ॥२६॥
वीणादूर्वाक्षतफलपुष्पच्छत्रविलेपनम् ।
शीतांशुचक्रशत्रूणां पद्मस्य सुहृदस्तथा ॥२७॥
लाभाः क्षयकराः शत्रौ रत्नकारस्य भूभृतः ॥२८॥१॥

अथ शुभस्वप्नानाह पराशरः—

तत्रावने भुंजगचलेनोद्धृत्य स्कन्धारोपणे वा ग्रसनमभिलङ्घनमर्कचन्द्रसंभक्षणं तृणमधिरोहणमुदधिसलिलसकलाभिपानमभियानमभितरणमवनेश्च रुधिरपरिप्लावनम त्रैरविकल्पपरिवारणं भुजापरिष्वज्जनं वा सकलवसुधाधिपत्याय। तथा स्निग्धहरितफलितसितसुरभिकुसुमकुसुमितप्रशस्ततरुसमधिरोहणम् । बृहदमलदृढहर्म्यश्वेतगजमस्तकक्षितिधरसितशिखरज्वलितरथनृपतिशिरसामपि । नरशिरोभक्षणमसृगुहृदावगाहनमभिषेचनपामानुलेपनमवनिविजयाय राज्ञाम् । अराज्ञामिष्टधनविद्यासुखाधिपत्याय ।[१]

दुर्गाधिरोहणं स्वभुजचलान्मानुषामनुषद्विषदनिमित्तपातनमसिशरकवचचापभूषणान्यप्रहरणलाभोऽरिविजयाय । सिंहव्याघ्रतुरगर्षभगजनररथादिरोहणममलसलिलपुलिनविमलनभोग्रहर्कचन्द्रतारोदयाभिदर्शनम् । दर्शनञ्च सुरगुरुनृपतिसिद्धद्विजाचार्यकसितसुरभिकुसुमितवनप्ररूढवनहरितोद्यानविविधवननवसस्यपाकाण्डुप्रवर्तितमहीतलानां तथाऽऽममत्स्यमांसमक्षिभिः स्त्राङ्गारशमनं परानना‌ङ्गसंभक्षणमभिनववास्तुप्रवेशकरणदर्शनमभिप्रवेशोऽवनिपतिमहिषीणां भवनशयनासनाङ्गज्वलनशकृदनुलेपनप्रभक्षणमदिरान्नपानसङ्गाभिताडनमगम्याभिगमनपलितपाणिसमेतवृद्धकेशश्मश्रुनखरोम्णामभिलषितकार्यसिद्धयेऽधमानाम् ।[२]

सिंहव्याघ्रतुरगर्षभभुजङ्गमानां लाभो लाभश्च सितकुसुमितलतास्रग्विभासनशयनकर्णिकाञ्जलिकादशनयवनपादुकास्थवृककङ्काविकानां स्त्रीलाभाय ।[३]

वृश्चिकाहिदर्शनं मणिरत्नदर्शनं काञ्चनप्रदीपगजकलभतुरगकिशोरवत्सहंससर्पार्भकलाभः पुत्रलाभाय ।[४]

श्वेतसूक्ष्माविरजः प्रशस्ताहतवसनभृङ्गारव्यजनसितचामरध्वजातपत्रद्विरदपायससैन्धवलवणदधिपयः प्रशस्तसितकुसुमवनसस्यलालाभोऽर्थलाभाय ।[५]

१. अद्भुतसागरे ४६१-४६६ पृष्ठयोरङ्कितमेतद्वचनम् (स्वप्नप्रकरणे)
२. अद्भुतसागरे ४६७-४६८ पृष्ठयोर्लिखितमेतद् वचनम् (स्वप्नप्रकरणे)
३. अद्भुतसागरे स्वप्नप्रकरणे ४६८ पृष्ठे लिखितमेतद्वचनम्
४. तत्रैव ।
५. तत्रैव ।

तथाचाह शुभस्वप्नान् बृहद्यात्रायाम्

वराहः—

स्वाङ्गप्रज्वलनं परोपशमनं शक्रध्वजालिंगनं
[1]दृक्संयुक्तचरैर्निपत्य च तरोः प्रक्षेपणं दिक्षु च।
बद्धो वा निगडैर्ग्रसेच्च दहनं नानाशिरो[2]बाहुना
छत्रं वा द्विरदो[3]ऽभिषिच्य बिभृयाद् दिव्योऽथवा ब्राह्मणः॥

उडुपदिनकृद्भङ्गः शृङ्गच्युतास्वभिषेचनं
यदि च महिषीसिंहीव्याघ्रीगवां मुखदोहनम्।
जठरनिसृतैश्चान्त्रैर्ग्रामद्रुमादिविचेष्टनं
विशति यदि वा सुश्लिष्टाङ्गी तनुः प्रवराङ्गना॥

नरजहृदयमूर्धाभक्षणं वा स्वदेहे
सुतनुभुजगसिंहेभाभमांसादनानि।
तृणतरुकुसुमाम्बुप्रोद्भवो वा स्वनाभौ
क्षितिगिरिपरिवर्तोन्मूलने वाधिराज्यम्॥

दिनकरशशिताराभक्षणस्पर्शनानि
[4]हरणमपि च मूर्ध्नः सप्तपञ्चत्रिधा वा।
वृषभगृहनरेन्द्राश्वेभ[5]सिंहाधिरोहा[6]
ग्रसनमुदधिभूम्या[7]श्चाधिराज्यप्रदानि॥

---

एते श्लोकाः अद्भुतसागरे लिखिता उपलभ्यन्ते तत्र, बृहद्यात्रायां वराहः, इति लिखितं वर्तते। कतिचिच्छ्लोकाः स्वप्नप्रकाशिकायां प्रकाशिताः सन्ति। तत्र पराशरसंहितायामिति निर्दिष्टम्।

१. संयुक्तोऽपि नरैर्विपत्य च विरत्प्रेक्षणं दिक्षु च, इति पाठभेदः।

२. चारक्षितो, पाठः।

३. द्विरदादिरोहणविधौ दिव्योऽपि च ब्राह्मणः, पाठः

४. विशरणमपि, पाठः।

५. श्वेत, इति पाठः।

६. रोह, इति पाठः.

७. भूमौ भूमि राज्यप्रदानि, इति पाठः।

विपुलरणविमर्दद्यूतवादैश्च[1] जित्वा
पशुमृगमनुजानां लब्धिरध्यासनं वा।
[2]विलसनपरिलेपोऽगम्यनारीगमो वा
स्वमरणशिखिलाभः सस्यसंदर्शनं च॥

वराहः—

सितसुरभिमनोज्ञालेपमाल्याम्बराणां
द्विजसुरगुरुराज्ञां दर्शनान्याशिषश्च।
मणिरजतसुवर्णाम्भोजपात्रेषु भुङ्क्ते
[3]यदि दधिपरमान्ने मज्जतेऽसृग्ह्रदे वा॥

सिततुरगफलध्वजातपत्रव्यजनसरोजमणिद्विजेन्द्रलाभः।
अभयविजयं भुङ्क्ष्व वेति शब्दाः परिणतराज्यफदप्रदाः प्रदिष्टाः॥

*शाद्वलतीरोपान्तां वसुधां नवशस्यशालिनीमटताम्।
पद्मानि चिन्वतां वा स्वप्नान्ते वृद्धयः पुंसाम्॥

शोकश्चिन्तारुदितं व्याकुलता बन्धनं वधः क्लेशः।
वृद्धिकराण्युक्तानि स्वप्नान्ते वापि मरणानि॥

मुद्रादृषदञ्जनी विपञ्ची स्त्रीसञ्ज्ञादिषु चाङ्गनाप्तिरुक्ता।
लब्धे सरकेऽथ दर्पणे वा भृङ्गारादिषु चोद्भवं सुतस्य॥

सिद्धिप्राप्तिः स्याद्धि कोषेऽसिलाभो वश्यो राजा जायते शासनाप्त्यै।
*पिण्यै धनलब्धिरम्बुतरणे शोकस्य नाशो भवेद्।
वर्षे, रोदित शोचितादिषु तथा दाहे विवृद्धिः स्मृता॥

*खं लेढि जिह्वया यः स्फुरदक्षो दीर्घयावरः स्वप्ने।
अपि दासकुले जातः स सागरान्तां महीं पाति॥

---

१. जयश्च, इति पाठः २. विवसन, इति पाठः

३. घृतदधिपरमान्नं सर्वमेतच्छुभ च' इति पाठः। *एतच्चिन्हाङ्कितश्लोकौ 'योगयात्रायां वराहेणोक्तौ' इति लिखितमद्भुतसागरे किन्त्वन्वेषणे सति तत्र नोपलब्धौ।

बृहस्पति :—

मानुषस्य तु मांसानि यस्तु स्वप्नेषु भक्षयेत् ।
अपक्वान्येव सर्वाणि शृणु तस्य तु यत्फलम् ।

पादे पञ्चशतं लाभः सहस्रं बाहुभक्षणे ।
मस्तकाशनतो राज्यं मंत्रिता हृदयाशनात् ॥

उपानहौ ध्वजं चक्रं लब्ध्वा यस्तु विबुध्यते ।
असिं वा निर्मलं तीक्ष्णमध्वानं तस्य निर्दिशेत् ॥

नावमारोहयेद् यस्तु नदीं वा विपुलां तरेत् ।
प्रवासो नियतस्तस्य शीघ्रमागमनं पुनः ॥

पीताम्बरधरा नारी पीतमाल्यानुलेपना ।
अवगूहति यं स्वप्ने कल्याणं लभते हि सः ॥

श्वेताम्बरधरा नारी श्वेतमाल्यानुलेपना ।
अवगूहति यं स्वप्ने तस्य श्रीः सर्वतोमुखी ॥

सर्वाणि शुक्लान्यतिशोभनानि कार्पासभस्मौदनतक्रवर्ज्यम् ।
सर्वाणि कृष्णान्यतिनिन्दितानि गोहस्तिदेवद्विजवाजिवर्ज्यम् ॥

देवा द्विजास्तथा गावः पितरो लिंगिनो नृपाः ।
यद् वदन्ति नरं स्वप्ने तत्तथैव भवेद् ध्रुवम् ॥

आसने शयने याने शरीरे वाहनेऽपि वा ।
ज्वलमाने विबुध्येत तस्य श्रीः सर्वतोमुखी ॥

वडवां कुक्कुटीं दोलां लब्ध्वा यस्तु विबुध्यते ।
सकामां लभते भार्यां सुभगां प्रियवादिनीम् ॥

निगडैर्बध्यते यस्तु पाशैर्वा बध्यते भृशम् ।
सुपुत्रो जायते तस्य सुप्रतिष्ठां च विन्दति ॥

मुहूर्तगणपतौ :-

सद्राजा ब्राह्मणा देवाः सिद्धगन्धर्वकिन्नराः ।
गुरुः श्वेताम्बरा नारी तेषामाशीश्च दर्शनम् ॥४३॥

प्रासादगजशैलानां श्वेतोक्षासनवाजिनाम् ।
दर्शनं रोहण लाभः सिंहस्यारोहणं तथा ॥४४॥

छत्रध्वजसुवर्णाब्जरत्नरौप्यदधीनि च ।
यवगोधूमसिद्धार्थाः फलं दीपश्च कन्यकाः ॥४५॥

श्रीखण्डाक्षतदूर्वेक्षुदर्पणाः पुष्पितद्रुमाः ।
लाभे वा दर्शने चैषां लाभः सौख्यं भवेद् यशः ।४६।

भोजनं रोदनं वीणावादनं नौप्ररोहणम् ।
अगम्यागमनं विष्ठालेपनं शस्तमीरितम् ॥४७॥

आरूढो यो हि जागर्ति सपुष्पं फलितं द्रुमम् ।
दष्टः श्वेताहिना दक्षे करे स्यात् स महाधनः ॥४८॥

रुधिरस्नानपानं च सर्पदंशो मृतिर्निजा ।
शय्या हर्म्यासनानां च ज्वलनं सशिरच्छिदा ॥४९॥

रक्तस्रावो जलैः स्नानं मरणं मांसभक्षणम् ।
सुरायाः पयसः पानं प्रशस्तं पायसाशनम् ॥५०॥

कदलीकल्पवृक्षाश्च तीर्थं गङ्गादिकं सरित् ।
तोरणं भूषणं राज्यं स्वन्नैश्च ग्रामवेष्टनम् ॥५१॥

वेदवाद्यादिनिर्घोषो गर्तान्निःसरणं तथा ।
दंशो वृश्चिककीटानां तडागोद्यानदर्शनम् ॥५२॥

पीतं रक्तं फलं पुष्पं स्वप्ने प्राप्नोति यो नरः ।
लभते सोऽचिरात् स्वर्णं पद्मरागमणिं तथा ॥५३॥

जयो द्यूते रणे वादे पुरुहूतध्वजेक्षणम् ।
आत्मनो बन्धनं शीर्षं बाह्वोरानन्त्यमुत्तमम् ।।५४।।

अभिषेककरो विप्रो देवो वा छत्रधारणम् ।
कुरुते महिषी व्याघ्रीगोसिंहीस्तन्यपानकम् ।।५५।।

स्वनाभौ तृणवृक्षाम्बुपुष्पाणामुद्भवस्तथा ।
भुवो भूमिधरस्यापि क्रमणोत्क्षेपणे शुभे ।।५६।।

मणिसौवर्णरौप्याणां पात्रे वाम्भोजिनीदले ।
योऽश्नाति पायसं स्वप्ने स राज्यमधिगच्छति ।।५७।।

गौर्लिङ्गी ब्राह्मणो राजा पिता मित्रं च देवता ।
यद् वदेत् सदसत् स्वप्ने तत्तथैव प्रजायते ।।५८।।

पूजितं शिवलिङ्गं च देवता वा यथाविधि ।
स्वप्ने दृष्टाः प्रयच्छन्ति नराणां विपुलं धनम् ।।५९।।

त्यक्त्वा तक्राणि कार्पासं श्वेतवर्णं शुभं मतम् ।
सर्वं कृष्णमद्धित्वा गोदेवाश्च गजद्विजान् ।।६०।।

मन्त्रमहोदधौ पञ्चविंशतितमे तरङ्गे—

लिङ्गं चन्द्रार्कयोर्बिम्बं भारतीं जाह्नवीं गुरुम् ।
रक्ताब्धितरणं युद्धे जयोऽनलसमर्चनम् ।।८८।।

शिखिहंसरथांगाढ्ये रथे स्थानं च मोहनम् ।
आरोहणं सारसस्य धरालाभश्च निम्नगा ।।८९।।

प्रासादः स्पन्दनः पद्मं छत्रं कन्या द्रुमः फली ।
नागोदीपोहयः पुष्पवृषभोऽश्वश्च पर्वतः ।।९०।।

सुराघटोग्रहास्तारानारीसूर्योदयोऽप्सराः ।
हर्म्यशैलविमानानामारोहो गगने गमः ।।९१।।

मद्यमांसादनं विष्ठालेपो रुधिरसेचनम् ।
दध्योदनादनं राज्याभिषेको गोवृषध्वजाः ॥९२॥

सिंहसिंहासनं शंखो वादित्रं रोचना दधि ।
चन्दनं दर्पणश्चैषां स्वप्ने संदर्शनं शुभम् ॥९४॥

बृहज्ज्योतिःसारे—

पत्रं पुष्पं फलं तोयं स्वप्नान्ते यो लभेन्नरः ।
सर्वसिद्धिमवाप्नोति जीवेद् वर्षशतं नरः ॥४॥

प्रासादस्थस्तु यो भुङ्क्ते समुद्रं तरते नरः ।
अपि दासकुले जातः सोपि राजा भविष्यति ॥५॥

यस्तु पश्यति स्वप्नान्ते गंगा यमुनां सरस्वतीम् ।
अरुन्धतीं तथासीनस्तस्य सौख्यं निरन्तरम् ॥६॥

ताम्बूलं दधि वस्त्रं च शङ्खदुन्दुभिमौक्तिकम् ।
जातीवकुलकुन्दञ्च नीलोत्पलं धनागमः ॥७॥

दीपमन्नं घृतं पद्मं कन्यां छत्रं तथा ध्वजम् ।
स्वप्नान्ते यो लभेन्मन्त्रं चिन्तितं च भवेद् ध्रुवम् ॥८॥

नावमारोहयेद् यस्तु नदीं वा विमलां तरेत् ।
प्रवासश्च दिने तस्य शीघ्रं च पुनरागमः ॥९॥

आदित्यमण्डलं स्वप्ने चन्द्रं वा यदि पश्यति ।
व्याधितो मुच्यते रोगी श्रीयशस्त्वमवाप्नुयात् ॥१७॥

यस्य श्वेतेन सर्पेण दश्यते दक्षिणे भुजे ।
शस्त्रलाभो भवेत्तस्य संपूर्णे दशमे दिने ॥१८॥

उरगो वृश्चिको वापि जलौका दृश्यते यदि ।
विजयश्चार्थलाभश्च क्षिप्रमेव भविष्यति ॥१९॥

दधि दृष्ट्वा भवेदायुर्गोधूमैश्च धनागमः ।
यवैर्यज्ञागमं विद्यात् सिद्धार्थं च प्रदर्शयेत् ॥२०॥

देवता यस्य पश्यन्ति गणगन्धर्वकिन्नराः।
सिद्धा वा यदि पश्यन्ति तस्य सिद्धि निरन्तरम् ॥२१॥

वापीकूपतडागानि ग्रामं नगरमेव च।
यदि पश्यति स्वप्नान्ते मङ्गलानि महोत्सवः ॥२२॥

बृहस्पतिप्रणीते-स्वप्नाध्याये शुभस्वप्ना :—

स्वप्नाध्यायं प्रवक्ष्यामि यथोक्तं गुरुभाषितम्।
फलं विज्ञायते येन नित्यमेव शुभाशुभम् ॥१॥

आरोहणंगोवृष कुञ्जराणां प्रासादशैलाप्रवनस्पतीनाम्।
विष्ठानुलेपो रुदितं मृतं च स्वप्नेष्वगम्यागमनं च शस्तम् ॥५॥

क्षीरिणं फलिनं वृक्षमेकाकी योऽधिरोहति।
तत्रस्थश्च विबुध्येत धनं शीघ्रमवाप्नुयात् ॥६॥

शिरसः स्रवते यस्य स्वप्नान्ते।
शीघ्रं सूर्योदये तस्य भवेद् राज्याभिषेचनम् ॥७॥

उपानहौ तु यो दत्ते लब्ध्वा प्रतिविबुध्यते।
असिं च निर्मलं दीर्घमध्वानं तस्य निर्दिशेत् ॥८॥

नावं प्ररोहयेद् यस्तु नदीनां च समुत्तरेत्।
प्रसन्नं च दिशास्तस्य शीघ्रं च पुनरागमम् ॥९॥

श्वेताम्बरधरा नारी श्वेतगन्धानुलेपना।
अवगूहति यं स्वप्ने तस्य श्रीः सर्वतोमुखी ॥२०॥

सर्वाणि कृष्णान्यतिनिन्दितानि कस्तूरिरत्नं गजवाजिवर्जम्।
सर्वाणि शुक्लान्यतिशोभितानि कार्पासभस्मास्थिततक्रवर्जम् ॥२१॥

कदलीं कल्पवृक्षं च सतन्तुं पारिजातकम्।
यदि पश्यति स्वप्नान्ते धनं धान्यं वरस्त्रियः ॥४७॥

कन्यासमूहस्थितमण्डलानां वेदान् समूहं द्विजशोभनानाम्।
शास्त्रं समूहं स्थितिमुत्तमानामेतानि पश्येच्छुभमङ्गलानि ॥५६॥

महाव्रतं तपस्विनं गर्वितं च द्विजोत्तमम् ।
यदि पश्यति स्वप्नान्ते गोत्रवृद्धिर्भविष्यति ॥५३॥

परशुरामकल्पसूत्रे ७ खण्डे वाराहीक्रमे २३० पृष्ठे

वक्रतुण्डकल्पे--

चित्तप्रसादो मनसश्च तुष्टिरल्पाशिता स्वप्नपराङ्मुखत्वम् ।
स्वप्नेषु यानाद्युपलम्भनं तु सिद्धस्य चिह्नानि भवन्ति सद्यः ॥

परमानन्दतन्त्रेऽपि शुभाशुभस्वप्नाः—

साधकस्य तु सिद्धेर्वै चिह्नानि शृणु शङ्करि ।
आश्चर्यदर्शनं चित्तप्रसादोऽल्पाशनं तथा ॥

अल्पनिद्रा मनोल्लासः सिद्धिचिह्नानि शङ्करि ।
अतः स्वप्नान् प्रवक्ष्यामि शुभांश्चैव तथेतरान् ॥

उपास्य देवतारूपं प्रसादं स्फटिकोपमम् ।
गुरुप्रियजनं पूर्णचन्द्रं सूर्यं सरित्पतिम् ॥

पूर्णां नदीं तटाकं च प्रफुल्लकमलाकरम् ।
यन्त्रराजं महादेवलिङ्गं हैरण्यपर्वतम् ॥

दृष्ट्वा सिद्धिस्तथा नौकातरणं स्वस्य वै जयः ।
ज्वलदग्नि हंसचक्रवाकसारसबर्हिणः ॥

अश्वयुग्रथमध्यस्थ श्वेतच्छत्रादिभूषणम् ।
दीपपंक्ति श्वेतमाल्यं दिव्यस्त्रीणां कदम्बकम् ॥

फुल्लवृक्षं चारुमांसं खे यानमभयं तथा ।
श्वेताश्ववृषभौ मत्तवारणं तेषु रोहणम् ॥

विमानगमनं मद्यपानं मांसस्य भक्षणम् ।
विष्ठालेपं रक्तलेपं दधिलेपं च भक्षणम् ॥

राज्याभिषेकं रत्नादिभूषणं चैवमादिकम् ।
हर्षहेतुकरं चित्रं स्वप्नं विद्याच्छुभावहम् ॥

गन्धर्वतन्त्रे २६ पटले :—

कन्यां छत्रं रथं दीपं प्रासादं मङ्गलं नदीम् ॥८१।२॥

कुंकुमं वृषभं माल्यं स्वर्णं च फलितं द्रुमम् ।
पर्वतं च हयं मेध्यमाममांसं सुरासवम् ॥८२॥

एवमादीनि सर्वाणि दृष्ट्वा सिद्धिमवाप्नुयात् ॥८३।१॥

स्वच्छन्दतन्त्रे ४ पटले :—

शुभान् स्वप्नान् प्रवक्ष्यामि अशुभांश्च वरानने ।
स्वप्नेषु मदिरापान-माममांसस्य भक्षणम् ॥३॥

क्रिमिविष्ठानुलेपं च रुधिरेणाभिषेचनम् ।
भक्षणं दधिभक्तस्य श्वेतवस्त्रानुलेपनम् ॥४॥

श्वेतातपत्रं मूर्धस्थं श्वेतस्रग्दामभूषणम् ।
सिंहासनं रथं यानं ध्वजं राज्याभिषेचनम् ॥५॥

रत्नाङ्गाभरणादीनि ताम्बूलं फलमेव च ।
दर्शनं श्रीसरस्वत्योः शुभनार्यवगूहनम् ॥६॥

नरेन्द्रैर्ऋषिभिर्देवैः सिद्धविद्याधरैर्गणैः ।
आचार्यैः सह संवादं कृत्वा स्वप्ने प्रसिद्ध्यति ॥७॥

नदीसमुद्रतरणमाकाशगमनं तथा ।
भास्करोदयनं चैव प्रज्वलन्तं हुताशनम् ॥८॥

गृहनक्षत्रताराणां चन्द्रबिम्बस्य दर्शनम् ।
हर्म्यस्यारोहणं चैव प्रासादशिखरेऽपि वा ॥९॥

नराश्ववृषणेतेभतरुशैलाग्ररोहणम् ।
विमानगमनं चैव सिद्धमन्त्रस्य दर्शनम् ॥१०॥

लाभः सिद्धचरश्चैव देवादीनां च दर्शनम् ।
गुटिकां दन्तकाष्ठं च खड्गपादुडरोचनाः ॥११॥

उपवीताञ्जनं चैव अमृतं पारतौषधीः ।
शक्तिं कमण्डलुं पद्ममक्षसूत्रं मनःशिलाम् ॥१२॥

प्रज्वलत्सिद्धद्रव्याणि गैरिकान्तानि यानि च ।
दृष्ट्वा सिद्ध्यति स्वप्नान्ते क्षितिलाभ व्रणं तथा ॥१३॥

क्षतजार्णवसंग्रामतरणं विजयं रणे ।
ज्वलत्पितृवनं रम्यं वीरवीरेशिभिर्वृतम् ॥१४॥

वीरवेतालसिद्धैश्च महामांसस्य विक्रयम् ।
महापशोः संविभागं लब्ध्वा देवेभ्य आदरात् ॥१५॥

आत्मना पूजयन् देवं जपन् ध्यायन् स्तुवन्नपि ।
सुहुतं चानलं दीप्तं पूजितं वा प्रपश्यति ॥१६॥

हंससारसचक्राह्वमयूरशवरोहणम् ।
मातृभिर्भैरवश्चैव मातृरुद्रगणैः सह ॥१७॥

भैरवं भैरवीं दृष्ट्वा सिद्ध्यत्यत्र न संशयः ।
शुभाः स्वप्ना मया ख्याता अशुभांश्च निबोध मे ॥१८॥

श्रीपाञ्चरात्रे परमसंहितायाम्—

अथ नवमोऽध्यायः

( ब्रह्मा )

शुभानामशुभानां च निमित्तानां जनार्दन ! ।
साधकस्य कथं ज्ञेयं तं ब्रवीहि मे ॥

( परमः )

दन्तकाष्ठनिपातेन स्वप्नसंदर्शनेन च ।
अग्निरूपैस्तु जानीयात् साधकस्य शुभाशुभम् ॥२॥
स्वप्नेनापि प्रवक्ष्यामि साधकस्य शुभाशुभम् ॥१२।७॥

स्वप्नं दृष्ट्वा यथारूपं गुरवे तु निवेदयेत्।
स्वप्नं तु प्रथमे यामे कुर्यात्संवत्सरात् फलम् ॥१३॥

अष्टमासात् द्वितीये तु तृतीये त्रिभिरेव च।
मासेनैव भवेदन्त्ये प्रभाते त्वरया फलम् ॥१४॥

रश्मिमन्तं विवस्वन्तं शशाङ्कं तारकावृतम्।
प्रदीप्तमग्निहोत्रं च प्रदीप्तं वापि भास्वरम् ॥१५॥

मातरं पितरं दारान् पुत्रान् भ्रातॄन् सुहृज्जनान्।
अपक्वं मानुषं मांसं पादादिप्रतिभक्षणम् ॥१६॥

क्षीरसोमसुरारक्तशर्करादधिसर्पिषा [षी]।
सागरस्य च नद्याश्च पान पायसभक्षणम् ॥१७॥

नरनागादिसौधानां शिबिकाफलवृक्षयोः।
शकटासनशय्यायां सुखेनैवाधिरोहणम् ॥१८॥

समुद्रसरिदार्दना तरणं च महाम्भसाम्।
देवद्विजगुरुप्राज्ञसाधुभिश्च समागमम् ॥१९॥

शंखचक्रध्वजादीनि गन्धर्वनगरं वृषम्।
छत्रमिन्द्रध्वजं वर्षमादर्शं रत्नमेव च ॥२०॥

चामरं तालवृन्तं च कुम्भं रुधिरमामिषम्।
पिष्टानुलेपनं गात्रे पुण्यशब्दश्रुतानि च ॥२१॥

अगम्यागमनं सर्पवृश्चिकाद्यैश्च दंशनम्।
बन्धनं सर्वगात्रेषु बन्धुभिर्धर्षणं तथा ॥२२॥

स्वप्नानेवंविधान्दृष्ट्वा विविधानपरानपि।
अचिरादेव जानीयाच्छुभां वृद्धिमुपस्थिताम् ॥२३॥

चरके--इन्द्रियस्थाने १२ अध्याये—

आयुर्वेदशास्त्रस्य चिकित्साप्रधानत्वात्तत्र निर्दिष्टशुभस्वप्नानां रोगग्रस्ताना-मेवारोग्यसूचकत्वं ज्ञेयम्--

गृहप्रासादशैलानां नागानामृषभस्य च ॥८१।२॥

हयानां पुरुषाणां च स्वप्ने समधिरोहणम् ।
सोमार्काग्निद्विजातीनां गवां पयस्विनाम् ॥८२॥

अर्णवानां प्रतरणं वृद्धिः सम्बाधनिःसृतिः ।
स्वप्ने देवैः सपितृभिः प्रसन्नैश्चाभिभाषणम् ॥८३॥

दर्शनं शुक्लवस्त्राणां ह्रदस्य विमलस्य च ।
मांसमत्स्यविषामेध्यच्छत्रादर्शपरिग्रहः ॥८४॥

स्वप्ने सुमनसां चैव शुक्लानां दर्शनं शुभम् ।
अश्वगोरथयानं च यानं पूर्वोत्तरेण च ॥८५॥

रोदनं पतितोत्थानं द्विषतां चावमर्दनम् ॥८६।१॥

सुश्रुते--सूत्रस्थानम्, २९ अध्याये—

अत ऊर्ध्वं प्रवक्ष्यामि प्रशस्तं स्वप्नदर्शनम् ।
देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ॥७५॥

समिद्धमग्निं साधूंश्च निर्मलानि जलानि च ।
पश्येत् कल्याणलाभाय व्याधेरपगमाय च ॥७६॥

मांसं मत्स्यान् स्रजःश्वेतवासांसि च फलानि च ।
लभन्ते धनलाभाय व्याधेरपगमाय च ॥७७॥

महाप्रासादसफलवृक्षवारणपर्वतान् ।
आरोहेद् द्रव्यलाभाय व्याधेरपगमाय च ॥७८॥

नदीनदसमुद्रांश्च क्षुभितान् कलुषोदकान् ।
तरेत् कल्याणलाभाय व्याधेरपगमाय च ॥७९॥

उरगो वा जलौको वा भ्रमरो वापि यं दशेत् ।
आरोग्यं निर्दिशेत् तस्य धनलाभं च बुद्धिमान् ॥८०॥

एवं रूपान् शुभान् स्वप्नान् यः पश्येद् व्याधितो नरः ।
स दीर्घायुरिति ज्ञेयस्तस्मै कर्म समाचरेत् ॥८१॥

वाग्भटे ( अष्टाङ्गहृदये ) शारीरस्थाने ६ अध्याये—

देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ।
साधून् यशस्विनो वह्निमिद्धं स्वच्छान् जलाशयान् ॥६६॥

कन्यां कुमारकान् गौरान् शुक्लवस्त्रान् सुतेजसः ।
नराशनं दीप्ततनुं समन्ताद् रुधिरोक्षितः ॥६७॥

यः पश्येल्लभते यो वा छत्रादर्शविषामिषम् ।
शुक्लाः सुमनसो वस्त्रममेध्यालेपनं फलम् ॥६८॥

शैलप्रासादसफलवृक्षसिंहनरद्विपान् ।
आरोहेद् गोऽश्वयानं च तरेन्नदह्लदोदधीन् ॥६९॥

पूर्वोत्तरेण गमनमगम्यागमनं मृतम् ।
संबाधान्निःसृतिर्देवैः पितृभिश्चाभिनन्दनम् ॥७०॥

रोदनं पतितोत्थानं द्विषतां चावमर्दनम् ।
यस्य स्यादायुरारोग्यं वित्तं बहु च सोऽश्नुते ॥७१॥

एते हि स्वप्ना रोगिणामारोग्यकारकाः, अरोगिणाञ्च लाभप्रदाः ।

शार्ङ्गधरसंहिता, ३ अध्याये—

स्वप्नेषु नग्नान् मुण्डांश्च रक्तकृष्णाम्बरावृतान् ॥९॥

व्यङ्गांश्च विकृतान् कृष्णान् सपाशान् सायुधानपि ।
बन्धतो निघ्नतश्चापि दक्षिणां दिशमाश्रितान् ॥१०॥

महिषोष्ट्रखरारूढान् स्त्रीपुंसो यस्तु पश्यति ।
स स्वस्थो लभते व्याधिं रोगी यात्येव पञ्चताम् ॥११॥

अधो यो निपतत्युच्चाज्जलेऽग्नौ वा विलीयते।
श्वापदैर्हन्यते योऽपि मत्स्याद्यैर्गिलितो भवेत् ॥१२॥

यस्य नेत्रे विलीयेते दीपो नीर्वाणतां व्रजेत्।
तैलं सुरां पिबेद् वापि लोहं वा लभते तिलान् ॥१३॥

पक्वान्नं लभतेऽश्नाति विशेत् कूपं रसातलम्।
स स्वस्थो लभते रोगं रोगी यात्येव पञ्चताम् ॥१४॥

शतचण्डीयज्ञविधाने--

त्रिविधं दर्शनं तत्र यथार्थमयथार्थकम्।
अपाकजं यत् स्वस्थानां संयतानां हि दर्शनम् ॥

यथार्थमयथार्थं तदस्वस्थानां विकारजम्।
अपाकजं मानसं च यथार्थफलमुच्यते ॥

आगमसिद्धान्ते—

आद्ये वर्षाद् वत्सरार्द्धाद्द्वितीये यामे पाको वर्षपाकास्तृतीये।
यामे पाकां शर्वरी तुर्यपादे सद्यः पाको यो विसर्गेषु दृष्टः ॥

(तथा) स्वप्ने पश्यति वै देवं निजेष्टं सर्वतोमुखम्।
गुरुं प्रसादसुमुखं निर्मलं चन्द्रमण्डलम् ॥

गङ्गां भागीरथीं भानुं लिङ्गिनं लिङ्गमीश्वरम्।
प्रसन्नां तत्र जानीयात् सिद्धिं स्वप्ननिदर्शने ॥

नारदपञ्चरात्रे—

क्षितिलाभः क्षतं चाब्धितरणं चाग्निपूजनम्।
होमश्च ज्वलिते वह्नौ संग्रामविजयस्तथा ॥

हंसकोकमयूराणां रथारोहणमेव च।

माहाकापालिकतन्त्रे—

कन्यां छत्रं रथं दीपं प्रासादं कमलं नदीम्।
कुञ्जरं वृषभं मालां समुद्रफेनिलं द्रुमम् ॥

पर्वतं च हयं मद्यमाममांसं सुरासवम् ।
एवामादीनि सर्वाणि दृष्ट्वा सिद्धिमवाप्नुयात् ॥

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।

समृद्धि तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥

नदीसमुद्रतरणमाकाशगमनन्तथा ।
भास्करोदयनं चैव प्रज्ज्वलन्तं हुताशनम् ।
ग्रहनक्षत्रताराणां चन्द्रमण्डलदर्शनम् ॥

हर्म्यप्ररोहणं चैव प्रसादशिरसोऽपि वा ।
नागाश्ववृषभेन्द्राणां तरुशैलाग्ररोहणम् ॥

विमानगमनं चैव सिद्धमन्त्रस्य दर्शनम् ।
एवमादीनि सन्दृष्ट्वा नरः सिद्धिमवाप्नुयात् ॥

स्वप्ने तु मदिरापानमाममांसस्य भोजनम् ।
कृमिविष्ठानुलेपं च रुधिरेणाभिषेचनम् ॥

भोजनं दधिभक्तस्य श्वेतवस्त्रानुलेपनम् ।
सिंहासनं रथं यानं ध्वजं राज्याभिषेचनम ॥

रत्नान्याभरणादीनि दृष्ट्वा स्वप्ने प्रसीदति ।

नारदपञ्चरात्रे—

गुरुर्देवो द्विजः कन्या गोगजाश्वाश्च केशरी ।
दर्पणं शङ्खभेर्यौ च तन्त्रीवाद्यं च रोचनम् ॥

ताम्बूलभक्षणं चैव तथा वन्द्याभिवन्दनम् ।
मालीमुक्ताफले हारः पूर्णः समुदितः शशी ॥

स्वच्छवस्त्रं तथा सूर्यो निम्नगा च महोदधिः ।
प्रफुल्लपादपः शाली रोचना कुङ्कुमं मधु ॥

लाजाः सिद्धार्थकाः बीजं नवभाण्डं च पायसम् ।
एते स्वप्ने शुभाः प्रोक्ताः सिद्धियोगफलप्रदाः ॥

नारदीये—

ग्रहणं तु परस्त्रीणामगम्यागमनन्तथा ।
दंशनं श्वेतनागेन बन्धनं शृङ्खलादिभिः ॥

रोदनं ताडनं चैव धावनं चाङ्गपातनम् ।
मृल्लोहत्रपुकांस्य शीसकस्यापि कुत्सितात् ॥

धातोर्लाभस्तथा पुष्पं फलरत्नावुभावपि ।
व्यजनं स्वयमन्येन धमनं च विभावसोः ॥
एवमादीनि चान्यानि शुभान्याहुर्मनीषिणः ।

मेरुतन्त्रे —

पूर्णकुम्भो दर्पणं च मीनमाज्य च रोचना ।
शवं रोदनहीनं च शस्त्राणि च पताकिका ॥

भारद्वाजो नृपालश्च वेदशब्दश्च गायनम् ।
कशामाङ्गल्यगीतानि चाङ्कुशं यद्हृदः प्रियम् ॥

स्वप्ने दृष्टानि चैतानि साधकः सिद्धिमाप्नुयात् ।
व्याध्यार्ते नास्ति दुःखं स्यात् सामान्यं सुखमाप्नुयात् ॥

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
कामयन्तीं नदीं-सिन्धुं तरंगं भ्रमणं च खे ॥

भास्करोदयनं चैव ग्रहणं चन्द्रसूर्ययोः ।
हर्म्यप्रासादनागाश्ववृषशैलाग्निरोहणम् ॥
भोजनं दधिभक्तस्य पक्वमांसस्य भोजनम् ।
कृमिविष्ठानुलेपश्च रुधिरेणाभिषेचनम् ॥

ताम्बूलभक्षणं मद्यपानं वन्द्याभिवन्दनम् ।
प्रचण्डकिरणः स्वस्थः कार्यसिद्धेस्तु लक्षणम् ॥

श्वेताम्बरधरा नारी श्वेतमाल्यानुलेपना ।
अवगूहति यः स्वप्ने तस्य श्रीः सर्वतोमुखी ॥

असने शयने पाने शरीरे वाहने गृहे ।
ज्वलमाने विबुध्येत तस्य श्रीः सर्वतोमुखी ॥

सितोरगस्य दंशश्च जायते दक्षिणे करे ।
दशाहोभिर्भवेद्लाभो रोगी रोगाद् विमुच्यते ॥

निगडैर्बहुपाशेन बध्यते वा सुतो भवेत् ।
प्रतिष्ठा वर्धते तस्य दुग्धपानाद्धि तत्क्षणः ॥

सुरारक्तं पिबन् विग्रां लभेद्विप्रो धनं परम् ।
दधि दृष्ट्वा भवेत्प्रीतिर्गोधूमश्च धनागमाः ॥

सिद्धा विष्टागमं विद्याल्लाभः सिद्धार्थकैस्तथा ।
दधिलाभाद्भवेदर्थो घृतलाभाद्भवेज्जयः ॥

घृताशनादत्त क्लेशो जयस्तु दधिभक्षणे ।
लिङ्गाद्यभ्यर्चनं दृष्ट्वा व्यवहारे जयो भवेत् ॥

यस्तु मध्ये तडागादेर्भुञ्जीत धृतपायसम् ।
निष्कम्प-पुष्करे पत्रे तं विद्यात् पृथिवीपतिम् ॥

देवता लिङ्गिनो गावः पितरो ब्राह्मणा नृपाः ।
यद्वदन्ति नराः स्वप्ने तत् तथैव भविष्यति ॥

अन्त्रैः सम्वेष्टयेद्यस्तु ग्रामं नगरमेव वा ।
ग्रामे मण्डलराज्यं स्यान्नगरे पार्थिवो भवेत् ॥

चन्द्रताराकंग्रसनं परिमार्गणमेव च ।
भूम्यम्बुधीनां ग्रसनं शत्रूणां च वधक्रिया ॥

जयो विवादद्यूतेषु शत्रूणां च तथा जयः ।
वडवामहिषीमहीगोहस्तिन्यादिदोहनम् ॥

प्रसादो गुरुविप्रेष्टदेवसिद्धादिकाच्छुभः ।
स्नानं राज्याभिषेकश्च स्वशिरश्छेदनं मृतिः ॥

तीर्थोदकानां तरणं तथा विषलधनम् ।
गोहस्तिवडवासूतिर्वह्निलाभस्तथैव च ॥

परस्यालिङ्गनं तस्या लाभो रोदनमेव च ।
विष्टालेपः कुन्दजातिवकुलक्ष्मेशदर्शनम् ॥

रणद्युतिविमर्देषु जयो निगडबन्धनम् ।
पशुमर्त्यमृगाणां च लब्धिरध्यसनं तथा ॥

शिखीलाभः श्वेतवस्त्रपुष्पचन्दनधारणम् ।
मणितारसुवर्णादिपात्रे भोजनकं यदा ॥

पश्येत् तदा साधकस्य ज्ञेया सिद्धिरुपस्थिता ।
कार्यार्त्तानां कार्यसिद्धिरितरेषां धनागमः ॥

# दुःस्वप्ननिरूपणाध्यायः

## दुःस्वप्नानां निरूपणम्

तत्र विशेषतोऽरिष्टसूचका इमे स्वप्नाः—स्वप्ने वान्तमूत्रपुरीषेषु रजतं सुवर्णं वा यः प्रत्यक्षीकरोति अथवा मूत्रपुरीषस्वर्णरजतानि वमति, स दश नव वा मासान् जीवति। यो हि गीतं गायन् नृत्यन् सन् ऋक्षवानरयुतवाहनेन दक्षिणां दिशं व्रजति, एकं बलवन्तं हसन्त धृष्टं नग्नं संन्यासिनं पश्यति, कृष्णवस्त्रावृतया गायन्त्या स्त्रिया दक्षिणां दिशं यो नीयमानः, सच्छिद्रं कृष्णं वस्त्रं दधाति भग्नं विनष्टं वा श्रवणं पश्यति, गर्ते निपत्य यो नोत्तिष्ठति, अथवा तस्य द्वारपिधानं भवति, अग्नौ जले वा प्रविश्य न निःसरति, अथवा प्रविश्य तत्र स्मृतिं न लभते, आत्मनः प्रावरणं शुक्लं कृष्णं रक्तं वा पश्यति तेषां मृत्युरासन्नो वर्तते। यः स्वप्ने आत्मानमामस्तकं पङ्के निमग्नं पश्यति, कृष्णवर्ण-भयानकोद्यतायुधपुरुषैः पाषाणैरात्मानं ताडितं पश्यति, उष्ट्र-गर्दभयुक्तयानेन यो दक्षिणां दिशं याति, तेषामासन्नतरो मृत्युरस्ति।

केशान्, भस्म, शुष्कां नदीम्, अङ्गारान् सर्पांश्च यः स्वप्ने पश्यति स दशाह-मेकादशाहं वा जीवति। स्वप्ने यं गृध्रकाकशृगालराक्षसप्रेतपिशाचा अदन्ति. गर्दभोष्ट्र-महिषा वा यं वहन्ति, तेषां वर्षपर्यन्तं जीवनावधिः। अतीन्द्रियाणां यक्षरक्षःप्रेत-पिशाचानां दर्शनेन नवमे मासि मृत्युः। रक्तचन्दनवस्त्रमाल्यधारणं तैलाभ्यङ्गं गर्दभेन याम्यदिङ्गमनं यः पश्यति स षण्मासान् जीवति। एष एवावधिः कृष्णपुरुषैः पाषाण-द्वारा ताडितस्यापि। यो लोहदण्ड-कृष्णवस्त्रयुतं कृष्णं नरं पार्श्वेऽवलोकयति स मासत्रयं जीवति। रक्तगन्धाम्बरः स्रग्वी दक्षिणं याति खरोष्ट्रं वाऽऽरोहति, सोपि मासत्रय-मेव जीवति।

नीचजातिभिर्यो दक्षिणस्यां कृष्यते, स स्वस्थश्चेद् व्याधिना पीडचेत, व्याधित-श्चेन्मृत्युमाप्नुयात्। यः स्वप्ने आत्मानं मृतं पश्यति स द्वादशाहं जीवति। अश्वान्. शष्कुलीं च खादित्वा वमति। यः खरोष्ट्रमार्जारिकपिशृगालसूकरप्रेतशार्दूलयान-मारोहति, यस्य मस्तके वंशलतादीनामुद्भवः, पक्षिणां निलयः, मुण्डनम्, काक-गृध्रादिना वृतत्वम् वेत्रलतावंशातृणकण्टकसंकीर्णे स्थाने प्रेतपिशाचस्त्रीद्रविणान्ध्र-गोमांसभक्षकैः संगः, गर्तश्मशानशयनं पांसौ भस्मनि वा पतनम्, जले पङ्कादौ वा

स्नानम् वेगवति प्रवाहे प्रवहणम्, नृत्यवादित्रगानानि विवाहः, क्षौरकर्म, रक्तस्रग्-वस्त्रधारणम्, अङ्गवृद्धिश्च-एते स्वप्ना व्याधितानां महते भयाय भवन्ति। विशेष-रोगसूचका दारुणाः स्वप्ना इमे-यं स्वप्ने प्रेतैः सह मद्यं पिबन्तं श्वा नयति, स ज्वरेण प्रमेहेण वा म्रियते। रक्तवस्त्रमाल्यधरं हसन्तं यं स्त्रियो हरन्ति, स रक्त-पित्तेन, महिषकुक्कुरशूकरक्रमेलकगर्दभैर्यो दक्षिणां दिशं याति स यक्ष्मणा, यस्य हृदये लता, व्याघ्रो, वेणुः, तालो वा जायते स गुल्मरोगेण ज्वालारहितमग्निं जुह्वतो यस्य घृतशिक्तस्य नग्नस्य वक्षःस्थले कमलं जायते स कुष्ठरोगेण, योऽनेक-प्रकारं स्नेहपदार्थं तैलमद्यघृतादिकं चाण्डालैः सह पिबति, स प्रमेहेण, यो राक्षसैः सह नृत्यन् जले स्नाति स उन्मादेन, यो हि नृत्यन् प्रेतेन नीयते, सोऽपस्मारेण, यो रक्तमाकाशं पश्यति, स रक्तपित्तेन, सूर्याचन्द्रमसोर्ग्रहणं प्रपातं वा यः पश्यति सोऽक्षिरोगेण विनश्यति, अथवा तस्य अक्षिविनाशो जायते।

तथा चोक्तं वायुपुराणे १९ अध्याये—

'वमेन्मूत्रपु[१]रीषं वा सुवर्णं रजतं तथा।
प्रत्यक्षमथवा स्वप्ने दश मासान् स जीवति ॥४॥

ऋक्षवानरयुक्तेन रथेनाशां तु दक्षिणाम्।
गायन्नथ व्रजेत् स्वप्ने विद्यान् मृत्युरुपस्थितः ॥१३॥

कृष्णाम्बरधरा श्यामा गायन्ती वाथ चाङ्गना।
यं नयेद्दक्षिणामाशां स्वप्ने सोऽपि न जीवति ॥१४॥

छिद्रं वासश्च कृष्णं च स्वप्ने यो बिभृयान्नरः।
भग्नं वा श्रवणं दृष्ट्वा विद्यान्मृत्युरुपस्थितः ॥१५॥

आमस्तकतलाद् यस्तु निमज्जेत् पङ्कसागरे।
दृष्ट्वा तु तादृशं स्वप्नं सद्य एव न जीवति ॥१६॥

भस्माङ्गारांश्च केशांश्च नदीं शुष्कां भुजङ्गमान्।
पश्येद् यो दशरात्रं तु न स जीवेत तादृशः ॥१७॥

कृष्णैश्च विकटैश्चैव पुरुषैरुद्यतायुधैः।
पाषाणैस्ताड्यते स्वप्ने यः सद्यो न स जीवति ॥१८॥

---

१. क्वचित् करीषमिति पाठोऽपि वर्तते।

मुक्तकेशो हसंश्चैव गायन् नृत्यंश्च यो नरः।
याम्याशाभिमुखो गच्छेत्तदन्तं तस्य जीवितम् ॥२५॥

उष्ट्रा वा रासभा वापि युक्ताः स्वप्ने रथेऽशुभाः।
यस्य सोऽपि न जीवेत दक्षिणाभिमुखो गतः ॥२७॥

श्वभ्रं यो निपतेत् स्वप्ने द्वारं चास्य न विद्यते।
न चोत्तिष्ठतिः यः श्वभ्रात् तदन्तं तस्य जीवितम् ॥२९॥

अग्निप्रवेशं कुरुते स्वप्नान्ते यस्तु मानवः।
स्मृतिं नोपलभेच्चापि तदन्तं तस्य जीवितम् ॥३१॥

यस्तु प्रावरणं शुक्लं स्वकं पश्यति मानवः।
रक्तं कृष्णमपि स्वप्ने तस्य मृत्युरुपस्थितः ॥३३॥" इति ॥

एष एवार्थो मार्कण्डेयपुराणे ४३ अध्याये, लिङ्गपुराणे ९१ अध्याये, अग्निपुराणे २२६ अध्याये, मत्स्यपुराणे २४२ अध्याये कालिकापुराणे ८७ अध्याये आदित्यपुराणे च उक्तः, पराशरेण दवलेन च व्याख्यातः। कालावल्याम्, चरकसंहितायामिन्द्रियस्थाने ५ अध्याये, सुश्रुते सूत्रस्थाने २९ अध्याये, अष्टाङ्गहृदये शारीरस्थाने ६ अध्याये, विष्णुपुराणे।

मार्कण्डेय पुराणे ४३ अध्यायेऽरिष्टसूचकदुःस्वप्नाः—

वान्ते मूत्र पुरीषे च यः स्वर्णं रजतं तथा।
प्रत्यक्षं कुरुते स्वप्ने जीवेत् स दशमासिकम् ॥४॥

ऋक्षवानरयानस्थो गायन् यो दक्षिणां दिशम्।
स्वप्ने प्रयाति तस्यापि न मृत्युः कालमिच्छति ॥१५॥

नग्नं क्षपणकं स्वप्ने हसमानं महाबलम्।
एकं संवीक्ष्य वलान्तं विद्यान्मृत्युमुपस्थितम् ॥१६॥

आमस्तकतलाद् यस्तु निमग्नं पङ्कसागरे।
स्वप्ने पश्यत्यथात्मानं सद्यः स म्रियते नरः ॥१७॥

केशाङ्गारांस्तथा भस्म भुजङ्गान्निर्जलां नदीम्।
दृष्ट्वा स्वप्ने दशाहात्तु मृत्युरेकादशे दिने ॥१८॥

करालैर्विकटैः कृष्णैः पुरुषैरुद्यतायुधैः ।
पाषाणैस्ताडितः स्वप्ने सद्यो मृत्युं लभेन्नरः ॥१९॥

उष्ट्ररासभयानेन यः स्वप्ने दक्षिणां दिशम् ।
प्रयाति तं च जानीयात् सद्यो मृत्युं न संशयः ॥२०॥

पततो यस्य वै गर्ते स्वप्ने द्वारं पिधीयते ।
न चोत्तिष्ठति यः श्वभ्रात्तदन्तं तस्य जीवितम् ॥२१॥

स्वप्नेऽग्निं प्रविशेद् यस्तु न च निष्क्रमते पुनः ।
जलप्रवेशादपि वा तदन्तं तस्य जीवितम् ॥२२॥

**पाद्मेऽपि–**

स्वप्ने पश्यन्ति चात्मानं रक्ताम्बर विभूषितम् ।
स्वप्ने पश्यन्ति ते चैवं विपरीतानि यानि तु ॥१३॥

एतान् पश्यन्ति उत्पातांस्तत्र स्थानेषु ये जनाः ।
तेषां बलञ्च बुद्धिश्च हरः क्रोधादनाशयत् ॥१४॥

आ० खं० १५ अ०

अग्निपुराणे २२९ अध्याये दुःस्वप्नाः –

**पुष्कर उवाच–**

स्वप्नं शुभाशुभं वक्ष्ये दुःस्वप्नहरणं तथा ।
नाभिं विनाऽन्यत्र गात्रे तृणवृक्षसमुद्भवः ॥१॥

चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा ।
मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता ॥२॥

उच्चात् प्रपतनञ्चैव विवाहो गीतमेव च ।
तन्त्रीवाद्यविनोदश्च दोलारोहणमेव च ॥३॥

अर्जनं पद्मलोहानां सर्पाणामथ मारणम् ।
रक्तपुष्पद्रुमाणाञ्च चण्डालस्य तथैव च ॥४॥

वराहाश्वखरोष्ट्राणां तथा चारोहणक्रिया ।
भक्षणं पक्षिमांसानां तैलस्य कृशरस्य च ॥५॥

मातुः प्रवेशो जठरे चितारोहणमेव च ।
शक्रध्वजाभिपतनं पतनं शशिसूर्ययोः ॥६॥

दिव्यान्तरिक्षभौमानामुत्पातानाञ्च दर्शनम् ।
देवद्विजातिभूतानां गुरूणां कोप एव च ॥७॥

नर्तनं हसनञ्चैव विवाहो गीतमेव च ।
तन्त्रीवाद्यविहीनानां वाद्यानामपि वादनम् ॥८॥

स्त्रोतोवहाधोगमनं स्नानं गोमयवारिणा ।
पङ्कोदकेन च तथा मशीतोयेन वाप्यथ ॥९॥

आलिङ्गनं कुमारीणां पुरुषाणाञ्च मैथुनम् ।
हानिञ्चैव स्वगात्राणां विरेको वमनक्रिया ॥१०॥

दक्षिणाशाप्रगमनं व्याधिनाभिभवस्तथा ।
फलानामुपहानिश्च धातूनां भेदनं तथा ॥११॥

गृहाणां चैव पतनं गृहसंमार्जनं तथा ।
क्रीडापिशाचक्रव्यादवानरान्त्यनरैरपि ॥१२॥

परादभिभवञ्चैव तस्माच्च व्यसनोद्भवः ।
काषायवस्त्रधारित्वं तद्वस्त्रैः क्रीडनं तथा ॥१३॥

स्नेह पानावगाहौ च रक्तमाल्यानुलेपनम् ।
इत्यधन्यानि स्वप्नानि तेषामकथनं शुभम् ॥१४॥

लिङ्गपुराणे ९१ अध्याये दुःस्वप्नाः—

वमेन् मूत्रपुरीषं च सुवर्णं रजतं तथा ।
प्रत्यक्षमथवा स्वप्ने दशमासान्न जीवति ॥४॥

ऋक्षवानरयुक्तेन रथेनाशाञ्च दक्षिणाम् ।
गायन् नृत्यन् व्रजेत् स्वप्ने विद्यान्मृत्युरुपस्थितः ॥५॥

कृष्णाम्बरधरा श्यामा गायन्ती वाप्यथाङ्गना ।
यं नयेद्दक्षिणामाशां स्वप्ने सोऽपि न जीवति ॥१६॥

छिद्रं वा स्वस्य कण्ठस्य स्वप्ने यो वीक्षते नरः ।
नग्नं वा श्रमणं दृष्ट्वा विद्यान्मृत्युमुपस्थितम् ॥१७॥

आमस्तकतलाद् यस्तु निमज्जेत् पङ्कसागरे ।
दृष्ट्वा तु तादृशं स्वप्नं सद्य एव न जीवति ॥१८॥

भस्माङ्गारांश्च केशांश्च नदीं शुष्कां भुजङ्गमान् ।
पश्येद् यो दशरात्रं तु न स जीवति तादृशः ॥१९॥

कृष्णैश्च विकटैश्चैव पुरुषैरुद्यतायुधैः ।
पाषाणैस्ताडयते स्वप्ने यः सद्यो न स जीवति ॥२०॥

उष्ट्रा वा रासभा वाऽभियुक्ताः स्वप्ने रथे शुभाः ।
यस्य सोऽपि न जीवेत्तु दक्षिणाभिमुखो गतः ॥२६॥

श्वभ्रे यो निपतेत् स्वप्ने द्वारश्चापि पिधीयते ।
न चोत्तिष्ठति यः श्वभ्रात् तदन्तं तस्य जीवितम् ॥३१॥

अग्निप्रवेशं कुरुते स्वप्नान्ते यस्तु मानवः ।
स्मृतिं नोपलभेच्चापि तदन्तं तस्य जीवितम् ॥३४॥

यस्तु प्रावरणं शुक्लं स्वकं पश्यति मानवः ।
कृष्णं रक्तमपि स्वप्ने तस्य मृत्युरुपस्थितः ॥३५॥

मत्स्यपुराणे—२४१ अध्याये

इदानीं कथयिष्यामि निमित्तं स्वप्नदर्शने ।
नाभिं विनाऽन्यगात्रेषु तृणवृक्षसमुद्भवः ॥२॥
चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा ।
मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता ॥३॥

उच्चैः प्रपतनं चैव दोलारोहणमेव च ।
अञ्जनं पङ्कलोहानां तपतामपि धारणम् ॥४॥

रक्तपुष्पद्रुमाणां च चाण्डालस्य तथैव च।
वराहर्क्षखरोष्ट्राणां तथा चारोहणक्रिया ॥५॥

भक्षणं पक्वमांसानां तैलस्य कृशरस्य च।
नर्तनं हसनं चैव विवाहो गतिमेव च ॥६॥

तन्त्री शाद्यविहीनानां वाद्यानामपि वादनम्।
पङ्कोदकेन च तथा महीतोयेन चाप्यथ।
मातुः प्रवेशो जठरे चितारोहणमेव च ॥८॥

शक्रध्वजानां पतनं पतनं शशिसूर्ययोः।
दिव्यान्तरिक्षभौमानामुत्पातानां च दर्शनम् ॥९॥

देवद्विजातिभूपालगुरूणां क्रोध एव च।
आलिङ्गनं कुमारीणां पुरुषाणां च मैथुनम् ॥१०॥

हानिश्चैव स्वगात्राणां विरेकवमनक्रिया।
दक्षिणाशाभिगमनं व्याधिनाऽभिभवस्तथा ॥११॥

फलापहारहानिश्च गृहाणां चैव पातनम्।
गृहसंमार्जनं चैव धनहानिं विनिर्दिशेत् ॥१२॥

पीडा पिशाचक्रव्यादवानरान्त्यनरैरपि।
परादभिभवश्चैव तस्माच्च व्यसनोद्भवः ॥१३॥

काषायवस्त्रधारित्वं तद्वत् स्त्री क्रीडनं तथा।
स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम् ॥१४॥

एवमादीन्यधन्यानि स्वप्नानि तु विनिर्दिशेत्।

ऐतरेयारण्यके दशसंख्याकानि विशेषतः स्वप्नारिष्टानि दर्शितानि—"पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति वराह एनं हन्ति मर्कट एनमास्कन्दयत्याशु वायुरेनं प्रवहति सुवर्णं खादित्वाऽपगिरति मध्वश्नाति विसानि भक्षयत्येकपुण्डरीकं धारयति खरैर्वराहैर्यति कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणामुखो व्राजयति" इति।
(ऐ. आ॰ ३।२।४)

तथाचात्रसायणभाष्यम्—स्वप्ने साकल्पेनात्यन्तं कृष्णवर्णं पुरुषदेहं कृष्णवर्णैर्दन्तै-र्युक्तं पश्यति। स च पुरुष आगत्यैनं स्वप्नद्रष्टारं हन्ति स्वप्नमध्ये मारयति। तदिदमेक-मरिष्टम्। तथाऽरण्यमध्ये प्रौढो वराह आगत्य मारयति। तदिदं द्वितीयम्। मर्कटः कश्चिदागत्यैनं स्वप्नद्रष्टारमास्कन्दयति समन्तान्मूर्धपर्यन्तमारोहति। तदिदं तृतीयम्। अतिशीघ्रगामी प्रौढो वायुरेनं गृहीत्वा निम्नदेशे जलवत्प्रवहति। एतच्चतुर्थम्। सुवर्णनिर्मितमाभरणं लड्डुकादिवद् भक्षयित्वा पुनरपि वमति। एतत्पञ्चमम्। माक्षिकं यन्मधु तदाकण्ठमश्नाति। एतत्षष्ठम्। विसानि पद्मादीनां नालानि भक्षयति। एतत्सप्तमम्। एकपुण्डरीकं रक्तवर्णमिति सम्प्रदायः। तच्छिरसि धारयति। एतदष्टमम्। युक्तैरश्ववत् सज्जीकृतैर्गर्दभैर्वराहैर्वा ग्रामान्तरं गच्छति। एतन्नवमम्। नलदमाली रक्तकुसुमग्रथितस्रग्वी दक्षिणदिगभिमुखो भूत्वा कांचित् कृष्णवत्सोपेतां कृष्णां धेनुं व्राजयति देशान्तरं प्रेरयति। एतद्दशमम्।

ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे ८२ अध्याये

## दुःस्वप्नाः—

नन्द उवाच

श्रुतं सर्वं महाभाग दुःस्वप्नं कथय प्रभो।
उवाच तञ्च भगवान् श्रूयतामिति तद्वचः ॥१॥

श्रीभगवानुवाच—

स्वप्ने हसति यो हर्षाद् विवाहं यदि पश्यति।
नर्तनं गीतमिष्टं च विपत्तिस्तस्य निश्चितम् ॥२॥

दन्ता यस्य विपीडयन्ते विचरन्तश्च पश्यति।
धनहानिर्भवेत्तस्य पीडा चापि शरीरजा ॥३॥

अभ्यङ्गितस्तु तैलेन यो गच्छेद्दक्षिणां दिशम्।
खरोष्ट्रमहिषारूढो मृत्युस्तस्य न संशयः ॥४॥

स्वप्ने चूर्णं जवापुष्पमशोकं करवीरकम्।
विपत्तिस्तस्य तैलं च लवणं यदि पश्यति ॥५॥

नग्नां कृष्णां छिन्ननासां शूद्रस्य विधवां तथा।
कपर्द्दकं तालफलं दृष्ट्वा शोकमवाप्नुयात् ॥६॥

स्वप्ने रुष्टं ब्राह्मणञ्च ब्राह्मणीं कोपसंयुताम् ।
विपत्तिश्च भवेत्तस्य लक्ष्मीर्याति गृहाद् ध्रुवम् ॥७॥

वनपुष्पं रक्तवर्णं पलाशञ्च सुपुष्पितम् ।
कार्पासं शुक्लवस्त्रञ्च दृष्ट्वा दुःखमवाप्नुयात् ॥८॥

गायन्तीं च हसन्तीं च कृष्णाम्बरधरां स्त्रियम् ।
दृष्ट्वा कृष्णां च विधवां नरो मृत्युमवाप्नुयात् ॥९॥

देवता यत्र नृत्यन्ति गायन्ति च हसन्ति च ।
आस्फोटयन्ति धावन्ति तस्य देशो विनश्यति ॥१०॥

वान्तं मूत्रं पुरीषं च रैत्यं रौप्यं सुवर्णकम् ।
प्रत्यक्षमथवा स्वप्ने जीवितं दशमासिकम् ॥११॥

कृष्णाम्बरधरां नारीं कृष्णमाल्यानुलेपनाम् ।
उपगूहति यः स्वप्ने तस्य मृत्युर्भविष्यति ॥१२॥

मृतं वत्सञ्च मुण्डञ्च मृगस्य च नरस्य वा ।
यः प्राप्नोत्यस्थिमालाञ्च विपत्तिस्तस्य निश्चितम् ॥१३॥

अभ्यङ्गितन्तु हविषा क्षीरेण मधुनापि वा ।
तक्रेणापि गुडेनैव पीडा तस्य विनिश्चतम् ॥१४॥

रथं खरोष्ट्रसंयुक्तमेकाकी योऽधिरोहति ।
तत्रस्थोपि च जागर्ति मृत्युरेव न संशयः ॥१५॥

रक्ताम्बरधरां नारीं रक्तमाल्यानुलेपनाम् ।
उपगूहति यः स्वप्ने व्याधिस्तस्य विनिश्चितम् ॥१६॥

पतितं नखकेशं च निर्वाणाङ्गारमेव च ।
भस्मपूर्णां चितां दृष्ट्वा लभते मृत्युमेव च ॥१७॥

श्मशानतृणकाष्ठञ्च तृणानि लौहमेव च ।
मसीञ्च किञ्चित्कृष्णां वा दृष्ट्वा दुःखं लभेद् ध्रुवम् ॥१८॥

पादुकाफलकं रक्तपुष्पमाल्यं भयानकम् ।
माषं मसूरं मुद्गं वा दृष्ट्वा सद्यो व्रणं भवेत् ॥१९॥

कङ्कं च शकुनं काकं भल्लूकं वानरं गरम् ।
पूयं गात्रमलं स्वप्ने केवलं व्याधिकारणम् ॥२०॥

भग्नभाण्डं क्षतं शूद्रं गलत्कुष्ठं च रोगिणम् ।
रक्ताम्बरं च जटिलं शूकरं महिषं खरम् ॥२१॥

अन्धकारं महाघोरं मृतजीवं भयंकरम् ।
दृष्ट्वा स्वप्ने योनिलिङ्गं विपत्ति लभते ध्रुवम् ॥२२॥

कुवेशरूपं म्लेच्छं च यमदूतं भयङ्करम् ।
पाशहस्तं पाशशस्त्रं दृष्ट्वा मृत्युं लभेन्नरः ॥२३॥

ब्राह्मणो ब्राह्मणी बाला बालको वा सुतः सुता ।
विदायं कुरुते कोपाद् दृष्ट्वा दुःखमवाप्नुयात् ॥२४॥

कृष्णपुष्पञ्च तन्माल्यं सैन्यं शस्त्रास्त्रधारिणम् ।
म्लेच्छां च विकृताकारां दृष्ट्वा मृत्युं लभेद् ध्रुवम् ॥२५॥

वाद्यञ्च नर्तनं गीतं गायनं रक्तवाससम् ।
मृदङ्गवाद्यमानन्दं दृष्ट्वा दुःखं लभेद् ध्रुवम् ॥२६॥

प्राणत्यक्तं मृतं दृष्ट्वा मृत्युं च लभते ध्रुवम् ।
मत्स्यादि धारयेद् यो हि तद्भ्रातुर्मरणं ध्रुवम् ॥२७॥

छिन्नं वापि कबन्धं वा विकृतं मुक्तकेशिनम् ।
क्षिप्रनृत्यञ्च कुर्वन्तं दृष्ट्वा मृत्युं लभेन्नरः ॥२८॥

मृतो वापि मृता वापि कृष्णो म्लेच्छो भयानकः ।
अवगूहति यं स्वप्ने तस्य मृत्युर्विनिश्चितम् ॥२९॥

यस्य दन्ताश्च भग्नाश्च केशाश्चापि पतन्ति च ।
धनहानिर्भवेत्तस्य पीडा वातच्छरीरजा ॥३०॥

उपद्रवन्ति यं स्वप्ने शृंगिणो दंष्ट्रिणोऽपि वा ।
बाणकाशा नराश्चैव तस्य राजकुलाद् भयम् ॥३१॥

छिन्नं वृक्षं पतन्तञ्च शिलावृष्टिं तुषं क्षुरम् ।
रक्ताङ्गारं भस्मवृष्टिं दृष्ट्वा दुःखमवाप्नुयात् ॥३२॥

रथगेहवृक्षशैलगोहस्तितुरगाम्बरात् ।
भूमौ पतति यः स्वप्ने विपत्तिस्तस्य निश्चितम् ॥३३॥

उच्चैः पतन्ति गर्तेषु भस्माङ्गारचितेषु च ।
क्षारकुण्डेषु चूर्णेषु मृत्युस्तेषां न संशयः ॥३४॥

बलाद् गृह्णाति दुष्टश्चच्छत्रञ्च यस्य मस्तकात् ।
पितुर्नाशो भवेत्तस्य गुरोर्वापि नृपस्य च ॥३५॥

सुरभी यस्य गेहाच्च याति त्रस्ता सवत्सिका ।
प्रयाति पापिनस्तस्य लक्ष्मीरपि वसुन्धरा ॥३६॥

पाशेन कृत्वा बद्धञ्च यं गृहीत्वा प्रयान्ति च ।
यमदूताश्च वा म्लेच्छास्तस्य मृत्युर्विनिश्चितम् ॥३७॥

गणको ब्राह्मणो वा ब्राह्मणी वा गुरुस्तथा ।
परिरुष्टः शपति यं विपत्तिस्तस्य निश्चितम् ॥३८॥

विरोधिनश्च काकाश्च कुक्कुरा भल्लुकास्तथा ।
पतन्त्यागत्य यद्गात्रे तस्य मृत्युर्न संशयः ॥३९॥

महिषा भल्लुका उष्ट्राः शूकरा गर्दभास्तथा ।
रुष्टा धावन्ति यं स्वप्ने स रोगी निश्चितं भवेत् ॥४०॥

विष्णुधर्मोत्तरपुराणे —तृतीय खण्डे २३८ अध्याये—

सुवर्णं रजतं मूत्रं पुरीषं वमते निशि ।
स्वप्ने स मासि दशमे प्रयाति यममन्दिरम् ॥२३८।९॥

रक्षः प्रेतपिशाचानां यक्षाणामपि दर्शनात् ।
अतीन्द्रियाणामन्येषां नवमे मरणं ध्रुवम् ॥२३८।८॥

विष्णुपुराणे

देवद्विजादिभूपानां प्रजानां क्रोध एव च।[1]
आलिङ्गनं कुमारीणां प्राणिनां चैव मैथुनम्॥

हानिश्चैव स्वगात्राणां वीरकण्ठमनःप्रियान्।
दक्षिणाशाभिगमनं व्याधिनाभिभवस्तथा॥

फलापहारश्च तथा शाड्वलानां विशोधनम्।
काषायवस्त्रधारित्वं तद्वत् क्रीडनके तथा॥

स्नेहपानावगाहौ च रक्तं माल्यानुलेपनम्।
एवमादीनि चान्यानि दुःस्वप्नानि विनिर्दिशेत्॥

कालिकापुराणे ८६ अध्याये—

दर्शनं चोपरागस्य निगडेन च बन्धनम्॥२८।२॥

मांसस्य भोजनं चैव पर्वतस्य विवर्तनम्।
नाभिमध्ये तरूत्पत्तिर्मृतं प्रत्यनुरोदनम्॥२९॥

अगम्यागमनं कूपं पङ्कगर्भावतीर्णता।
पर्वतस्य तथा नद्याः स्रोतसां लङ्घनं तथा॥३०॥

स्वपुत्रमरणं चैव पानं रुधिरमद्ययोः।
भोजनं पायसस्यापि मनुष्यारोहणं तथा॥३१॥

कल्याणसुखसौभाग्यराज्यशत्रुक्षयं तथा।
एते स्वप्नाः प्रकुर्वन्ति नृपस्य नृपसत्तम॥३२॥

खरोष्ट्रमहिषाणां च आरोहो राज्यनाशनः।
नृत्यं गीतं तथा हास्यं पाठश्चाप्यशुभप्रदः॥३३॥

रक्तवस्त्रपरिधानं रक्तमालानुलेपनम्।
रक्तां कृष्णां स्त्रियं चैव कामयन् मृत्युमाप्नुयात्॥३४॥

---

१. उद्धृतञ्चैतदद्भुतसागरे स्वप्नप्रकरणे विष्णुपुराणनाम्ना।

कूपान्तरे प्रवेशः स्याद् दक्षिणाशागतिस्तथा ।
पङ्के निमज्जनं स्नानं भार्यापुत्रविनाशनम् ॥३५॥

लाभस्तस्य भवेत् स्वप्नेऽप्यरुत्पत्तिर्नृपस्य च ।
आदाय गर्भनार्डी तु सकुलो याति खञ्जनम् ॥३६॥

सतु राज्यान्तरं प्राप्य महाकल्याणमाप्नुयात् ॥३७॥१॥

कालावल्याम्—

गृध्रश्च काकगोमायुरक्षःप्रेतपिशाचकैः ।
भक्ष्यते प्रोक्ष्यते वापि खरजात्युष्ट्रसैरिभैः ॥

आत्मा यदीदृशः स्वप्ने दृश्यते भावविह्वलः ।
तत्राब्दैके गते नूनं गम्यतेऽन्तकवश्यता ॥

रक्तगन्धप्रलिप्ताङ्गो रक्तमाल्योपशोभितः ।
तैलाभ्यक्तोऽतिभीतश्च मुण्डितो रक्तवस्त्रधृक् ॥

खरमारुह्य वेगेन दक्षिणां दिशमाव्रजेत् ।
यस्यात्मा दृश्यते स्वप्ने तन्नाशो वत्सरार्धतः ॥

लोहदण्डयुतं कृष्णं नरं कृष्णपरिच्छदम् ।
स्वप्ने च पार्श्वतो दृष्ट्वा त्रिमासान् मृत्युराप्यते ॥

मन्त्रमहोदधौ २५ तरङ्गे—

तैलाभ्यक्तः कृष्णवर्णो नग्नो नागर्तवायसौ ;
शुष्ककण्टकिवृक्षश्च चाण्डालो दीर्घकन्धरः ॥९४॥

प्रासादस्तलहीनश्च नैते स्वप्ने शुभावहाः ।
शान्तिं कुर्वीत दुःस्वप्ने जपेन्मन्त्रमनन्यधीः ॥९५॥

अब्दत्रिकं जपं तस्य कुर्वतो विघ्नसंभवः ।
विघ्नसङ्घमनादृत्य तदा जपपरो भवेत् ॥९६॥

देवलः—

छर्दिमूत्रपुरीषेषु सुवर्णरजतप्रभम् ।
प्रत्यक्षमथवा स्वप्ने नवमासान् स जीवति ॥

कृष्णैश्च विकटैश्चैव पुरुषैरुद्यतायुधैः ।
पाषाणैस्ताडयते स्वप्ने षण्मासान् न स जीवति ।

रक्तगन्धाम्बरः स्रग्वी गच्छेद् वा दक्षिणामुखः ।
खरोष्ट्रमपि वा रोहेत् त्रीन् मासान् नाभिजीवति

तथा—

दृष्ट्वाऽऽत्मानं मृतं स्वप्ने द्वादशाहं स जीवति ।
क्षुद्रवानरयुक्तेन रथेनाशां तु दक्षिणाम् ।
गायन्नथ व्रजेत् स्वप्ने विन्द्यान्मृत्युमुपस्थितम् ॥

कृष्णाम्बरधरा श्यामा गायन्ती वाप्यथाङ्गना ।
यन्नयेद्दक्षिणामाशां स्वप्ने सोऽपि न जीवति ॥

वराहः—

नाभेरन्यत्र गात्रे तृणतरुकुसुमप्रोद्भवः स्नेहपानं
क्रीडायां नोपभोगाः खरकपिकरभव्यालरौद्रैश्च सत्त्वैः ।
कायस्यालेपनं वा कलुषजलमसीगोमयस्नेहपङ्कैः,
दृगजिह्वादन्तबाहुप्रपतनमथवाऽनर्थशोकप्रदानि ॥

गीतक्रीडितभूषितप्रहसितप्रेङ्खेलितास्फोटिता-
न्यर्केन्दुध्वजतारकानिपतनं स्रोतोवहाधोगमः ।
रज्जुच्छेदचिताप्रपातजननीगात्रप्रवेशस्तथा
स्वप्ने कांस्यविवर्णनं च शिरसि क्लेशामयानर्थदम् ॥

स्थलपशुमृगकीटानूपचर्माण्डजानां
प्लवनमुदकनाशो स्याद् विवाहोत्सवो वा ।
सरसिजजतुभाण्डक्रीडनं नर्तनं वा
मलिनविवसनत्वं वाऽशु शोकप्रदानि ॥

पुंद्रव्यनाशेषु हृताद् वियोगश्छेदश्च पाणेः कमलापहारे
प्रासादशृंगादिशिरोवताराः स्वप्नेषु नेष्टा इति संप्रदिष्टाः।
सर्पे कर्णं नासिकां च प्रविष्टे तच्छेदः स्याद वेष्टने चाशु बन्धः॥

लास्ये प्राप्नोति वधं सूदिते हास्ये प्रगीतके रोगः
पवनं कलहप्रायं प्रतिलोमफलः किल स्वप्नः
चित्रं कर्मविचित्रं यः पश्यति नैव वर्तितं स्वप्ने
शोकः समाश्रयेत् पतितं वासार्थमिवाण्डजे वृक्षम ।

स्वप्ने पिबतः पुंसो विरेचनं स्नेहमौषधं वापि।
रोगो ग्लापयति देहं हिमकिरणापात इव पद्मम् ॥

मञ्जर्योदधियात्राशयवलवालोषिता रजतयष्टिः।
वध्री सकोषवीणा कार्यालाभाय लभ्यन्ते॥

व्यावालीतविक्रीडितविलसित संगीतनृत्यहसितानि।
स्वप्ने प्रतिबुद्धानामायासकराण्यभिहितानि॥

श्मश्रुकेशनखदैर्घ्यकर्तनं वानरीविकृतनार्युपासनम्।
रक्तवस्त्रसरुजाङ्गनार्दनं रोगमृत्युभयशोकतापदम्॥

हरिणारोहे भ्रमणं मृत्युर्न चिरेण शूकरारोहे।
उष्ट्रारोहे व्याधिर्वृद्धिः स्यात् कुञ्जरारोहे॥

पराशरः—

श्ववानरोष्ट्रखरनकुलमार्जारमहिषद्वीपिश्येनभासाद्यप्रशस्तान्यदंष्ट्रिनखिक्रव्यादानामधिरोरणं नग्नं वाऽधिरुह्य याम्याशाभिगमनं मज्जनं वा क्वचिद् भस्मरक्तचन्दनतैलमसीप्रलिप्तगात्राशोकपुण्डरीकभृतो बिसानि भक्षयतः पांशुसिकतागोमयेषु महति कलुषह्रदे वा निमज्जनं तथा कुसुमितकिंशुककोविदारकरबीरचैत्ययष्टिरुपाधिरोहणं करवीरकमलदलमालाबन्धो वा भृष्टयवमसिभस्मतैलवशापानं गात्रानुलेपनं वा मरणाय।

सुवर्ण-रजत-मूत्र-पुरीषाणां वा स्वप्ने छर्दनं दशमे मासि मरणाय। यक्षरक्षःप्रेतपिशाचानां स्वप्ने दर्शनमतीन्द्रियाणां नवमे मासि (मरणाय इति सम्बन्धो ज्ञेयोऽत्रेत्यर्थः)।

पराशरः—श्वानरोष्ट्रखरनकुलमार्जारमहिषवराहद्वीपिभासाद्यप्रशस्तान्यद्रंष्ट्रिनखिक्रव्याददर्शनमभिद्रवणं वातक्लेशाय। यानं व्याधये। वधो वधाय। निपातः पराजयाय। केशलोमनखदर्शनपातनं मणिरत्नाभरणपतनं छेदनाय। हरणं व्याधिक्लेशबन्धुनाशाय। श्मश्रुकर्मोन्मर्दनं मक्षन्मूत्रकरणं नग्नताऽत्मनो घृततैलवसनाभ्यङ्गवसनादिविकृतपुरुषस्त्रीभिरमानुषैरसकृदभिद्रवणं पक्वमत्स्यभक्षणं; व्याधिक्लेशभयाय। विरेचनमन्नक्षयाय। घृतोदपूर्णकुम्भकमण्डलूास्थानच्छत्रसूत्रबद्धरज्जुदर्शनं लाभो वाऽध्वगमनाय। मत्तप्रव्रजितनग्नशौण्डिकप्रशुष्कनदीह्रदतीर्थाभिदर्शनं शुकमयूरगोधामूषिकाजाविकनटनर्तकाश्ववारणगीतवादनं स्वयं वा गीतिनृत्यवादनं कांस्यभाण्डावभेदः सेतुतरुच्छेदः प्रवेशस्तमसि शून्यभिन्नागारेषु च शुष्कवृक्षदर्शनारोहणमवनेर्विवलनमशनिमेघनभोनीहारदर्शनं कृमिकीटपतङ्गदंशमशकमक्षिकाभिदर्शनमभिलपनञ्च।

अञ्जनत्रपुताम्रशीसलोहाभावो रथशिखरयानच्छत्रावपतनं मञ्जनं वा कलुषजले पङ्कवल्मीकपांशुसिकताधिरोहणमवसनं वा कलिक्लेशायानर्थाय वा। स्वभवनहर्म्यप्रासादानपतनमभिनिष्क्रमणं वा स्वगृहादुत्थितरुदितानामङ्गनानामङ्गलीभिः संमार्जन्या वा मार्जनं सर्वस्वनाशाय। चन्द्रार्कनिपतनमभिप्लवो वा चक्षुर्व्याघाताय पार्थिवोपद्रवाय वा। नगरपुरशिखरतोरणेन्द्रध्वजसुरपतिभवननिपतनं नृपतिविघाताय स्वपतिक्लेशाय वा।

श्रीपाञ्चरात्रे परमसंहितायां ११ अध्याये दीक्षाविधाने--

कृष्णवर्णा गता नारी भिन्देद् यस्य यदा शिरः।
मूर्छायां सुप्तिकाले वा चातुर्मास्यं स जीवति ॥५७॥

संप्रेतान् वा विधा पश्येन्निधनानि महान्ति च।
स्वप्ने सलिलमग्नस्य दुःखं वा दारुणं भवेत् ॥५४॥

गन्धर्वतन्त्रे २६ पटले—

चाण्डालं गर्दभं काकं गर्तं शून्यममङ्गलम् ॥८३॥१॥

तैलाभ्यक्तं नरं नग्नं शुष्कवृक्षं सकण्टकम्।
प्रासादमतलं दृष्ट्वा नरो रोगमवाप्नुयात् ॥८०॥

स्वच्छन्दतन्त्रे ४ पटले—

शुभाः स्वप्ना मयाख्याता अशुभांश्च निबोध मे ॥१८॥२॥

तैलाभ्यङ्गस्तथा पानं विशनं च रसातले ।
अन्धकूपे च पतनमथ पङ्के निमज्जनम् ॥१९॥

वृक्षवाहनयानेभ्यः पतनं हर्म्यपर्वतात् ।
कर्तनं कर्णनासाभ्यामथ वा हस्तपादयोः ॥२०॥

पतनं दन्तकेशानामृक्षवानरदर्शनम् ।
वेतालक्रूरसत्वानां तथैव कालपूरुषाः ॥२१॥

कृष्णोर्ध्वकेशा मलिनाः कृष्णमाल्याम्बरच्छयाः ।
रक्ताक्षी स्त्री च यं स्वप्ने पुरुषं त्ववगूहयेत् ॥२२॥

म्रियते नात्र संदेहो यदि शान्तिं न कारयेत् ।
गृहप्रासादभेदं च शय्यावस्त्रासनेषु च ॥२३॥

आत्मनोऽभिभवं संख्य आत्मद्रव्यापहारणम् ।
खरोष्ट्रश्वसृगालेषु कङ्कगृध्रबकेषु च ॥२४॥

महिषोलूककाकेषु रोहणं च प्रवर्तनम् ।
भक्षणं पक्वमांसस्य रक्तमाल्यानुलेपनम् ॥२५॥

कृष्णरक्तानि वस्त्राणि विकृतात्मा प्रपश्यति ।
हसनं वल्गनं स्वप्ने म्लानस्त्रग्दामधारणम् ॥२६॥

स्वमांसोत्कर्तनं बन्धं कृष्णसर्पेण भक्षणम् ।
उद्वाहं च तथा स्वप्ने दृष्ट्वा नैव प्रसिध्यति ॥२७॥

अशुभा ह्येव मयाख्याता विज्ञेया दैशिकोत्तमैः ॥२८॥१॥

परशुरामकल्पसूत्रे सप्तमखण्डे वाराहीक्रमेः—
अथ पुरश्चरणे अनुष्ठीयमाने अशुभस्वप्नास्तत्रैवः—

अथाशुभांस्तु स्वप्नान् वै प्रवक्ष्यामि शृणु प्रिये ।
काककङ्कोलूकगृध्रान् खरमार्जारमाहिषान् ॥

चाण्डालं कृष्णपुरुषं स्त्रियं वा विकटां तथा ।
शून्यगर्तं शुष्कवृक्षं नदीपुष्करवापिकाः ॥

तैलाभ्यङ्गं कण्टकयुग्वृक्षं प्रासादभञ्जनम् ।
उन्मत्ततां नग्नतां च भीततां स्वात्मनस्तथा ॥

सङ्कटेन समायोगं पश्यन् शान्ति समाचरेत् ॥इति॥

पाञ्चरात्रे परमसंहितायां ६ अध्याये---

स्वप्ने तु नग्नमात्मानं वस्त्रहीनं विचेष्टितम् ।
भग्नयानाधिरूढं च भग्नच्छत्रध्वजायुधम् ॥२४॥

चाण्डालरजकश्चित्री द्रुतकम्लेच्छचारणान् ।
पश्येत्पाषण्डिनो यश्च न शुभं तस्य जायते ॥२५॥

खरोष्ट्रमहिषव्याघ्रवल्मीकारोहणं तथा ।
तैलाभ्यक्तस्तथारुह्य दक्षिणागमनं तथा ॥२६॥

रूपकाञ्चनलाभं च पानं च मधुतैलयोः ।
नर्तनं पङ्कदिग्धस्य विवाहकरणं तथा ॥२७॥

स्रोतसा हरणं शीघ्रं पक्वमांसस्य भक्षणम् ।
दन्तानां पतनं चैव शिरोमुण्डनमेव च ॥२८॥

सलिलोन्मज्जनं दुःखं शुष्कवृक्षाधिरोहणम् ।
स्वप्नातपमसङ्कल्यान् दृष्ट्वान्यानपि तादृशान् ॥२९॥

न नरः शुभमाप्नोति नात्र कार्या विचारणा ।
यस्तु मध्ये तदा तस्य भक्षयेत् घृतपायसम् ॥३०॥

पर्वतस्थश्च यो भूत्वा वृक्षं समधिरोहति ।
प्रासादावस्थितो यश्च समुद्रं तरति स्वयम् ॥३१॥

स तु राज्यमवाप्नोति भक्षयन् भूमिमेव च ।
देवब्राह्मणगावश्च लिङ्गिनः पितरो नृपाः ॥३२॥

यद्वदन्ति नरं स्वप्ने तथैव च भविष्यति ।
दीक्षायां स्थापने चापि पुरुषेषु महत्सु च ॥३३॥
विकारेषु च यत्नेन स्वप्नं समुपलक्षयेत् ।३४।

चरके इन्द्रियस्थाने ५ अध्याये—

श्वभिरुष्ट्रैः खरैर्वापि याति यो दक्षिणां दिशम् ।
स्वप्ने यक्ष्मा तमाविश्य न जीवन्तमवसृज्यते ॥७॥

प्रेतैः सह पिबेन्मद्यं स्वप्ने यः कृष्यते शुना ।
स घोरं ज्वरमासाद्य न जीवन्न च सृज्यते ॥८॥

लाक्षारक्ताम्बराभं यः पश्यत्यम्बरमन्तिकात् ।
स रक्तपित्तमासाद्य तेनैवान्ताय नीयते ॥९॥

रक्तस्रग्रक्तसर्वाङ्गो रक्तवासा मुहुर्हसन् ।
यः स्वप्ने ह्रियते नार्या स रक्तं प्राप्य सीदति ॥१०॥

शूलाटोपान्त्रकूजाश्च दौर्बल्यं चातिमात्रया ।
नखादिषु च वैवर्ण्यं गुल्मेनान्तकरो ग्रहः ॥११॥

लताकण्टकिनी यस्य दारुणा हृदि जायते ।
स्वप्ने गुल्मस्तमन्ताय क्रूरो विशति मानवम् ॥१२॥

कायेऽल्पमपि संसृष्टं सुभृशं यस्य दीर्यते ।
क्षतानि च न रोहन्ति कुष्ठैर्मृत्युर्हिनस्ति तम् ॥१३॥

नग्नस्याज्यावसिक्तस्य जुह्वतोऽग्निमनर्चिषम् ।
पद्मान्युरसि जायन्ते स्वप्ने कुष्ठैर्मरिष्यतः ॥१४॥

स्नानानुलिप्तगात्रोऽपि यस्मिन् गृध्यन्ति मक्षिकाः ।
स प्रमेहेण संस्पर्शं प्राप्य तेनैव हन्यते ॥१५॥

स्नेहं बहुविधं स्वप्ने चाण्डालैः सह यः पिबन् ।
बध्यते स प्रमेहेण स्पृश्यतेऽन्ताय मानवः ॥१६॥

ध्यानायासौ तथोद्वेगौ मोहश्च स्थानसम्भवः ।
अरतिर्बलहानिश्च मृत्युरुन्मादपूर्वकः ॥१७॥

आहारद्वेषिणं पश्यन् लुप्तचित्त······ ।
विद्याद् धीरो मुमूर्षुं तमुन्मादेनातिपातिना ॥१८॥

क्रोधनं त्रासबहुलं सकृत् प्रहसिताननम् ।
मूर्च्छापिपासाबहुलं हन्त्युमादः शरीरिणाम् ॥१९॥

नृत्यन् रक्षोगणैः सार्कं यः स्वप्नेऽम्भसि सीदति ।
स प्राप्य भृशमुन्मादं याति लोकमतः परम् ॥२०॥

असत्तमः पश्यति यः शृणोत्यप्यसतः स्वरान् ।
बहून् बहुविधान् जाग्रत् सोऽपस्मारेण वध्यते ॥२१॥

मत्तं नृत्यन्तमाविध्य प्रेतो हरति यं नरम् ।
स्वप्ने हरति तं मृत्युरपस्मारपुरःसरः ॥२२॥

स्तम्भ्येते प्रतिबद्धस्य हनूमन्ये तथाक्षिणी ।
यस्य तं बहिरायामो गृहीत्वा हन्त्यसंशयम् ॥२३॥

शष्कुलीरप्यपूपान् वै स्वप्ने खादति यो नरः ।
स चेत्तादृक् छर्दयति प्रतिबुद्धो न जीवति ॥२४॥

एतानि पूर्वरूपाणि यः सम्यगवबुध्यते ।
स एषामनुबन्धं च फलञ्च ज्ञातुमर्हति ॥२५॥

य इमांश्चापरान् स्वप्नान् दारुणानुपलक्षयेत् ।
व्याधितानां विनाशाय क्लेशाय महतेऽपि वा ॥२६॥

यस्योत्तमाङ्गे जायन्ते वंशगुल्मलतादयः ।
वयांसि च विलीयन्ते स्वप्ने मौण्ड्यमियाच्च यः ॥२७॥

गृध्रोलूकश्वकाकाद्यैः स्वप्ने यः परिवार्यते ।
रक्षःप्रेतपिशाचस्त्रीचाण्डालद्रविणान्धकैः ॥२८॥

वंशवेत्रलतापाशतृणकण्टकसङ्कटे ।
संसज्जति हि यः स्वप्ने यो गच्छन् प्रपतत्यपि ॥२९॥

भूमौ पांशूपधानायां वल्मीके वाथ भस्मनि ।
श्मशानायतनश्वभ्रे स्वप्ने यः प्रविशत्यपि ॥३०॥

कलुषेऽम्भसि पङ्के वा कूपे वा तमसावृते।
स्वप्ने मज्जति शीघ्रेण स्रोतसा ह्रियते च यः ॥३१॥

स्नेहपानं तथाभ्यङ्गः प्रच्छर्दनविरेचने।
हिरण्यलाभः कलहः स्वप्ने बन्धपराजयौ ॥३२॥

उपानद्युगनाशश्च प्रपातः पांशुचर्मणोः।
हर्षः स्वप्ने प्रकुपितैः पितृभिश्चावभर्त्सनम् ॥३३॥

दन्तचन्द्रार्कनक्षत्रदेवतादीपचक्षुषाम् ।
पतनं वा विनाशो वा स्वप्ने भेदो नगस्य वा ॥३४॥

रक्तपुष्पं वनं भूमिं पापकर्मालयाञ्चिताम्।
गुहान्धकारसंबाधं स्वप्ने यः प्रविशत्यपि ॥३५॥

रक्तमाली हसन्नुच्चैर्दिग्वासा दक्षिणां दिशम्।
दारुणामटवीं स्वप्ने कपियुक्तेन याति वा ॥३६॥

काषायिणामसौम्यानां नग्नानां दण्डधारिणाम्।
कृष्णानां रक्तनेत्राणां स्वप्ने नेच्छन्ति दर्शनम् ॥३७॥

कृष्णा पापा निराचारा दीर्घकेशनखस्तनी।
विरागमाल्यवसना स्वप्ने कालनिशा मता ॥३८॥

इत्येते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम्।
अरोगः संशयं गत्वा कश्चिदेव प्रमुच्यते ॥३९॥

चरके निदानस्थाने २ अध्याये—

"लोहितपित्तनिदाने—शोषनिदाने च लोहितनीलपीतश्यावानामर्चिष्मतां च रूपाणां स्वप्ने दर्शनमभीक्ष्णम्, इति लोहितपूर्वरूपाणि भवन्ति।" ( २ अ० ६ वा० )

'स्वप्ने चाभीक्ष्णं दर्शनमनुदकानामुदकस्थानानां शून्यानां च ग्रामनगरनिगमजनपदानां शुष्कदग्धभग्नानां च वनानां कृकलासमयूरवानरशुकसर्पकाकोलूकादिभिः संस्पर्शनमधिरोहणं च यानं वा श्वोष्ट्रखरवराहैर्यानं च केशास्थिभस्मतुषाङ्गारराशीनां चाधिरोहणमिति शोषपूर्वरूपाणि भवन्ति।" ६ अ० १७ वा० )

## उन्मादापस्मारयोर्निदाने—

"स्वप्ने च दर्शनमभीक्ष्णं भ्रान्तचलितानवस्थितानां च रूपाणामप्रशस्तानां च तिलपीडकचक्राधिरोहणं वातकुण्डलिकाभिश्चोन्मथनं निमज्जनं कलुषाणामम्भसामावर्तेषु चक्षुषोश्चापसर्पणमिति दोषनिमित्तानामुन्मादानां पूर्वरूपाणि भवन्ति ।"

( ७ अ० ५ वा० )

"स्वप्ने च मदनर्तनवेपथुव्यथनव्यधनपतनादीन्यपस्मारपूर्वरूपाणि भवन्ति ।"

( ८ अ० ७ वा० )

सुश्रुते सूत्रस्थाने २९ अध्याये—

स्वप्नानतः प्रवक्ष्यामि मरणाय च शुभाय च ।५४॥

सुहृदो यांश्च पश्यन्ति व्याधितो वा स्वयं तथा ।
स्नेहाभ्यक्तशरीरस्तु करभव्यालगर्दभैः ॥५५॥

वराहैर्महिषैर्वापि यो यायाद् दक्षिणामुखः ।
रक्ताम्बरधरा कृष्णा हसन्ती मुक्तमूर्धजा ॥५६॥

यं वा कर्षति बद्ध्वा स्त्री नृत्यन्ती दक्षिणामुखम् ।
अन्त्यावसायिभिर्यश्चाकृष्यते दक्षिणामुखः ॥५७॥

परिष्वजेरन् यं वापि प्रेताः प्रव्रजितास्तथा ।
मूर्धन्याघ्रायते यस्तु श्वापदैर्विकृताननैः ॥५८॥

पिबेन्मधु च तैलं च यो वा पङ्केऽवसीदति ।
पङ्कप्रदिग्धगात्रो वा प्रनृत्येत् प्रहसेत्तथा ॥५९।

निरम्बरश्च यो रक्तां धारयेच्छिरसि स्रजम् ।
यस्य वंशो नलो वापि तालो वोरसि जायते ॥६०॥

यं वा मत्स्यो ग्रसेद् यो वा जननीं प्रविशेन्नरः ।
पर्वताग्रात् पतेद् यो वा श्वभ्रे च तमसावृते ॥६१॥

ह्रियते स्रोतसा यो वा यो वा मौण्ड्यमवाप्नुयात् ।
पराजीयेत वध्येत काकाद्यैर्वाऽभिभूयते ॥६२॥

पतनं तारकादीनां प्रणाशं दीपचक्षुषोः ।
यः पश्येद् देवतानां च प्रकम्पमवनेस्तथा ॥६३॥

यस्य छर्दि विरेको वा दशनाः प्रपतन्ति वा ।
शाल्मलीं किंशुकं यूपं वल्मीकं पारिभद्रकम् ॥६४॥

पुष्पाढ्यं कोविदारं वा चितां वा योऽधिरोहति ।
कार्पासतैलपिण्याकलोहानि लवणं तिलान् ॥६५॥

लभेताश्नीत वा पक्वमन्नं यश्च पिबेत् सुराम् ।
स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति ॥६६॥

ज्वरितानां शुना सख्यं कपिसख्यं तु शोषिणाम् ।
उन्मादे राक्षसैः प्रेतैरपस्मारे प्रवर्त्तनम् ॥६८॥

मेहातिसारिणां तोयपानं स्नेहस्य कुष्ठिनाम् ।
गुल्मेषु स्थावरोत्पत्तिः कोष्ठे मूर्ध्नि शिरोरुजि ॥६९॥

शष्कुलीभक्षणं छर्द्यामध्वा श्वासपिपासयोः ।
हारिद्रं भोजनं वापि यस्य स्यात् पाण्डुरोगिणः ॥७०॥

रक्तपित्ती पिबेद् यश्च शोणितं स विनश्यति ॥७१॥१॥

वाग्भटे (अष्टाङ्गहृदये) शारीरस्थाने षष्ठाध्याये--

स्वप्ने मद्यं सह प्रेतैं यः पिबन् कृष्यते शुना ।
स मर्त्यो मृत्युना शीघ्रं ज्वररूपेण नीयते ॥४०॥

रक्तमाल्यवपुर्वस्त्रो यो हसन् ह्रियते स्त्रिया ।
सोऽस्रपित्तेन, महिषश्ववराहोष्ट्रगर्दभैः ॥४१॥

यः प्रयाति दिशं याम्यां मरणं तस्य यक्ष्मणा ।
लता कण्टकिनी वंशस्तालो वा हृदि जायते ॥४२॥

यस्य तस्याशु गुल्मेन, यस्य वह्निमनर्चिषम् ।
जुह्वतो घृतसिक्तस्य नग्नस्योरसि जायते ॥४३॥

पद्मं स नश्येत् कुष्ठेन चण्डालैः सह यः पिबेत् ।
स्नेहं बहुविधं स्वप्ने स प्रमेहेण नश्यति ॥४४॥

उन्मादेन जले मज्जेद् यो नृत्यन् राक्षसैः सह ।
अपस्मारेण यो मर्त्यो नृत्यन् प्रेतेन नीयते ॥४५॥

यानं खरोष्ट्रमार्जारकपिशार्दूलसूकरैः ।
यस्य प्रेतैः शृगालैर्वा स मृत्योर्वर्तते मुखे ॥४६॥

अपूपशष्कुली जग्ध्वा विबुद्धस्तद्विधं वमन् ।
न जीवति, अक्षिरोगाय सूर्येन्दुग्रहणेक्षणम् ॥४७॥

सूर्याचन्द्रमसोः पातदर्शनं दृग्विनाशनम् ।
मूर्ध्नि वंशलतादीनां संभवो वयसां तथा ॥४८॥

निलयो मुण्डता काकगृध्राद्यैः परिवारणम् ।
तथा प्रेतपिशाचस्त्रीद्रविणान्ध्रगवाशनैः ॥४९॥

संगो वेत्रलतावंशतृणकण्टकसंकटे ।
अभ्रश्मशानशयनं पतनं पांशुभस्मनोः ॥५०॥

मज्जनं जलपङ्कादौ शीघ्रेण स्रोतसा हृतिः ।
नृत्यवादित्रगीतानि रक्तस्रग्वस्त्रधारणम् ॥५१॥

वयोऽङ्गवृद्धिरभ्यङ्गो विवाहः श्मश्रुकर्म च ।
पक्वान्नस्नेहमद्याशः प्रच्छर्दनविरेचने ॥५२॥

हिरण्यलोहयोर्लाभः कलिर्बन्धपराजयौ ।
उपानद्युगनाशश्च प्रपातः पादचर्मणोः ॥५३॥

हर्षो भृशं प्रकुपितैः पितृभिश्चावभर्त्सनम् ।
प्रदीपगृहनक्षत्रदन्तदैवतचक्षुषाम् ॥५४॥

पतनं वा विनाशो वा भेदनं पर्वतस्य च ।
कानने रक्तकुसुमे पापकर्म निवेशने ॥५५॥

चिताऽन्धकारसंबाधे जनन्यां च प्रवेशनम् ।
पातः प्रासादशैलादेर्मत्स्येन ग्रसनं तथा ॥५६॥

काषायिणामसौम्यानां नग्नानां दण्डधारिणाम् ।
रक्ताक्षाणां च कृष्णानां दर्शनं जातु नेष्यते ॥५७॥

कृष्णा पापाननाचारा दीर्घकेशनखस्तनी ।
विरागमाल्यवसना स्वप्नकालनिशा मता ॥५८॥

शार्ङ्गधरसंहितायाम् ३ अध्याये—

स्वप्नेषु यः सुरान् भूपान् जीवतः सुहृदो द्विजान् ।
गोसमिद्धाग्नितीर्थानि पश्येत् सुखमवाप्नुयात् ॥१७॥

तीर्त्वा कलुषनीराणि जित्वा शत्रुगणानपि ।
आरुह्य सौध गोशैल करिवाहान् सुखी भवेत् ॥१८॥

शुभ्रपुष्पाणि वासांसि मांसमत्स्यफलानि च ।
प्राप्यातुरः सुखी भूयात् स्वस्थो धनमवाप्नुयात् ॥१९॥

अगम्यागमनं लेपो विष्ठया रुदितं मृतिः ।
आममांसाशनं स्वप्ने धनारोग्याप्तये विदुः ॥२०॥

जलौका भ्रमरी सर्पो मक्षिका वापि यं दशेत् ।
रोगी स भूयादारोग्यः स्वस्थो धनमवाप्नुयात् ॥२१॥

बृहज्ज्योतिः सारे—

अमून् पश्यति यः स्वप्ने शृंगिणो दंष्ट्रिणोऽपि वा ।
वानरो वा वराहो वा भवेद् राजकुलाद् भयम् ॥१०॥

करालो विकटो मुण्डी पुरुषः कृष्णपिङ्गलः ।
स्वप्नान्ते संमुखं दृष्ट्वा तं च कालं विनिर्दिशेत् ॥११॥

नगरग्रामदहनं देशदाहस्तथैव च ।
चत्वारि तस्य नश्यन्ति आयुः प्रज्ञा यशो बलम् ॥१२॥

क्षुधा पिपासा निद्रा च आलस्यं निष्ठुरं तथा ।
यदि पश्यति स्वप्नान्ते दुर्भिक्षं दारुणं भवेत् ॥१३॥

यस्तु पश्यति स्वप्नान्ते विवाहं मुण्डनं तथा ।
प्रियमृत्युर्ध्रुवं तस्य द्रव्यपुत्रविनाशनम् ॥१४॥

कुक्कुरं सचमार्जारौ गोधानकुलौ तथा ।
यदि पश्यति स्वप्नान्ते विघ्नं तस्य भविष्यति ॥१५॥

गर्जिवृष्टि समुत्पन्नामग्निदाहं च विग्रहम् ।
यदि पश्यति स्वप्नान्ते भवेद् राजकुलाद् भयम् ॥१६॥

मुहूर्तगणपतौ

तैलाभ्यक्तोऽथ दिग्वासा आरूढो माहिषं खरम् ।
उष्ट्रं कृष्णं वृषं वाश्वं याम्यां गच्छन्न जीवति ॥६१॥

पाकस्थाने वने रक्तपुष्पाढ्ये सूतिकागृहे ।
विकलाङ्गो विशेत् स्वप्ने सोऽसुभिर्विप्रयुज्यते ॥६२॥

जतुकौंकुमसिह्लादिधातवो यस्य मन्दिरे ।
पतन्ति तरुतस्तस्य गेहदाराश्च चौरभीः ॥६३॥

नाभेरन्यत्र गात्रेषु तृणपुष्पद्रुमोद्‌गमः ।
खरोष्ट्रकपिसर्पाद्यैर्यानं स्नेहस्य भक्षणम् ॥ ६४॥

कलुषेणाम्बुना मज्जाकर्दमैर्गोमयेन च ।
स्नेहेन वपुषो लेपः कर्दमे विनिमज्जनम् ॥६५॥

पातो दृग्दन्तहस्तस्य जिह्वायाश्च त्रय तथा ।
एते शोकप्रदाः स्वप्ना दृष्टा हानिकरा अपि ॥६७॥

स्वप्ने सन्दोलनं गीतं क्रीडितं स्फोटितं तथा ।
हसितं भर्त्सितं श्रोतोवहानीरे ह्यधोगतम् ॥६८॥

सूर्येन्दुध्वजताराणां पातः स्वस्य चितावपि ।
रज्ज्वाच्छेदः शिरोभागे कांस्यवर्णस्य धारणम् ॥६९॥

प्रवेशो जननीगर्भे दुष्टमेतच्च रिष्टदम् ।
करवीरमशोकञ्च लतापाशेन बन्धनम् ॥७०॥

कृष्णाम्बरधरायोषालिङ्गनं मृत्युकारकम् ।
आरुह्य पुष्पितान् वृक्षान् यो विचिन्त्य निजं वपुः ॥७१॥

यस्तु धूमो यमात्मानं व्याप्तं धूमेन चेक्षते ।
भस्माज्यलोहलाक्षं च स च लक्ष्म्या वियुज्यते ॥७२॥

क्रोष्टुकुक्कुटमार्जारगोधावभ्रुभुजङ्गमाः ।
मक्षिका वृश्चिका दंशा दृष्टा स्वप्ने न शोभनाः ॥७३॥

रक्तद्रव्यायुधोषानच्छय्याभूषाश्च योषिताम् ।
वस्त्रादिप्रियवस्तूनामपहारोऽर्थनाशकः ॥७४॥

विवाहोत्सवयोः शोको भ्रंशे वा नखकेशयोः ।
कराद्यवयवानां तु छेदने स्वप्ननाशनम् ॥७५॥

वपनं श्मश्रुकेशानां नेत्ररुक् पतनं तथा ।
कूपगर्तदरीध्वान्तविवरेषु न शोभनम् ॥७६॥

कपोतश्येनगृध्राद्या ऋक्षकौशिकवायसाः ।
शृगालशशकश्वानो दृष्टाः स्वप्ने न शोभनाः ॥७७॥

शष्कुलीकृशराश्राणागुडापूपादिभक्षणम् ।
गोमयं चोष्णपानीयं स्वप्ने पीतं न शोभनम् ॥७८॥

रक्तं पुरीषमूत्रे वा स्रवन्मृत्युमवाप्नुयात् ।
रक्तकृष्णानि वासांसि कृष्णानि च बिभर्ति यः ॥७९॥

पितृकार्यं प्रकुर्वाणो म्रियते स न संशयः ।
भूतप्रेतपिशाचाद्यैः श्वपचैः सह संगतः ॥८०॥

आहूतो वाथ तैर्याम्यां स्वल्पाहैर्म्रियते तु सः ।
असूर्यं दिवसं रात्रिं विचन्द्रां गततारकाम् ॥८१॥

वृष्टिं योऽकालजां पश्येत् स्वप्ने सोऽपि विनश्यति ।
सीसपित्तलकस्तारकांस्यताम्रायसंत्रपुः ॥८२॥

शुष्कवृक्षौषधं शिल्पी दृष्टाश्चैते न शोभनाः ।
प्रासादच्छत्रभूधरशिखराणां ध्वजस्य च ॥८३॥

पतनं शक्रचापस्य नृपराष्ट्रविनाशनम् ।
तारं कोलाहलाह्वाननिन्दाक्रोशादिसंश्रवान् ॥८४॥

विन्द्याद् राजभयं दंष्ट्रिश्रृंगिकीशाद्यभिद्रवान् ॥८५॥१

वृहस्पतिप्रणीतः स्वप्नाध्यायः —

केशा यस्य विशीर्यन्ते दन्ता यस्य पतन्ति च ।
धननाशो भवेत्तस्य पीडाव्याधिशरीरतः ॥१०॥

अभिद्रवन्ति ये स्वप्ने श्रृंगिणा दंष्ट्रिणापि वा ।
वानरेण वराहेण भवेद् राजकुलाद् भयम् ॥११॥

अभ्यङ्गतस्तु तैलेन वसयापि घृतेन वा ।
स्नेहेन स्वप्ने व्याधिं तस्य शीघ्रं विनिर्दिशेत् ॥१२॥

अशोकं करवीरं च पलाशं वापि पुष्पितम् ।
यस्तु पश्यति स्वप्नान्ते तस्य शोकं विनिर्दिशेत् ॥१३॥

खरोष्ट्रमहिषैर्युक्तं रथं यो गच्छति ध्रुवम् ।
तत्रस्थश्च विबुध्येत म्रियते नात्र संशयः ॥१४॥

करालो विकटो मुण्डो पुरुषः कृष्णपिङ्गलः ।
स्वप्नान्ते सन्मुखं दृष्वा तस्य कालं विनिर्दिशेत् ॥१५॥

कृष्णाम्बरधरा नारी कृतगन्धानुलेपना ।
अवगूहति यं स्वप्ने मृत्युं तस्य विनिर्दिशेत् ॥१६॥

रक्ताम्बरधरा नारी रक्तगन्धानुलेपना ।
अवगूहति यं स्वप्ने ब्रह्महत्यां विनिर्दिशेत् ॥१७॥

पीताम्बरधरा नारी पीतगन्धानुलेपना ।
अवगूहति यं स्वप्ने व्याधिं तस्य विनिर्दिशेत् ।।१८।।

हरिताम्बधरा नारीं हरितगन्धानुलेपना ।
अवगूहति यं स्वप्ने देशत्यागं विनिर्दिशेत् ।।१९।।

क्रोष्टारं च दिवाशब्दं वानरं नृत्यसयुतम् ।
यदि पश्यति स्वप्नान्ते विघ्नं तस्य विनिर्दिशेत् ।।४१।।

सिंहशरभशार्दूलकरटांश्च भुजङ्गमम् ।
यदि पश्यति स्वप्नान्ते कुरूपं मदविह्वलम् ।।४२।।

बुद्धिनाशं मनस्तापं चिन्ताभ्रमणमानसम् ।
असुखं तस्य पश्यामि मुह्यतः क्लेशभाजनम् ।।४३।।

नगरग्रामदाहं च दिशादाहं तथैव च ।
चत्वारि तस्य नश्यन्ति आयुः प्रज्ञा यशो बलम् ।।५१।।

क्षुधा पिपासा निद्रा च आलस्यं चापि निष्ठुरम् ।
यदि पश्यति स्वप्नान्ते दुर्भिक्षं दारुणं भवेत् ।।५२।।

भग्नां लिङ्गप्रतिमां च पतितं राजमन्दिरम् ।
यदि पश्यति स्वप्नान्ते तत्क्षणां क्षतिमाचरेत् ।।५४।।

मृगा व्याघ्राः प्रविष्टाश्च संप्राप्तं गृहमुत्तमम् ।
यदि पश्यति स्वप्नान्ते क्षतिर्भवति तत्क्षणात् ।।५५।।

## अथाऽशुभस्वप्नाः

शतचण्डीयज्ञविधाने दुःस्वप्नवर्णनम्—

कृष्णाम्बरधरानारी कृष्णगन्धानुलेपना ।
अवगूहति यं स्वप्ने सा रात्रिस्तस्य पश्चिमा ।।

एवं तु रक्तया व्याधिः शोकोऽरुणसमानया ।
नीलया कलहो हत्या पीतया कृष्णया विपत् ।।

तथा—

वन्ध्याचर्मतुषास्थ्यादिलवणाङ्गारमिन्धनम् ।
विट्वलीबोन्मत्ततैलानि जटिलारिवनौषधम् ॥

रोगी तृणं च संन्यासी नग्नोऽभ्यक्तः क्षुधातुरः ।
विमुक्तकेशः पतितो व्यङ्गस्रक् शरटाक्षतम् ॥

मार्जारयुद्धं कार्पासो गर्भिणी च रजस्वला ।
गुडस्तक्रं च काषायी पङ्कं रण्डाकलिगृहे ॥

वस्त्रादिकस्यस्खलनं लुलाव समरं तथा ।
अन्धः कुब्जो दुर्वचनो वधिरः खञ्जकुब्जकौ ॥

वमनं च घटो रिक्तो रजकीमलिनाम्बरा ।
एतैर्दृष्टैर्न कार्यं स्यात् रोगी मृत्युमवाप्नुयात् ॥

अशोकं करवीरं च पलाशं वाऽपि पुष्पितम् ।
स्वप्नेऽपि सलिलं दृष्ट्वा नरः शोकमवाप्नुयात् ॥

रूपान्तरप्रवेशश्च दक्षिणाशागतिस्तथा ।
पङ्के निमज्जनं स्नानं पुत्रभार्याविनाशदम् ॥

गोहस्तिद्विजदेवादिवस्त्रकृष्णं न शोभनम् ।
कार्पासभस्मास्थ्यादीनि त्यक्त्वा भुक्तं शुभावहम् ॥

रक्तगन्धाम्बरस्रग्वी कृष्णो वा दक्षिणामुखः ।
खरोष्ट्रमहिषारुढस्त्रिमासं न स जीवति ॥

श्वभ्रे वा पतनं गेहे द्वारं चास्य पिधीयते ।
न चोत्तिष्ठति यत्तस्मात्तदब्दं तस्य जीवितम् ॥

वस्तिर्मूत्रं पुरीषं च सन्तानजननं च्युतिः ।
शुक्रस्य पश्येद्यः स्वप्ने तस्यायुर्दशमासिकम ॥

ताड्यते विकृतैः कृष्णैः पुरुषैरुद्यतायुधैः ।
पाषाणैस्ताड्यते वापि तस्य मृत्युर्न संशयः ॥

महिषोष्ट्रखरारुढस्तैलाभ्यक्तश्च मुण्डितः ।
दक्षिणाशां प्रस्थितो यस्तस्य मृत्युर्न संशयः ॥

पश्येत् प्रासादपतनं गृहस्य शशिसूर्ययोः ।
पर्वतानां च वृक्षाणामधिकारच्युतिर्भवेत् ॥

हानिश्चैव स्वगोत्राणां व्याधिनाऽभिभवस्तथा ।
गृहसंमार्जनं लेपो गोमयेन मृदापि वा ॥

तीर्त्वा नदीं समापातस्तीरेऽन्यद्वसनं धृतम् ।
रोगी रोगाद्विमुच्येत हानिः स्वस्थस्य जायते ॥

पुंनामानो मृगखगाः पातकी शूकरीरला ।
पिङ्गला छुन्छुका पल्ली वामाङ्गकोकिला शिवा ॥

स्त्रीनामानो मृगखगाः श्रीकण्ठो वानरो रुरुः ।
छिक्करः पिप्पलोभासोदक्षे काकर्क्षकुक्कुटाः ॥

दृष्टाश्चेद्रोगिणो रोगनाशः साधकसिद्धये ।
स्वस्थस्य चोद्यमाल्लाभो दिव्यतालाभशोभनम् ॥

(अथ स्वप्ननिवेदनं निबन्धे) शिष्यश्च शुचिराचान्तः पुष्पहस्तो गुरूत्तमम् ।
प्रणम्य शिरसा हृष्टस्तस्मै स्वप्नं निवेदयेत् ॥

स्वप्ने चाक्षिसमक्षं वा आश्चर्यमपि हर्षदम् ।
अकस्माद्यदि वा पश्येन्नाख्यातव्यं गुरोर्विना ॥

मेरुतन्त्रे ३ प्रकाशे २७२ श्लोकतः—

## स्वप्नदर्शनम्—स्वप्नपरीक्षाविधिः—

ततः स्वप्नपरीक्षां च कुर्यात् तद् विधिरुच्यते ।
वैदिकानां दक्षिणानां वैष्णवानां च वामिनाम् ॥२७२॥

यज्जाग्रतो दूरमुदैति दैवमावृत्य मन्त्रान् प्रयतस्त्रिदेवान् ।
हविष्यभुग् दक्षिणपार्श्वशायी स्वप्नं परीक्षेत यथोपदेशम् ॥२७३॥

भगवन् देवदेवेश शूलभृद् बृषवाहन।
इष्टानिष्टे समाचक्ष्व स्वप्ने सुप्तस्य यत्फलम् ॥२७४॥

एवं सुप्ते कुशाकीर्णे चैकभुग् यतमानसः।
निशान्ते पश्यति स्वप्नं शुभं वा यदिवाऽशुभम् ॥२७५॥

ओं [1]हृत्सकललोकाय विष्णवे प्रभविष्णवे।
विश्वेशविश्वरूपाय स्वप्नाधिपतये नमः ॥२७६॥

स्वप्नमानय मन्त्रोऽयमुपवासी जितेन्द्रियः।
दर्भशय्यागतो रात्रौ स्वप्नं पश्येद् यथा तथा ॥२७७॥

भुक्त्वा शयीत शयने सुशुद्धे वसुधातले।
अर्धरात्रे समुत्थाय पादशौचं विधाय च ॥२७८॥

आचम्य देवं सम्पूज्य तं संस्मृत्य स्व[2]पञ्चमे।
शिवदैवतयोरैक्यं भावयेत्तु जपेदिदम् ॥२७९॥

नमोऽजाय त्रिनेत्राय पिङ्गलाय महात्मने।
वामाय विश्वरूपाय स्वप्नाधिपतये नमः ॥२८०॥

स्वप्ने कथय मे नित्यं सर्वकार्यमशेषतः।
क्रियासिद्धिं विधास्यामि त्वत्प्रसादान्महेश्वर ॥२८१॥

दीक्षितो दीक्षितानां च यथास्वप्ने प्रजायते।
शृण्वन्तु देवा भोः सर्वे सावधानास्तु तद् विधिम् ॥२८२॥

पार्थिवेश्वर पूजान्तेरविवर्णं जपेन्मनुम्।
जुहुयात्तद्दशांशेन विल्वपत्रैर्घृतप्लुतैः ॥२८३॥

---

१. नमः। अर्थात्-ॐ नमः सकललोकाय विष्णवे प्रभविष्णवे विश्वेशविश्वरूपाय स्वप्नाधिपतये नमः स्वप्नमानय' इतीमं पठेत्।

२. स्वमस्तके इत्यर्थः।

तर्पणं मार्जनं कृत्वा कुर्याद् ब्राह्मणभोजनम् ।
सिद्धस्तस्य भवेन्मन्त्रः स्वप्ने वक्ति हृदि स्थितम् ॥२८४॥

तारो हलिद्वयं शूलपाणये द्विठ ईरितः ।
स्वप्नमानय मन्त्रोऽयं द्वादशाक्षर ईरितः ॥२८५॥

मेरुतन्त्रे २३ प्रकाशे ५७३ श्लोकतः ५९१ यावत्

**अपरोऽपि विधिः स्वप्नदर्शनाय उक्तः—**

अथातः संप्रवक्ष्यामि वाराहीं स्वप्नसंज्ञिताम् ।
[1]ओं ह्रीं नमश्च वाराहि घोरे स्वप्नं विसर्गयुक् ॥५७३॥

ठद्वयं वह्निजायान्तो मन्त्रः पञ्चदशाक्षरः ।
ईश्वरोऽस्य मुनिः प्रोक्तो जगतीछन्द ईरितम् ॥५७४॥

देवता स्वप्नवाराही बीजं तारः प्रकीर्तितः ।
हृल्लेखाशक्तिरुद्दिष्टा ठद्वयं कीलकं मतम् ॥५७५॥

[2]द्विपञ्चनेत्रदस्राक्षियुग्मार्णैश्चाङ्गकं मनोः ।
पादयोर्व्यञ्जने कट्योः कण्ठे गण्डद्वये तथा ॥५७६॥

नेत्रयोः कर्णयोर्नासाद्वयमन्त्रार्णकान्न्यसेत् ।
ततो ध्यायेद् घनश्यामां त्रिनेत्रामुन्नतस्तनीम् ॥५७७॥

कोलास्यां चन्द्रभालां च दंष्ट्रोद्धृतवसुन्धराम् ।
खड्गांकुशौ दक्षिणयोर्वामयोश्चर्मपाशकौ ॥

अश्वारूढां च कोलास्यां नानालङ्कारभूषिताम् ॥५७८॥

त्रिकोणे तां समाराध्य षट्कोणेष्वङ्गदेवताः ।
षोडशारे यजेच्छक्तीर्वक्ष्यमाणाश्च षोडश ॥५७९॥

---

१. ओं नमो वाराहि घोरे स्वप्नं ठः ठः स्वाहा ।

२. ओं ह्रीं हृदयाय नमः, नमो वाराहि शिरसे स्वाहा, घोरे शिखायै वषट्, स्वप्नं कवचाय हुम्, ठः ठः नेत्रत्रयाय वौषट्, स्वाहा अस्त्राय फट् । एवमग्रेऽनया रीत्या कार्यम् ।

उच्चाटनी तदीशी च शोषिणी शोषिणीश्वरी ।
मारणी मारिणीशी च भीषणी भीषणीश्वरी ।।५८०।।

त्रासिनी त्रासिनीशी च कम्पिनी कम्पिनीश्वरी ।
आशाविवर्तिनी पश्चादाशाविवर्तनीश्वरी ।।५८१।।

वस्तुजातेश्वरी पश्चात् सर्वसम्पादिनीश्वरी ।
एताः पूज्याश्चतुर्थ्यन्ताः प्रणवाद्या नमोऽन्तकाः ।।५८२।।

यजेदष्टदले पद्मे मातृभैरवसंयुताः ।
लोकपालान् दशदले द्वितये हेतिसंयुतान् ।।५८३।।

लक्षं जपेद्दशांशेन नीलपद्मैस्तिलैर्हुनेत् ।
एवं सिद्धमनुर्मन्त्री काम्यकर्माणि साधयेत् ।।५८४।।

तर्पयेन्नारिकेरोत्थैर्जलैस्तीर्थोद्भवैरपि ।
आनयेत् तरुणीं वर्षात् सर्वकामसमृद्धये ।।५८५।।

कृष्णपक्षे विश्वघस्रे भूताहे वा कृतव्रतः ।
चतुष्पथान्नदीकूलद्वयात् कुलालवेश्मनः ।।५८६।।

मृदमानीय धत्तूररसैः संयुक्तयानया ।
रचयेत् पुत्तलीं रम्यां साध्यासुस्थापनान्विताम् ।।५८७।।

ततः प्रेताम्बरे यन्त्रं नृमार्जारासृजा लिखेत् ।
पीताङ्गारयुजा योनिं षट्कोणं भूपुरान्वितम् ।।५८८।।

तदन्तर्मन्त्रमालिख्य वेष्टयेन्मनुनामुना ।
साध्यमुच्चाटययुगं शोषयद्वितयं ततः ।
सहस्रं चाष्टकं भूयः पूजयेत्तां समाहितः ।।५८९।।

एवं कृते नरा नार्यो राजानो राजवल्लभाः ।
सिंहा गजा मृगाः क्रूरा भवेयुर्वशगा ध्रुवम् ।।५९०।।

चित्ते ध्यात्वा निजं कार्यं शयीत विजने वृती ।
यथा भावि तथा देवी स्वप्ने वदति मन्त्रिणे ।।५९१।।

वाराहीयन्त्रमपि वर्तते मेरुतन्त्रे ३३ प्रकाशे ३६४ श्लोकतः ३७४ यावत्। मन्ये स्वप्नदर्शनविधौ एतद्यन्त्रमपि उपयोगित्वं भजति, अतस्तद्विधिरपि उद्ध्रियते—

अथातः स्वप्नवाराह्या यन्त्रं वक्ष्ये चमत्कृतम् ।
कृत्वा त्रिकोणं षट्कोणं षोडशारं वसुच्छदम् ॥
दशारद्वितयं पञ्चदशास्त्रभूगृहद्वयम् ॥३६४॥

त्रिकोणे कामबीजस्थं वाग्भवं सम्यगालिखेत् ।
षट्कोणे पूर्वतो वाचं च ह्लीं क्रीं श्रीं च हुं तथा ॥३६५॥

लिखेत् षोडशपत्रेषु शक्तीरुच्चाटिनीं तथा ।
उच्चाटनीश्वरीं चापि शोषिणीं शोषिणीश्वरीम् ॥३६६॥

मारणीं मारणीशीं च भीषणीं भीषणीश्वरीम् ।
त्रासिनीं त्रासिनीशीं च कम्पिनीं कम्पिनीश्वरीम् ॥३६७॥

आज्ञाविवर्तिनीं पश्चादाज्ञाविवर्तनीश्वरीम् ।
वस्तुजातेश्वरीं पश्चात् सर्वसम्पादिनीश्वरीम् ॥३६८॥

यजेदष्टदले पद्मे मातृभैरवसंयुताः ।
दशारे विन्यसेत् स्वस्य बीजपूर्वान् दिगीश्वरान् ॥३६९॥

रं लं मं क्षं ततो वं यं सं हं श्रीं ह्लीमिति क्रमात् ।
द्वितीये दशपत्रे तु वज्रादीन्यायुधानि च ॥३७०॥

तिथिपत्रे तु वाराह्या मूलमन्त्रं समालिखेत् ।
ओं ह्लीं नमश्च वाराहि घोरे स्वप्नं विसर्गयुक् ॥३७१॥

ठद्वयं वह्निजायान्तो मन्त्रः पञ्चदशाक्षरः ।
एतद्यन्त्रं पुनः सम्यङ् मातृकार्णैः प्रवेष्टयेत् ॥३७२॥

भूपुरस्य च कोणेषु चतुर्ष्वपि वरं लिखेत् ।
भूर्जादौ यन्त्रमालिख्य जपसम्पातसाधितम् ॥३७३॥

बाह्वादौ विजयं दद्यान्नृभ्यः कीर्त्ति धनं सुखम् ।
बहुना किमिहोक्तेन वाराहीष्टं प्रयच्छति ॥३७४॥

स्वप्नदर्शनविधिः दुःस्वप्नशान्तिश्च कालिकापुराणे ८६ अध्याये स्वप्न-दर्शनविधानं विस्तरेण वर्णितं तत्रैव द्रष्टव्यम्। दुःस्वप्ने च जाते तच्छान्तिश्च तत्रैवोक्ता—

दुःस्वप्नदर्शनं चेत् स्यात् तदा पुष्याभिषेचने।
होमं चतुर्गुणं कुर्याद् दत्त्वा चापि गवां शतम् ॥ ३१/२५ ॥

पुष्पस्नानं तस्मिन्नेवाध्याये प्रतिपादितं तद्विधिश्च तत एव ज्ञेयः।

स्वप्नावती विद्या, स्वप्नदर्शनविधिर्योगिनीतन्त्रे ८९-९० पृष्ठे—

**ईश्वर उवाच**

कथयामि शृणु प्राज्ञि विद्यां स्वप्नावतीं पराम्।
प्रणवं पूर्वमुद्धृत्य वधूबीजं समुद्धरेत् ॥४७।
स्वप्नावती पदान्ते च स्वप्नं कथय चोद्धरेत्।
मायाबीजं ततः स्वाहा मन्त्रमेतन्नगात्मजे।
दिवा भुक्त्वा हविष्यान्नं रात्रौ जप्त्वा सहस्रकम् ॥४८॥
ततः शुद्धायां शय्यायां तदा स्वप्ने हि पश्यति।
मनसा चिन्तितं यद्यत्तत् सर्वं परमेश्वरि ॥४९॥
अथापरं प्रवक्ष्यामि स्वप्नप्रबोधमुत्तमम्।
येन विज्ञानमात्रेण सर्वं जानाति निश्चितम् ॥५०॥
प्रणवं प्राक् समुच्चार्य हिलिङ्गं शूलपाणये।
स्वाहान्तोऽयं महामन्त्रः प्रोक्तं ते कमलेक्षणे ॥५१॥
विधानं पूर्ववत् सर्वं जपान्ते प्रार्थनां शृणु ॥५२॥
ओं नमो जगत्त्रिनेत्राय पिङ्गलाय महात्मने।
वामदेवस्वरूपाय स्वप्नाधिपतये नमः ॥
स्वप्ने कथय मे तत्त्वं सर्वं कार्यं शुभाशुभम् ॥५३॥
इति मन्त्रेण संप्रार्थ्य सर्वं जानाति तत्त्वतः।
एतत्ते कथितं देवि स्वप्नबोधमनुत्तमम् ॥५४॥

अस्य विस्तरेण विधानं सिद्धिप्रकारश्चेत्यादि तत्रैव द्रष्टव्यम्।
तत्रैव ८१ पृष्ठे स्वप्नावत्या अपरो विधिरुल्लिखितस्तथाहि—

**ईश्वर उवाच**

शृणु देवि प्रवक्ष्यामि यस्मात्त्वं परिपृच्छसि ॥४॥

ओं ह्रीं स्वपुरावाहि कालि स्वप्ने कथयामु-
कस्यामुकं देहि क्रीं स्वाहा ॥५॥

प्रणवं पूर्वमुद्धृत्य मायाबीजं तदन्तरम् ।
तदन्ते स्वपुरावाहि कालीसंबोधनद्वयम् ॥६॥

स्वप्ने कथय तत्पश्चादमुकस्यामुकं ततः ।
देहि पादात् कालिबीजमन्ते वह्निवधूस्तथा ॥७॥

इयं स्वप्नावतीविद्या त्रैलोक्ये चातिदुर्लभा ।
महाचमत्कारकरी महाकालेन भाविता ॥८॥

अष्टोत्तरशतं नित्यं जपेद् वर्षचतुष्टयम् ।
ततः सिद्धा भवेद् विद्या स्वप्ने तिष्ठति नित्यशः ॥९॥

स्वप्ने दर्शयते सर्वं यद्यन्मनसि कल्पते ॥

स्वप्नदर्शनविधिः शतचण्डीयज्ञविधानस्य टीकायां १३२ पृष्ठे —

**मन्त्रमहोदधौ—**

चिकीर्षुर्देवतोपास्तिमादौ भावि विचारयेत् ।
स्नानदानादिकं कृत्वा स्मृत्वा हरिपदाम्बुजम् ॥

शयीत कुशशय्यायां प्रार्थयेत् वृषभध्वजम् ।
मन्त्रः—भगवन् देवदेवेश शूलभृद् वृषवाहन ॥

इत्यादिभिः शिवं प्रार्थ्य निद्रां कुर्यान्निराकुलः ।
स्वप्नं दृष्टं निशि प्रातर्गुरवे विनिवेदयेत् ।
यथाविधि तमाचान्तं शिखाबन्धाभिरक्षितम् ।
विधाय सार्धममुना वेद्यां दर्भास्तरे गुरुः ॥

शयीत तस्यां तां रात्रिमधिवासः समीरितः ।

आचान्तमत्र च यथाविधि तं शिखायां बन्धैः सुरक्षितममुं प्रविधाय मंत्री।
वेद्यां शयीत कुशसंस्तरणो रजन्यां शिष्येण सार्धमनुना गदितोऽधिवासः ॥

( योगिनीतन्त्रे मेरुतंत्रे च )

यज्जाग्रतोदूरमुपैति दैवमावृत्य मंत्रान्प्रयतस्त्रिरेतान् ।
लघ्वेकभुग् दक्षिणपार्श्वशायी स्वप्नं परीक्षेत यथोपदेशम् ॥

भगवन्देवदेवेश शूलभृद्वृषवाहन ।
इष्टानिष्टं समाचक्ष्व मम सुप्तस्य शाश्वतः ॥

एवं सुप्तः कुशास्तीर्णे ततः प्रयतमानसः।
निशान्ते पश्यति स्वप्नं शुभं वा यदि वाऽशुभम् ॥

( पिङ्गलामते मेरुतंत्रे च )

तारो हिलद्वयं :शूलपाणये द्विठईरितः।
स्वप्नमानवमंत्रोऽयं शम्भुना परिकीर्तितः ॥

नमो जय त्रिनेत्राय पिङ्गलाय महात्मने।
वामाय विश्वरूपाय स्वप्नाधिपतये नमः।
स्वप्ने कथय मे तथ्यं सर्वकार्येष्वशेषतः ॥

( तंत्रमंत्रप्रकाशे )

ओं हृत्सकललोकाय विष्णवे प्रभविष्णवे।
विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः ॥

स्वप्नमानवमंत्रोऽयं कथितो नारदादिभिः।

( नारदीये )

परब्रह्मस्वरूपस्त्वमन्तश्चरसि विश्वधृक् ।
शुभाशुभगतिं देव स्वप्ने मे विनिवेदय ॥

इत्युच्चार्य नमस्कुर्याज्जानुभ्यामवनीगतः।
प्रसन्नो वाग्यतस्तस्मिन् शयीतेषु विचिन्तयेत्।

स्वप्नदर्शनविधिः शतचण्डीयज्ञविधाने प्रथमखण्डे १३५, १३६ पृष्ठे—

सायंकाले सन्ध्योपासनं कृत्वा गुरुर्मूलमंत्रेण स्वकल्पोक्तमंत्रान्तरेण वा शिष्यश्च साधकस्य वा शिखां बध्वा मण्डपाद्वहिर्देवतायाः दक्षिणभागे वेदिकान्तरोपरि कुशशय्यायां पूर्वशिरस्कः शिष्येण सार्द्धं शयनं कुर्य्यात्। शिष्यश्च शयनसमये स्वप्नमानवमंत्रेण शुभस्वप्नं प्रार्थयेत्।

स्वप्नमानवमन्त्रो यथा—

भगवन् देवदेवेश शूलभृद् वृषवाहन।

(यद्वा)

ॐ हिलि २ शूलपाणये स्वाहा।
नमोजय त्रिनेत्राय पिङ्गलाय महात्मने।
यमाय विश्वरूपाय स्वप्नाधिपतये नमः।
स्वप्ने कथय मे तथ्यं सर्वकार्येष्वशेषतः॥ इति।

(वैष्णवे तु)

ॐ नमः सकललोकाय विष्णवे प्रभविष्णवे।
विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः॥

(यद्वा

"परब्रह्मस्वरूपस्त्वमन्तश्चरसि विश्वधृक् शुभाशुभगतिं देव स्वप्ने मे विनिवेदय" इत्युच्चार्य्य जानुभ्यामवनीं स्पृष्ट्वा विष्णुं प्रणम्य प्रसन्नो वाग्यतो निजेष्टं विचिन्त्य शयनं कुर्यात्। ततः स्वप्नं दृष्ट्वा समुत्थायाचम्य पुष्पं धृत्वा गुरुं प्रणम्य गुरवे स्वप्नं निवेदयेत्। ततो गुरुः शुभमशुभं वा स्वप्नं निर्णीय स्वप्नो यदि शुभस्तदा देवतां प्रसन्नां जानीयात्। स्वप्नो यद्यशुभस्तदा शान्तिं कुर्य्यात्। दुःस्वप्नशान्तिस्तु 'फट् दुःस्वप्नदोषान् जहि २ फट् स्वाहा, इति मंत्रेण, 'ॐ नखदंष्ट्रायुधाय महासिंहाय हूं फट् नमः स्वाहा, इति मंत्रेण वा तद्देवतागायत्र्या वा पलाशसमिच्छतमाज्याहुतिशतं वा जुहुयात्।

तत्र सङ्कल्पस्तु—

ॐ अद्येत्यादि अमुकगोत्रोऽमुकशर्मा दुःस्वप्नशान्तिकामो गुरुद्वारा सक्षीरघृताक्त पलाशसमिदाहुतिशतमहं होष्यामि। इति संकल्प्य होमं कुर्यात्।

मन्त्र महोदधौ स्वप्नेश्वरीमन्त्रस्तद्विधानवर्णनम्, सप्तमतरङ्गे—

प्रणवः कमला स्वप्नेश्वरी कार्यं च मे वद।
स्वाहा त्रयोदशार्णोऽयं [1]मन्त्रो मुन्यादिपूर्ववत् ॥६०॥

अब्धिवेदा भूयुग्मनेत्रार्णैरंगकं मनोः।
विन्यस्य देवतां ध्यायेत् स्वप्नेशीमिष्टसिद्धये ॥६१॥

वराभये पद्मयुगं दधानां करैश्चतुर्भिः कनकासनस्थाम्।
सिताम्बरां शारद चन्द्रकान्ति स्वप्नेश्वरीं नौमि विभूषणाढ्याम् ॥६२॥

लक्षं जपेद् बिल्वपत्रैर्जुहुयात्तद्दशांशतः।
पूर्वोदिते यजेत् पीठे षडङ्गैस्त्रिदशायुधैः ॥६३॥

रात्रौ संपूज्य देवेशीमयुतं पुरतो जपेत्।
शयीत ब्रह्मचर्येण भूमौ दर्भास्थिताजिनैः ॥६४॥

देव्यै निवेद्य स्वहार्दं सा स्वप्ने वदति ध्रुवम्।

अपरः प्रकारः पञ्चविंशतितमे तरङ्गे—

चिकीर्षुर्देवतोपास्तिमादौ भावि विचारयेत्।
स्नानदानादिकं कृत्वा स्मृत्वा हरिपदाम्बुजम् ॥८२॥

शयीत कुशशय्यायां प्रार्थयेद् वृषभध्वजम्।
भगवन् देवदेवेश शूलभृद् वृषवाहन ॥८३॥

इष्टानिष्टे समाचक्ष्व मम सुप्तस्य शाश्वत।
नमोऽजाय त्रिनेत्राय पिङ्गलाय महात्मने ॥८४॥

वामाय विश्वरूपाय स्वप्नाधिपतये नमः।
स्वप्ने कथय मे तथ्यं सर्वकार्येष्वशेषतः ॥८५॥

क्रियासिद्धिं विधास्यामि त्वत्प्रसादान्महेश्वर।
एभिर्मन्त्रैः शिवं प्रार्थ्य निद्रां कुर्यान्निराकुलः ॥८६॥

स्वप्नं दृष्टं निशि प्रात गुरवे विनिवेदयेत्।
तमन्तरेण मन्त्रज्ञः स्वयं स्वप्नं विचारयेत् ॥८७॥

---

१. ओं श्रीं स्वप्नेश्वरि कार्यं मे वद स्वाहा, इति त्रयोदशाक्षरो मन्त्रः।

## देशपरत्वेन स्वप्नानां शुभाशुभविमर्शः

स्वप्नानां देशभेदेन यादृशी फलमान्यता।
शुभाशुभमयी काचित् सेह संक्षिप्य दर्श्यते॥

स्वप्नानां शुभाशुभसूचकत्वे सर्वेषु देशेषु ऐक्यरूपेण न विचारपद्धतिः, नापि तुल्यरूपेण फलस्थितिर्वर्तते, अपि तूभयत्र वैविध्यं दृश्यते, भवतु नाम क्वचन साम्यम्।

१. ब्रिटेन देशे स्वप्ने रक्तदर्शनं पारिवारिकसदस्यानां मृत्युसूचकत्वेन अत्यशुभं तथा स्वप्ने घण्टानिनादश्रवणं शुभमित्यङ्गीकुर्वन्ति।[१]

२. टच्यूटानिकसमाजे स्वप्ने लौहदर्शनं वह्निभयसूचकं स्वीकुर्वन्ति।[२]

३. दक्षिण-अफ्रीका देशे रुग्णप्राणिनो मृत्युदर्शनं तस्य स्वास्थ्यसूचकं तथा तस्य विवाहदर्शनं रुग्णस्य मृत्युसूचकं मन्यन्ते।[३]

४. यवन समाजे स्वप्ने श्वेतहरितवस्तूनां जलस्य च दर्शनं शुभं कृष्णरक्तवस्तूनां वह्नेश्च दर्शनमशुभमिति कथयन्ति।[४]

५. आस्ट्रेलिया देशे उलूकपक्षिदर्शनं शत्रोराक्रमणस्य सूचकं निगदन्ति।[५]

६. न्यूजीलैण्डदेशे स्वप्ने रुग्णप्राणिनो मृत्युदर्शनं शुभम्, स्वास्थ्यदर्शनं तस्याशुभमिति।[६]

७. अमेरिकादेशे स्वप्ने शवयात्रादर्शनं विवाहसूचकं, मृत्युसूचकम्, रक्तदर्शनं दुर्भाग्यसूचकमिति वदन्ति।[७]

८. रोमदेशे स्वप्ने श्वेतमेघदर्शनं शुभं कृष्णमेघदर्शनमशुभमिति प्रतिपादयन्ति।[८]

९. बेबीलोन देशे स्वप्ने अग्निविद्युद्दर्शनं मित्रहानिसूचकमिति ब्रुवन्ति।[९]

---

1. M. C. Onell (c) Dreams and Their true Meaning, p. 12.
2. Encyclopedia of Religion and ethics, Vol. V. p. 37.
3. E. B. Tylor; Primitive Culture, 1903, Vol. 1. p. 122.
4. Ibid.
5. Ibid. p. 121.
6. Ibid, p. 1221.
7. Ibid Vol. 23 (1910) 9.4091.
8. Encyclopedia Britanica, 9th Ed, Vol. 7. p. 93.
9. Encyclopedia of Religion and Ethics, Vol. 5. p. 33.

१. भारतवर्षे दर्शककालदशानुसारं स्वप्ने विविधशकुनानि मन्यन्ते, प्रायः स्वप्ने गवादिदर्शनं शुभं कार्पासादिदर्शनमशुभमिति।[१]

२. कनाडादेशे स्वप्ने पर्वतारोहणे साफल्यदर्शनं शुभम्, असाफल्यदर्शनमशुभं वर्णयन्ति।[२]

## स्वप्नविषये विभिन्नमतानि

स्वप्नानां शकुनत्वेन शुभाशुभफलत्वाभ्युपगमे किमपि प्रदर्श्यते—

जगति शुभाशुभफलविज्ञानाय विविधा शकुनव्यवस्था प्रचलिता वर्तते, तथा शकुनस्य विविधं लक्षणं विभिन्नैर्विचारकैः प्रस्तुतं वरीवर्ति। सामान्यतस्त्वस्य लक्षणं भाविशुभाशुभसूचकमिति। सा च सूचना दैव्या शक्त्या प्रेरिता प्रार्थिता अप्रार्थिता वास्ति। शुभाशुभघटनापि आकस्मिकी अद्भुता अपूर्वा च। तेषु शकुनेषु स्वप्नोऽप्येकः शकुन इत्यभ्युगम्यते जनैः। तत्राभ्युपगमे कतिपयपद्धतयो लिख्यन्ते—

१. प्रायो हि दृष्टपदार्थद्वारा शकुनविचारे धार्मिकभावनायां विश्वास एव मूलम्। अदृष्टवशात् स्वप्नेऽननुभूतमपि वस्तु जनो दृष्टिविषयीकरोति।

२. 'ओल्डाटेस्टामेन्ट' इत्यत्र स्वप्ना दिव्यविज्ञप्तीनां न्यायोपेतानि स्रोतांसि मन्यन्ते।[३]

३. यवनधर्मे स्वप्नावस्थायाम् आस्तिकानां प्राणिनाम् आत्मानः परमेश्वरस्य समीपे गच्छन्ति। यस्मात् प्राणिनः स्वप्नान् पश्यन्ति स्वप्नाश्च सत्या भवन्ति।[४]

४. केचन विश्वसन्ति यत् स्वप्नो नहि केवलं प्रेताभ्यागमनरूपा अपि तु प्रायो देवसंकेतस्वरूपा भवन्ति।[५]

---

1. R. E. Enthoven : Folklore Notes, 1914, Vol. 1, p. 102.
2. Journal of American Folklore. Vol. 31 (1918) p. 32.
3. "In the old testament dreams overe accepted as legitimate source of divne Communication."
   Folklore by Folklore society London, Vol. 65-66 (1954-55), p. 336.
4. "Ali said that whenever a believer goes to sleep, his soul is taken close to the throne of God so that whatever dreams he 'sees' is true."
   B. A. Donaldson : The wild Rue, 1938, p. 174.
5. "Dreams are not only considered visits from ghosts but often also supernatural signs to be interpreted symbolically." Encyclopedia Britannica, 9th led, Vol. 7 p. 293.

५. अपरे स्वीकुर्वन्ति यत् स्वप्ने देवाः प्राणिनां कृते विशेषरूपेण स्वकीयामिच्छां प्रकाश्य भाविसूचनां प्रददति ।[१]

६–केचन इत्थमपि श्रद्दधति यत् स्वप्ने मानवानामात्मा अथवा कोऽप्यपर एव पदार्थः तच्छरीरं विहाय अन्यत्र गच्छति । एतस्मात् कारणादेव असभ्यजातिषु तज्जना सुप्तान् स्वजनान् उद्बोधयितुं संकोचमनुभवन्ति ।[२]

७–एषोऽपि विश्वासो लोके समुपलभ्यते यत् स्वप्ने स्वल्पसमयपर्यन्तम् आत्मानः स्वतन्त्राः सन्त आत्मनां संसारे गत्वा विविधं चिन्वन्तीति ।[३]

८—अन्ये जल्पन्ति यदन्धविश्वास एव स्वप्नानां शुभाशुभविचारे हेतुः ।[४]

---

1. "In the dream the diety was believed to reveal himself in a special way to the individual declaring the will of heaven and predicting the future."

   Encyclopedia of Religion and Ethics, 1911, Vol. 5, p. 33.

2. "The explanation given usually by saveges is that the dreamer's soul or One of his souls goes away from his body and sees the things he dreams of. Hence the reluctance among many uncivilized peoples to awaken a sleeper—his soul may be shut out or an evil spirit gets in temporasily.

   Another idea is that the liberated spirit visits the spirit world and there secures information."

   Encyclopedia of Religion and Ethics, 1911, Vol 4, p. 776.

3. 'During sleep the superior soul leaves the body and goes about its own affairs which become the substance of dreams."

   The standar Dictionary of Folklore, Mythology and legerd 1949, Vol. 1, p. 224.

4. आधुनिका नवनवविचाराभिव्यक्तकुशलाः शोधकर्तारः केचन ।

९—स्वप्नादीनां शकुनानां निर्माणविकासप्रक्रियासाहाय्यतत्त्वेषु विचारे क्रियमाणे सति इदं प्रतिभाति यल्लौकिकपरम्परायाः निर्माणे आकस्मिकं मिथ्याज्ञानं तदुद्बलिता संगतिविहीना विवेकरहिता क्रिया कारणमिति ।[१]

ध्यात्वा पादनखज्योतिः पूज्यव्रजविहारिणः ।
रामनारायणेनेह न्यस्ता विविधमान्यताः ॥

1. "Folkways have been formed by accident, that is irrational and incongruous action based on pseudo knowledge.

William Grasham Summer : Folkways, 1934, p. 24.

# शान्तिप्रकरणम्

## दुःस्वप्नशान्तिः

स्वप्नद्वारा भविष्यतो घटनाचक्रस्य परिज्ञानं भवतीति निश्चीयते वेदादिशास्त्रैः। तत्र दुःस्वप्नैरशुभफलं जायत इत्यपि बुध्यते। तत्प्रतीकाराय शास्त्रेण बहव उपायाः प्रदर्शिताः।

तत्र विचिकित्सा भवति यत् भाविनः प्रारब्धकर्मफलस्यैव सूचको दुःस्वप्नः। प्रारब्धकर्मफलस्य निवृत्तिस्तु भोगादेव जायते, नान्यैरुपायैरिति शास्त्रनिर्णयः। तद् यथा—

अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्।
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि॥

अवश्यं भावि भावानां प्रतीकारो भवेद् यदि।
तदा दुःखैर्न बाध्येरन् नलरामयुधिष्ठिराः[१]॥ इति।

उच्यते – कर्मणां वैचित्र्यम्, कानिचित् दृढमूलानि, कानिचिच्छिथिलमूलानि, तत्र दृढमूलानां प्रारब्धकर्मणां फलं शान्त्यादिप्रयत्नेन निवारयितुं न शक्यते, किन्तु शिथिल-मूलानां फलं शान्त्यादिभिर्निवारयितुं शक्यत एव। उक्तञ्च स्मृतौ–हन्यते दुर्बलं दैवं पौरुषेण विपश्चिता'[२] इति। अतः शान्तिः करणीया।

## स्वप्नजन्य-दुष्ट फलानां निवारणप्रकारः—

दुःस्वप्नसूचितारिष्टनिरसनाय तत्फलानां तनूकरणाय च पुनः सुप्तिस्वप्नाकथन-गोविप्रसेवा-तिलादिहोम-दानाचमन-जप-भास्करोपस्थाना-ऽर्घ्याभिषेक-यम-नियम-ब्राह्मणभोजन-देवपूजन-कथाश्रवणौषधस्नान-गजेन्द्रमोक्षस्तव-स्वस्त्ययन-शान्तिपाठ-स्तोत्र सप्तशतीपाठादीनि कार्याणि। दोषाणां लाघवगौरवाभ्यां यथायथं यथाशक्ति शास्त्रोक्त-विधिमनुसृत्य शान्तिकरणे दोषनिराकरणम्। अन्यथा अशुभफलप्राप्तिरिति निश्चप्रचम्। तथा चोक्तं पुराणादिषु—

---

१. पञ्चदशी ७।१५६।
२. हायनरत्ने २ पृष्ठे उद्धृतम्।

[१]एषां संकथनं[२]धन्यं भूयः प्रस्वापनं तथा ।
[३]कल्कस्नानं तिलैर्होमो ब्राह्मणानां च पूजनम् ॥

स्तुतिश्च वासुदेवस्य तथा तस्यैव पूजनम् ।
[४]नागेन्द्रमोक्ष श्रवणं ज्ञेयं दुःस्वप्ननाशनम् ॥ (मत्स्य०२४१अ०)

इत्यधन्यानि स्वप्नानि तेषाकथनं शुभम् ।
भूयश्च स्वपनं तद्वत् कार्यं[५] स्नानं द्विजार्चनम् ॥

तिलैर्होमो हरिब्रह्मशिवार्कगणपूजनम् ।
तथा स्तुतिप्रपठनं[६] पुंसूक्तादिजपस्तथा ॥ ( अ० पु० २२९ अ० )

एतन्महाराज तवेरितो मया
कृष्णानुभावो[७] गजराजमोक्षणम् ।
स्वर्ग्यं यशस्यं कलिकल्मषापहं
दुःस्वप्ननाशं कुरुवर्यं शृण्वताम् ॥

---

अरिष्ट सूचिते देहे तस्मिन् काल उपागते ।
त्यक्त्वा भयविषादं च उद्गच्छेद् बुद्धिमान्नरः ॥ ३३ इत्यादि········ ।
( वा० पु० १९ अ० )

१. एषाम्—दुःस्वप्नानाम्

२. वीरमित्रोदयादिग्रन्थेषु 'अकथनं' इति पाठो वर्तते । समीचीनश्चायमेव पाठो भाति । अस्मिन्नेव पाठेऽङ्गीकारे अन्यत्रोक्तानामनेन सहाविरोधोऽपि भवति ।

३. अस्मिन् विषये धर्मशास्त्रग्रन्थेषु किमपि नोपलभ्यते । मन्ये आमलक्याः कल्केन अथवा सर्वौषधिकल्केन वा कार्यमिति ।

४. एषा कथा भागवते भारते च वर्तते । तत्र भागवतीया कथा शान्तिप्रकरणान्ते सहैव सन्नद्धा कृता मया सौकर्याय जिज्ञासूनाम् ।

५. दुःस्वप्ना दुष्टचिन्ताश्च वन्ध्या भवन्ति सर्वदा ।
प्रातः स्नानेन शुद्धानां पुरुषाणां विशां वर ॥
( प० पु० आ० खं० ३१।५८ )

६. पुंसूक्त पदेन पुरुषसूक्तमेव गृह्यते तच्च 'सहस्रशीर्षा········इत्यारभ्य यज्ञेन यज्ञमयजन्त········इत्यतेत्पर्यन्तं षोडश मन्त्राः इति । ऋग् १० म० ७ अ० ९० सू० ।

७. इदं स्तोत्रं किं वा एतत्कथा भागवते ८ स्कन्धे वर्तते । महाभारते च शान्तिपर्वणि वर्तते ।

यथाऽनुकीर्तयन्त्येतच्छ्रेयस्कामा द्विजातयः ।
शुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशान्तये ॥

भागवत० ८।४।१४-१५ )

देवि दुःस्वप्नमत्युग्रमचिन्त्यं भयदायकम ।
देहि दानं द्विजातिभ्यो ह्यचिन्त्यभयनाशकम् ॥ ४१ ॥

धेनुं वासांसि रत्नानि गजांश्चाभरणानि च ।
ब्राह्मणाः परिसन्तुष्टाः सिषिश्चुस्तां नृपस्त्रियम् ॥४२॥

( पद्म० उ० खं० ११ अ० ४१-४२ )

'याति पापोऽल्पफलतां दानहोमजपादिभिः ।" ( अष्टा० शा० ६ )

"दुःस्वप्नं यदि पश्येत्तु वान्ते वा क्षुरकर्मणि ।
मैथुने प्रेतधूमे च स्नानमेव विधीयते ॥" पराशरसंहिता-१२।१ ।

अत्र माधवः—भाव्यरिष्टसूचके दुःस्वप्ने दृष्टे सति प्रातरुत्थाय तन्निमित्तकं स्नानं कर्तव्यम् । तथा भुक्तेऽन्ने वान्ते सति तदैव स्नातव्यम् । तथा क्षौर-मैथुन-प्रेतधूमाघ्राणेषु च स्नानमाचरेत् । एवं दुर्जनसंस्पर्शनादावपि स्नानं द्रष्टव्यमिति । एवमेव यमोऽपि—

'अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्मणि मैथुने ।
दुःस्वप्ने दुर्जनस्पर्शे स्नानमेव विधीयते ॥"

वराहः—

"भूयः प्रस्वपनं न चास्य[1]कथनं गङ्गाभिषेको जपः
शान्तिः स्वस्त्ययनं निषेवणमिति प्रातर्गवां शृङ्गयोः ।
विप्रेभ्यश्च तिलान्नहेमकुसुमैः पूजा यथाशक्तितः
पुण्यं भारतकीर्तनं च कथितं दुःस्वप्नविच्छित्तये ॥"

---

१. स्वप्नस्य संकथनादपि दुर्गतिपातोऽस्ति, अत्र विशेषमाह—
उक्त्वा काश्यपगोत्रे च विपत्ति लभते ध्रुवम् ।
दुर्गते दुर्गतिं याति नीचे व्याधिं प्रयाति च ॥११॥
शत्रौ भयं च लभते मूर्खे च कलहं भवेत् ।
कामिन्यां धनहानिः स्याद् रात्रौ चौरभयं भवेत् ॥१२॥
निद्रायां लभते शोकं पण्डिते वाञ्छितं फलम् ।
न प्रकाश्यश्च सुस्वप्नः पण्डिते काश्यपे व्रज ।१३॥ इति ।
(ब्र० वै० पु० कृ० ख० ७७ अ० ।)

वृद्धपराशरः--

[१]"दुःस्वप्ने मैथुने वान्ते विरिक्ते क्षुरकर्मणि।
चितियूपश्मशानानां स्पर्शने स्नानमानचरेत्॥

वृ० परा० सं० ६अ० २०५ पृ० जी० विद्यासागर संस्करण

देवद्विजाग्निप्रतिपूजनानि मन्त्रोपजाप्यानि पवित्रमेव।
तिलान्नगोभूमिहिरण्यदानं दुःस्वप्नसंदर्शननाशनानि॥

तथाम्बुसंस्पर्शनमन्त्रहोमस्तिलप्रदानं स्वपनं च भूयः।
शान्तिर्जपश्चाकथनं दमश्च दुःस्वप्नहन्त्रीणि पठश्च गाङ्गम्॥

ब्रह्मोक्त--याज्ञवल्क्य-संहितायां दशमाध्याये दुःस्वप्ने जायमाने विनायक-शान्तिर्ग्रहशान्तिर्वा विहिता।

सुश्रुते सूत्रस्थाने २९ अध्याये—

स्वप्नानेवं विधान् दृष्ट्वा प्रातरुत्थाय यत्नवान्॥७१॥
दद्यान्माषांस्तिलांल्लोहं विप्रेभ्यः काञ्चनं तथा।
जपेच्चापि शुभान्[२] मन्त्रान् गायत्रीं त्रिपदां तथा॥७२॥

दृष्ट्वा च प्रथमे यामे सुप्याद् ध्यात्वा पुनः शुभम्।
जपेद् वान्यतमं[३] देवं ब्रह्मचारी समाहितः॥७३॥
न चाचक्षीत कस्मैचिद् दृष्ट्वा स्वप्नमशोभनम्।
देवतायतने चैव वसेद् रात्रित्रयं तथा।
विप्रांश्च पूजयेन्नित्यं दुःस्वप्नात् प्रतिमुच्यते[४]॥ ७४ इति॥

---

१. जीवानन्द विद्यासागर संस्करणे एष श्लोकः पाठभेदेनाप्यते—
"दुःस्वप्नदर्शने चैव वान्ते वा क्षुरकर्मणि।
मैथुने कूटधूमे च सद्यः स्नानं विधीयते॥"
(बृहत्पराशर संहिता ६ अ० २०५, २०६ पृ०)

२. नमः शिवायेत्यादीन्, अथवा स्वेष्टदेवमन्त्रान्, करोतु सानः इत्यादिदेवीमन्त्रान् वा।

३. एकतमम्, य कं वेष्टदेवमित्यर्थः।

४. यद्यपि प्रथमयामदृष्टस्वप्नस्य निष्फलत्वं कथितम्, तथापि स्वप्नभयादयं विधिः कर्तव्यः। परिमुच्यते इत्यपि पाठः।

एवं नारदोऽपि –

'चन्द्रादित्ययोराकाशे स्वप्ने चैवार्धदर्शनम् ।
ततः स्नानं प्रकुर्वीत प्रभाते द्विजसत्तम ॥
तिलानामयुतं तत्र जुहुयात् सुसमाहितः ।
[१]तिलोऽसीति तु मन्त्रेण ततः सम्पद्यते शुभम् ॥
ब्राह्मणांस्तोषयेत्तत्र दक्षिणाभोजनादिना ।
दानं च द्विविधं देयमशुभानां विनाशनम् ॥
ततः शान्तिर्भवेत्तत्र दुःस्वप्नं च विनश्यति ।
षड्भिर्मासैस्तु सम्पूर्णैरन्यथा मरणं भवेत् ॥ इति ।

तथा शौनकः—

यदाऽनिष्टफलं स्वप्नं पश्येत्तस्योच्यते विधिः ।
स्नात्वा प्रभाते सन्ध्याञ्च उपास्य तदनन्तरम ॥
[२]अद्यानो देवसवितरित्यृचा पूर्वमेकया ।
अतः परं परं यच्च गोषु[३] दुःस्वप्नपञ्चभिः ॥

---

१. तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः ।
प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः ॥

२. अद्या नो देव सवितः प्रजावत् सावीः सौभगम् । परा दुः स्वप्न्यं सुव ॥
(ऋ० वे० म० ५ सू० ८२ मं० ४)

हे सवितः देव नः अस्मभ्यम् अद्य अस्मिन् यागदिने प्रजावत् पुत्राद्युपेतं सौभगं धनं सावीः प्रेरय । दुःस्वप्न्यं दुस्वप्नवद् दुःखकरं दारिद्र्यं परा सुव दूरे प्रेरय ।
(सायण भाष्यम्)

३. यच्च गोषु दुष्ष्वप्न्यं यच्चास्मे दुहितर्दिवः ।
त्रिताय तद्विभावर्याप्त्याय परा वहानेहसो व ऊतयः सु ऊतयो व ऊतयः ॥१४॥
निष्कं वा घा कृणवते स्रजं वा दुहितर्दिवः ।
त्रिते दुष्ष्वप्न्यं सर्वमाप्त्ये परि दद्मस्यनेहसो व ऊतयः सुऊतयो व ऊतयः ॥१५॥
तदन्नाय तदपसे तं भागमुपसेदुषे ।
त्रिताय च द्विताय चोषो दुष्ष्वप्न्यं वहानेहसो वऊतयः सुऊतयो व ऊतयः ॥१६॥
यथा कलां यथा शफं यथा ऋणं संनयामसि ।
एवा दुष्ष्वप्न्यं सर्वमाप्त्ये सं नयामस्यनेहसो व ऊतयः सुऊतयो व ऊतयः ॥१७॥
अजैष्माद्यासनाम चाभूमानागसो वयम् ।
उषो यस्माद्दुष्ष्वप्न्यादभैष्माप तदुच्छत्वनेहसो व ऊतयः सुऊतयो व ऊतयः ॥१८॥
(ऋग्वेद मं० ८ अ० ६ सू० ४७ अस्मिन् १४–१८ पर्यन्ता मन्त्राः)

ऋग्भिः परं यो[१] मे राजन्युद्य इत्याद्यृचा[२] तथा ।
ऋग्भिः पूर्वाभिरेताभिरुपतिष्ठेत भास्करम् ।।
एवं कृते तु दुःस्वप्नदर्शनं निष्फलं भवेत् ।
[३]अधः स्वप्नस्येति जपन् प्रातः प्रातर्दिने दिने ।।
दुःस्वप्नं नुदते कृत्स्नं त तस्माद् विन्दते भयम् ।। इति ।

पारिजाते शौनकः—( शान्तिसारे ) १३२–१३४ पृ०—

स्वप्नोत्पातेषु चैतेषु कालरात्र्याधिदेवता ।
पूजाविधानं पूर्वोक्तं कुर्यादत्रापि यत्नतः ।।
रात्रिसूत्रकल्पवदित्यर्थः ।

---

१. यो मे राजन्युज्यो वा सखा वा स्वप्ने भयं भीरवे मह्यमाह ।
स्तेनो वा यो दित्सति नो वृको वा त्वं तस्माद् वरुण पाह्यस्मान् ।।१०।।
( ऋ० वे० २ मं० २८ सू० १० मं० )

२. माहं मघोनो वरुण प्रियस्य भूरिदा आविदं शूनमापेः ।
मा रायो राजन्त्सुयमादव स्थां बृहद् वदेम विदथे सुवीराः ।।११।।
( ऋ० वे० २ मं० ३ अ० २८ सू० ११ मन्त्र )

अत्र केचिदाहुः—'इदमेकादशर्चं तु वारुणं भय पापनुत् । ऋगदारिद्र्यदुःस्वप्न-नाशनं चेति शुश्रुम' इति ।
ऋ० वे० २ मं ३ अ० २८ सूक्तस्यादौ सायणभाष्ये लिखितम् ।

३. अधः स्वप्नस्य निर्विदेऽभुञ्जतश्च रेवतः ।
उभा ता बस्रि नश्यतः ।। (ऋ० वे० मं० १ सू० १२० मं० १२)
एतस्या ऋचोऽयमर्थः—
( अद्य इदानीं प्रभातसमये स्वप्नस्य स्वप्नं प्रति निर्विदे निर्विण्णोऽस्मि । तथा अभुञ्जतः परान् अरक्षतः रेवतः धनवतः च पुरुषस्य एवं भूतं पुरुषं प्रत्यपि निर्विण्णोऽस्मि । यतः तौ उभौ बस्रि क्षिप्रं नश्यतः नाशं प्राप्नुतः । स्वप्नदृष्टः पदार्थः प्रातर्नोपलभ्यते कदर्यस्येव धनमभुक्तमदत्तं सत् क्षिप्रमेव नश्यति तदुभयविषयो निर्वेदो मां बाधते इत्यर्थः । अत्र स्वप्नमात्रस्य असत्त्वप्रतिपादनेन दुःस्वप्नस्यापि असद्भावः प्रतिपादितः । अत एषा दुःस्वप्ननाशनीति युज्यते । स्वप्नस्य । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी विदे विद्लृ लाभे । आगमानुशासनस्य अनित्यत्वात् नुमभावः । रेवतः । रयि शब्दात् मतुप् । 'रये मतौ बहुलम्, इति सम्प्रसारणम् छन्दसीरः इति मतुपो वत्वम् । रे शब्दाच्च मतुप उदात्तत्वम्, इति तस्योदात्तत्वम् । उभा ता । उभयत्र सुपां सुलुक् इति आकारः ।

होमं कुर्यात् प्रयत्नेन रात्रावेव द्विजोत्तम।
प्रत्यृचं पायसं हुत्वा रात्री[1] व्यख्यदिति क्रमात्॥
अष्टोत्तरशतं हुत्वा सूक्तेनानेन यत्नतः।
[2]स्वप्नाधिपतिमन्त्रेण हुनेदष्टोत्तरं शतम्॥
कालरात्रेर्नाममन्त्रेणेत्यर्थः।
गुरवे दक्षिणां दद्यात् वस्त्रहेमपशूनपि।
यद्युक्ते दक्षिणादानेऽप्यशक्तो होमकर्मणि॥
हिरण्यं दक्षिणां दद्यात् तदानीमेव वा बुधः।
वस्त्रकुम्भादिसकलं तद्धोत्रे प्रतिपादयेत्॥" इति।
(शान्तिसारे ३ परि०)

चण्डीपाठेनापि शान्तिर्भवति, तदुक्तं सप्तशत्याम्—

दुःस्वप्नं च नृभिर्दृष्टं सुस्वप्नमुपजायते। (सप्तशती अ० १२)

शान्तिग्रन्थेषु-चण्डीपाठ-याम्याशान्ति[3]-चरुप्राशनादीनि कर्माण्यपि विहितानि सन्ति।

---

१. रात्री व्यख्यदायती पुरुत्रा देव्यक्षभिः। विश्वा अधि श्रियोऽधित ॥१॥
ओर्वप्रा अमर्त्या निवतो देव्युद्वतः। ज्योतिषा बाधते तमः ॥२॥
निरु स्वसारमस्कृतोषसं देव्यायती। अपेदु हासते तमः ॥३॥
सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि। वृक्षे न वसतिं वयः ॥४॥
नि ग्रामासो अविक्षत नि पद्वन्तो नि पक्षिणः। नि श्येनासश्चिदर्थिनः ॥५॥
यावया वृक्यं वृकं यवय स्तेनमूर्म्ये। अथा नः सुतरा भव ॥६॥
उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थित। उष ऋणेव यातय ॥७॥
उप ते गा इवाकरं वृणीष्व दुहितर्दिवः। रात्रिस्तोमं न जिग्युषे ॥८॥
(ऋ० १० मं० १० अ० १२७ सूक्तम्)

इति रात्रिसूक्तपदेनापि कथ्यते।
दुःस्वप्नदर्शने उपोषितेन कर्त्रा पायसेन होतव्यम्। तत्रैतत् सूक्तं करणत्वेन विनियुक्तम्।
तथा चारण्यके श्रूयते—
स यद्येतेषां किञ्चित् पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वा (ऐ० आ० ३-२-४)

२. 'ओं नमः स्वप्नाधिपतये रुद्राय स्वाहा' इति।

३. याम्याशान्तिस्तु षड्विंश ब्राह्मणोक्तविधिना हवनादिकमेवेति तर्कये।

वेणीसंहारे द्वितीयेऽङ्के –

"यद्येवं तत्कथय स्वप्नं यद् वयमपि प्रतिष्ठापयन्त्यः धर्मप्रशंसया देवानां संकीर्तनेन दूर्वादिपरिग्रहेण च परिहरिष्यामः। अकुशलदर्शना अपि स्वप्ना देवानां प्रशंसया कुशलपरिणामा भवन्ति। यत् किमप्याहितं तद् भागीरथीप्रमुखानां नदीनां सलिलेनापह्नीयताम्। आहुतिहुतेन प्रज्वलितेन भगवता हुताशनेन च अन्तर्य्यताम्।" इति।

लिङ्गादिपुराणेषु एतदपि वर्णितं यदरिष्टेऽशुभलक्षणैः सूचिते सति बुद्धिमान् नरो ज्ञानी योगी वा तत्कालं विज्ञाय सर्वान् विहाय रहसि भगवन्तमोङ्कारं ध्यायीत, काशीं वा गच्छेदिति।

प्रबोधिन्येकादशीव्रतेन तद्व्रतमाहात्म्यश्रवणेनापि दुःस्वप्नशान्तिर्भवति। तथा चोक्तं वाराहपुराणे–"दुःस्वप्नः प्रशममुपैति पठ्यमाने माहात्म्ये भवभयहारके नरस्य। यः कुर्याद् व्रतवरमेतदव्ययायाः, बोधिन्याः किमुत फलन्तु तस्य वाच्यम्।"

(वा० पु० २११ अ० ७९ श्लो०)

श्राद्धमपि विहितं दुःस्वप्नदर्शने तथोक्तं वाराहपुराणे—

नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने।
इच्छाश्राद्धानि कुर्वीत नवसस्यागमे तथा॥

(वारा० पु० १३ अ० ३५ श्लो०)

स्त्रोतसि प्रातः स्नानेनापि दुस्वप्ननिवारणं भवति। तथा चोक्तं पाद्मे—

दुःस्वप्ना दुष्टचिन्ताश्च वन्ध्या भवन्ति सर्वदा।
प्रातः स्नानेन शुद्धानां पुरुषाणां विशां वर॥

(आ० खं० ३१।५८)

वीरमित्रोदये राजनीतिप्रकाशे[१]—

अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम्।
हंसं नारायणं चैव एतन्नामाष्टकं शुभम्॥
त्रिसन्ध्यं यः पठेन्नित्यं दारिद्र्यं तस्य नश्यति।
शत्रुसैन्यं क्षयं याति दुःस्वप्नं च विनश्यति॥
गंगायां मरणं चैव दृढभक्तिश्च केशवे।
ब्रह्मविद्यावबोधश्च तस्मान्नित्यं पठेन्नरः।

विष्णुसहस्रनामस्तोत्रस्यापि पाठोऽत्र मङ्गलाय भवतीति स्तोत्रान्तफलस्तुतिभिरेव ज्ञायते।

---

१. त्रयस्त्रिंशत्तमे पृष्ठे, चौखम्बासंस्करणे।

## आश्वलायन गृह्यसूत्रे

तृतीयाध्याये षष्ठकण्डिकायाम्--

स्वप्नममनोज्ञं दृष्ट्वा अद्या नो सवितरिति द्वाभ्यां यच्च गोषु दुःस्वप्नमिति पञ्चभिरादित्यमुपतिष्ठेत ३।६।६

यो मे राजन् युज्यो वा सखा वेति वा ३।६।७

अशुभं स्वप्नं दृष्ट्वा 'अद्यानो'[१] इति द्वाभ्यां मन्त्राभ्यां तथा यच्च गोषु दुस्वप्नमिति पञ्चभिर्मन्त्रैश्चादित्यमुपतिष्ठेत। अथवा * 'यो मे राजन्नित्येकयर्चा वा। अर्थात् सप्तभिर्ऋग्भिरेकया वोपस्थानं कार्यम् आश्वलायनोक्त एष विधिः सामान्यतो दुःस्वप्नदर्शने ज्ञेयः।

पाद्मे—उत्तरखण्डे ११ अ०—

देवि दुःस्वप्नमत्युग्रमचिन्त्यं भयदायकम्।
देहि दानं द्विजातिभ्यो ह्यचिन्त्यभयनाशकम् ॥४१॥
धेनुर्वासांसि रत्नानि गजांश्चाभरणानि च।
ब्राह्मणाः परिसन्तुष्टाः सिषिचुस्तां नृपस्त्रियम् ॥४२॥

## ऐतरेयारण्यके—

स यद्येतेषां किंचित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रिसूक्तेन प्रत्यृचं हुत्वाऽन्येनान्नेन ब्राह्मणान् भोजयित्वा चरुं स्वयं प्राश्नीयात् ३।२।४

अस्यायं भावः--स पुमान् एतेषामरिष्टानां जागरणप्रत्यक्षारिष्टानां अस्मिन्नेव प्रकरणे एतदारण्योक्तानां तथाऽत्रैवोक्तानां स्वप्नगतदशविधविशेषारिष्टानां मध्ये यत् किमपि अरिष्टं यदा पश्येत् तस्मिन् दिने स्वयमुपवासं कृत्वा स्थालीपाकविधानोपेतं पायसं श्रपयित्वा "रात्रीव्यख्यदायती" (ऋ० मं० १० सू० १२७) इत्यस्मिन् सूक्ते

---

१. अद्यानो देव सवितः प्रजावत् सावीः सौभगम्। पराः दुःस्वप्न्यं सुव।
(ऋ. मं. ५ अं. ६ सू० ८२ मं. ४)

विश्वानि देव सवितर्दुरितानि परा सुव यद् भद्रं तन्न आ सुव।
(ऋ. मं. ५ अं. ६ सू. ८२ मं ५)

* अपरे मन्त्रा अपरपृष्ठेषूट्टङ्किताःस्ते तत्रैव द्रष्टव्याः एतेषां मन्त्राणामर्थाः सायणभाष्ये द्रष्टव्याः। विस्तरभयान्नहि लिख्यन्ते। अर्थदर्शनेनाखिला इमे मन्त्राः स्वप्नपरका इति ज्ञायन्ते।

प्रतिमन्त्रं पायसं हुत्वा स्वगृहे निष्पादितेनान्नेन यथाशक्ति ब्राह्मणान् भोजयित्वा पश्चाद्धोमशेषं चरुं स्वयं प्राश्नीयात्। एतावता संपादनीयस्य पुरुषार्थस्योपस्थितो विघ्नः परिहृतो भवति इति सायणभाष्यम्।

दुःस्वप्ननिरूपणप्रकरणे ऐतरेयारण्यकोक्तानाम् "पुरुषं कृष्णं ... दक्षिणामुखो घ्नाजयति" इत्यादिदशविधानां स्वप्नानां शान्तये विशेषत एष विधिर्ज्ञेयः। रात्री व्यख्येत्यादिमन्त्रा अस्मिन्नेव प्रकरणेऽन्यत्रोक्ताः सन्ति। श्रीनीलकण्ठभट्टविरचिते आचारमयूखे दुःस्वप्नदोषापनोदायैष विधिरुक्तः :—

## अथ दुःस्वप्नशान्तिमाह शौनकः—

एवमादीनि चान्यानि श्रुत्युक्तानि बहूनि च।
स्वप्नोत्पातानि चैतेषां कालरात्र्यधिदेवता॥
पूजाविधानं पूर्वोक्तं कुर्यादत्रापि यत्नतः।

पूर्वोक्तमितिरात्रिसूत्रकल्पवदित्यर्थः।

होमं कुर्यात् प्रयत्नेन रात्रावेव द्विजोत्तमः।
उक्तेनैव विधानेन सघृतं पायसं हुनेत्॥

उक्तेन विधानेनेति स्वगृह्योक्तविधानेनेत्यर्थः।

प्रत्यृचं पायसं हुत्वा रात्रि व्यख्यदिति क्रमात्।
अष्टोत्तरशतं हुत्वा सूक्तेनानेन वित्तमः॥

ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत्।
पूर्वोक्तमभिषेकं यत्तदत्रापि विधीयते॥

पूर्वोक्तं ग्रहयज्ञोक्तमित्यर्थः।

गुरवे दक्षिणां दद्याद् वस्त्रहेमपशूनपि।
यद्यस्ति दक्षिणाभावोऽप्यसक्तो होमकर्मणि॥

हिरण्यं दक्षिणां दद्यात्तदानीमेव वा बुधः।
वस्त्रकुम्भादिसकलं तद्धोत्रे प्रतिपादयेत्॥

ब्राह्मणान् भोजयेच्छक्त्या सुशीलान् वेदपारगान्।
भक्ष्यैश्च पायसाद्यैश्च रत्नानि सुबहूनि च॥

अनेन विधिना यस्तु शान्तिं कुर्वीत शक्तितः ।
तस्य वर्षशतायुष्यं भवत्येव न संशयः ॥ इति ।

काशीनाथोपाध्यायकृतप्रायश्चित्तेन्दुशेखरे १० पृ० "दुःस्वप्नारिष्टयोर्दर्शने सघृत-हिरण्यदानम्" प्रायश्चित्तत्वेनोदितम् ।

इमे मन्त्रा अपि दुःस्वप्नशान्तये पठनीया :—

अस्याऽधो निर्दिष्टस्य दुःस्वप्ननाशनसूक्तस्य अवतरणसायणभाष्यम् 'अपेहि' इति पञ्चर्चं त्रयोदशं सूक्तमाङ्गिरसस्य प्रचेतस आर्षम् । तृतीया त्रिष्टुप् पञ्चमी पंक्तिः । दुःस्वप्ननाशनं देवता । तथा चानुक्रान्तम्—'अपेहि पञ्च प्रचेता दुःस्वप्नघ्नं पङ्क्त्यन्तं त्रिष्टुम्मध्यम्' इति लैंगिको विनियोगः ।

अपेहि मनसस्पतेऽप क्राम परश्चर ।
परो निर्ऋत्या आचक्ष्व बहुधा जीवतो मनः ॥१॥

भद्रं वै वरं वृणते भद्रं युञ्जन्ति दक्षिणम् ।
भद्रं वैवस्वते चक्षुर्बहुत्रा जीवतो मनः ॥२॥

यदाशसा निःशसाभिशसोपारिम जाग्रतो यत् स्वपन्तः ।
अग्निर्विश्वान्यप दुष्कृतान्यजुष्टान्यारे अस्मद्दधातु ॥३॥

यदिन्द्र ब्रह्मणस्पतेऽभिद्रोहं चरामसि ।
प्रचेता न आङ्गिरसो द्विषतां पात्वंहसः ॥४॥

जाग्रत् स्वप्नः संकल्पः पापो यं द्विष्मस्तं
स ऋच्छतु यो नो द्वेष्टि तमृच्छतु ॥५॥

एतासां पञ्चानामृचां पाठकरणेनापि दुःस्वप्नशान्तिर्भवति । यद्यप्यस्य दुःस्वप्न-नाशाय क्वचित् पाठो विहितो नोपलभ्यते, किन्तु सूक्तनाम्ना भाष्योक्तविनियोगेन मन्त्रार्थविचारेण च प्रतिभात्येतत् ।

शार्ङ्गधरसंहितायाम् ३ अध्याये—

दुःस्वप्नानेवमादींश्च दृष्ट्वा ब्रूयान्न कस्यचित् ।
स्नानं कुर्यादुषस्येव दद्याद्धेमतिलानयः ॥१५॥

पठेत् स्तोत्राणि देवानां रात्रौ देवालये वसेत् ।
कृत्वैवं त्रिदिनं मर्त्यो दुःस्वप्नात् परिमुच्यते ॥१६॥

काशीनाथोपाध्यायकृते धर्मसिन्धौ ३ परिच्छेदे—

अथ दुःस्वप्नदर्शने कृत्यं यो मे राजन्नित्यृचा सूर्योपस्थाने दुःस्वप्ननाशः। अधः स्वप्नस्येति जपाद् वा। क्वचिद्दर्शवच्छ्राद्धेन दुःस्वप्ननाशः, चण्डीसप्तशतीपाठेन वा, यद्वा श्रीविष्णुसहस्रनामस्तोत्रजपः कार्यः, अथवा श्रीभारतस्थस्य श्रीमद्भागवतस्थस्य वा गजेन्द्रमोक्षस्य श्रवणं पाठो वा, कार्यः। इति दुःस्वप्ननाशकविधिः।

एषापि प्रसिद्धिर्लोके वर्तते—

काश्यास्तु दक्षिणे भागे कुक्कुटो नाम शङ्करः।
तस्य दर्शनमात्रेण स्वप्नबाधा प्रमुच्यते॥

एतस्य भगवतः शिवस्य मन्दिरं, दुर्गाकुण्डे भगवत्या दुर्गाया मन्दिराद्दक्षिणदिशि द्वारपार्श्वेऽस्ति।

ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे ८२ अध्याये दुःस्वप्नशान्तिः—

रक्तचन्दनकाष्ठानि घृताक्तानि च यो जुहेत्।
गायत्र्याश्च सहस्रेण तेन शान्तिर्विधीयते॥४१॥

सहस्रधा जपेद् यो हि भक्त्या मां मधुसूदनम्।
निष्पापो हि भवेत् सोऽपि दुःस्वप्नः सुस्वप्नो भवेत्॥४२॥

अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम्।
हंसं नारायणञ्चैव एतन्नामाष्टकं शुभम्॥४३॥

शुचिः पूर्वमुखः प्राज्ञो दशकृत्वश्च यो जपेत्।
निष्पापो हि भवेत् सोऽपि दुःस्वप्नः सुस्वप्नो भवेत्॥४४॥

विष्णुं नारायणं कृष्णं माधवं मधुसूदनम्।
हरिं नरहरिं रामं गोविन्दं दधिवामनम्॥४५॥

शुचिः पूर्वमुखो भूत्वा भक्तिश्रद्धायुतो जपेत्।
निष्पापो हि भवेत् सोऽपि दुःस्वप्नः सुस्वप्नो भवेत्॥४६॥

भक्त्या चैतानि भद्राणि दश नामानि यो जपेत्।
शतकृत्वो भक्तियुक्तो जप्त्वाऽरोगश्च रोगतः॥४७॥

लक्षधा हि जपेद् यो हि बन्धनान्मुच्यते ध्रुवम् ।
जप्त्वा च दशलक्षञ्च महावन्ध्या प्रसूयते ॥
हविष्याशी यतः शुद्धो दरिद्रो धनवान् भवेत् ॥४८॥

शतलक्षञ्च जप्त्वा च जीवन्मुक्तो भवेन्नरः ।
शुद्धो नारायणक्षेत्रे सर्वसिद्धिं लभेन्नरः ॥४९॥

शिवं दुर्गां गणपतिं कार्तिकेयं गणेश्वरम् ।
धर्मं गंगां च तुलसीं राधां लक्ष्मीं सरस्वतीम् ॥५०॥

नामान्येतानि भद्राणि जले स्नात्वा च यो जपेत् ।
वाञ्छितञ्च लभेत् सोऽपि दुःस्वप्नः सुस्वप्नो भवेत् ॥५१॥

ओं ह्रीं श्रीं क्लीं पूर्वं दुर्गतिनाशिन्यै महामायायै स्वाहा ।
कल्पवृक्षो हि लोकानां मन्त्रः सप्तदक्षाशरः ॥५२॥

शुचिश्च दशधा जप्त्वा दुःस्वप्नः सुस्वप्नो भवेत् ॥५३॥

शतलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम् ।
सिद्धमन्त्रश्च लभते सर्वसिद्धिश्च वाञ्छितम् ॥५४॥

नमो मृत्युञ्जयायेति स्वाहान्तं लक्षधा जपेत् ।
दृष्ट्वा च मरणं स्वप्ने शतायुश्च भवेन्नरः ॥५५॥

पूर्वोत्तरमुखो भूत्वा स्वप्नं प्राज्ञे प्रकाशयेत् ॥५६॥

काश्यपे दुर्गते नीचे देवब्राह्मणनिन्दके ।
मूर्खे चैवानभिज्ञे च न च स्वप्नं प्रकाशयेत् ॥५७॥

अश्वत्थे गणके विप्रे पितृदेवासनेषु च ।
आर्ये च वैष्णवे मित्रे दिवा स्वप्नं प्रकाशयेत् ॥५८॥

इति ते पुण्यमाख्यानं कथितं पापनाशनम् ।
धन्यं यशस्यमायुष्यं किं भूयः श्रोतुमिच्छसि ॥५९॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे भगवन्नन्दसंवादे दुःस्वप्नकथनं नाम द्व्यशीतितमोऽध्यायः ८२ ।

दुःस्वप्नदर्शनेऽपि तत्फलप्राप्तयेऽपरोऽयं नियमोऽवबोद्धव्य :—

सुस्वप्नदर्शनं पुण्यं यदि नीचं न वक्ति च ।।७६।।
काश्यपं दुर्गतं नीचं शत्रुमज्ञानिनं स्त्रियम् ।
त्यक्त्वा रात्रिञ्च दिवसे वक्ति विप्रं सुपण्डितम् ।।७७।।
देवालये च देवं वाप्यश्वत्थं तुलसीवटम् ।
उक्त्वा तद् द्विगुणं पुण्यमप्रकाश्यं चतुर्गुणम् ।।७८।।
सुस्वप्नदर्शने प्राज्ञो गंगास्नानफलं लभेत् ।
अर्थञ्च विपुलं पुत्रं भार्यां भूमिं लभेत् प्रजाम् ।।७९।।
मोक्षञ्च परमैश्वर्यं लभते सर्ववाञ्छितम् ।।८०।। इति ।

( ब्रह्मवैवर्ते—श्रीकृष्णजन्मखण्डे ७६ अध्याये )

ब्रह्मवैवर्तपुराणे श्रीकृष्णजन्मखण्डे सप्तसप्तत्यध्यायस्य पाठेनापि दुःस्वप्नशान्ति-र्बहुफलावाप्तिश्च भवति ।

स्वप्नाध्यायं प्रवक्ष्यामि बहुपुण्यफलप्रदम् ।
स्वप्नाध्यायं नरः श्रुत्वा गंगास्नानफलं लभेत् ।।४।।

(तत्रैव)

दुष्टस्वप्नदर्शने दोषशान्ति :—

दुष्टे त्वालोकिते स्वप्ने निवेद्य ब्राह्मणाय च ।
आशीर्भिस्तोषितो विप्रः पुनः स्वप्यान्नरेश्वरः ।।८७।।
न ब्रूयाच्च पुनः स्वप्नं संस्नायात् पुण्यवारिभिः ।
कार्यो मृत्युञ्जयो होमः शान्ति स्वस्त्ययनादिकम् ।।८८।।
सेवाऽश्वत्थगवां प्रातर्दानं स्वर्णादि शक्तितः ।
श्रवणं भारतादीनां स्वप्नदोषनिवृत्तये ।।८९।।
बृहस्पतिप्रणीतं च स्वप्नाध्यायं पठेदपि ।।९०।। इति ।

दैवज्ञवर्यगणपतिविरचिते २४ मिश्रप्रकरणे मुहूर्तगणपतिनामके ग्रन्थे ।

यश्चैवं स्वप्नं दृष्ट्वा तु पुनः सुप्तो हि मानवः ।
दुःस्वप्नं वा सुस्वप्नं वा निष्फलं जायते ध्रुवम् ।।२५।।

दुःस्वप्नो दृश्यते येन तस्य निद्रां च कारयेत् ।
ततो नश्याशुभं तत्र शुभमेव भविष्यति ॥२६॥

रक्तचन्दनकाष्ठानि घृतयुक्तानि होमयेत् ।
गायत्र्यष्टसहस्राणि यस्य निद्रा न तिष्ठति ॥२७॥

कश्यपात्रिवसिष्ठेन शाण्डिल्यभृगुगौतमैः ।
देवलेन भरद्वाजमाण्डव्येन सनातनैः ॥२८॥

पराशरेण मुनिना विश्वामित्रेण भार्गवैः ।
ऋषिप्रणीतशास्त्राणि बृहस्पतिसमीरितम् ॥२९॥

बृहस्पतिमतं पुण्यं पवित्रं पापनाशनम् ।
यः पठेत् परया भक्त्या दुःस्वप्नं नश्यति ध्रुवम् ॥३०॥ इति ।

बृहज्ज्योतिःसारे ।

बृहस्पतिप्रणीते स्वप्नाध्याये दुःस्वप्नशान्तिः—

दुः स्वप्नो दृश्यते येन तस्य निद्रां च कारयेत् ।
ततो नश्याशुभं तस्य शुभमेव भविष्यति ॥६०॥

रक्तचन्दनकाष्ठानि घृताक्तानि च होमयेत् ।
गायत्र्यष्टसहस्राणि तेन निद्रावतिष्ठते ॥६१॥

कश्यपात्रिवसिष्ठेन शाण्डिल्यभृगुगौतमैः ।
देवलेन भरद्वाजमाण्डव्येन सनातनैः ॥६२॥

पराशरेण मुनिना विश्वामित्रेण भार्गवैः ।
ऋषिप्रणीतशास्त्राणि बृहस्पतिसमीरितम् ॥६३॥

बृहस्पतिमतं पुण्यं पवित्रं पापनाशनम् ।
यः पठेत् परया भक्त्या दुःस्वप्नं नश्यति ध्रुवम् ॥६४॥

एतत् सुपुण्यं पापघ्नं धन्यं दुःस्वप्ननाशनम् ।
पठतां शृण्वतां चैव गुरोर्माहात्म्यमुत्तमम् ॥६५॥

गुरूक्तं प्रातरुत्थाय ये शृण्वन्ति पठन्ति च ।
दुःस्वप्नो नश्यते तेषां सुस्वप्नश्च भविष्यति ।।६६।।

बृहस्पतिकृतं पुण्यं प्रातरुत्थाय यः पठेत् ।
दुःस्वप्नो न भवेत्तस्य सुस्वप्नश्च भविष्यति ।।४०।।

परशुरामकल्पसूत्रे, सप्तमः खण्डः, वाराहीक्रमः २३० पृष्ठे—

सङ्कटेन समायोगं पश्यन् शान्ति समाचरेत् ।। इति ।

।। अथाशुभस्वप्नशान्तिः ।।

एवमशुभे शान्तिरुक्ता तत्रैवः—

दर्शने चाशुभस्याथ शान्तिं वक्ष्यामि संशृणु ।
मन्त्रराजं पठित्वा तु नृसिंहं प्रार्थ्य वै जपेत् ।।

नृसिंहबीजं देवेशि शुचि र्भूत्वा ह्युदङ्मुखः ।

प्रथमं मन्त्रराजजपः, ततः :—

नृसिंहाय नमो दोषान् जहि दुःस्वप्नजान् मम ।
यतः स्वप्नाधिपस्त्वं वै सर्वेषां फलदो मतः ।।

अनेन प्रार्थनं ततो नृसिंहबीजजपः । मन्त्रराजः कः ? नृसिंहबीजं किम् ? इति ।

तदुक्तं तन्त्रे ऊर्ध्वाम्नाये :—

उग्रवीरं चाथ महाविष्णुं चाथ ज्वलं च तम् ।
सर्वतश्च मुखं पश्चात् नृसिंहं भीषणं तथा ।।

भद्रं वै मृत्युमृत्युं वै नमाम्यहं रदनाक्षरः ।
मन्त्रराज इति ख्यातः सर्वत्रायं सुगोपितः ।।

नृसिंहबीजं देवेशि वक्ष्यामि प्राणवल्लभे ।
पृथ्वीस्पर्शयुता ज्वाला बिन्द्वाढ्येति समीरितम् ।।

नृसिंहमन्त्रोद्धारे च अथ पश्चात् तथा वै इत्यपहाय द्वात्रिंशदक्षरो मन्त्रः । पृथ्वी-क्ष, स्पर्शः-र, ज्वाला-औ, बिन्दुयोगे क्ष्रौं, इति ज्ञेयम् ।

अथ स्वप्नफलकालेयत्ता तत्रैवः—

वर्षेण च तदर्धेन तदर्धेन च मासतः ।
आद्ययामादितो ज्ञेयं फलं यामचतुष्टये ।। इति ।।

।। मनुजापिशयनधर्माः ।।

जपस्थाने शयनं कर्त्तव्यमिति उक्तम् । तत्र धर्माः—

भुक्त्वैव तु जपस्थानसमीपे शयनं चरेत् ।
मूलेन सप्ताभिमन्त्र्य प्रार्थयेत् देवतागणम् ।।

अथ शयनम्--आस्तरणम्. तदभिमन्त्रणं मूलेनः—

अत्र देवास्त्रयस्त्रिंशदाशापाला मरुद्गणाः ।
रक्षन्तु मां मन्त्रसिद्धयै यतन्तं विबुधेश्वराः ।।

महाविद्यासाधकस्य भूतबेतालकादयः ।
विघ्नं कुर्वन्ति सततं तेभ्यो रक्षतु मां शिवः ।।

भैरवा मातृसहिताः कोटिशः संचरन्ति वै ।
सिद्धिनाशाय लोकस्य तेभ्यो रक्षतु शंकरः ।।

सुप्तं सर्पारिरूपेण साधकं भीषयन्ति वै ।
सिद्धिलोपाय देवाद्याः शूलपाणिस्ततोऽवतु ।।

अनन्तमूर्ध्नि देव्येषा धरा यस्मात् प्रतिष्ठिता ।
इष्टार्थान् सम्यगाचक्ष्व नाशयानिष्टसूचकान् ।।

रुद्रमन्त्रं त्रिधा जप्त्वा विन्यस्याङ्गेषु सुस्वपेत् ।। इति ।

रुद्रमन्त्रोऽपि तत्रैवोक्तः—

तारश्च हृदयं वै च स्वप्नाधिपतये ततः ।
रुद्राय हृदयं मूर्ध्ना नृपवर्णः स्मृतो मनुः ।। इति ।

"ॐ नमः स्वप्नाधिपतये रुद्राय नमः स्वाहा" इति षोडशाक्षरो मन्त्रः ।

पाञ्चरात्रे परमसंहितायां ११ अध्याये दुःस्वप्नशान्त्युपायः—

अरिष्टकालमासन्नमुपलक्ष्य नरो बुधः ।
समाहितमना भूत्वा सत्त्वस्थोऽपि गतज्वरः ।। ६४ ।।

वैराग्यं परमास्थाय विषादभयवर्जितः ।
संत्यज्य सर्वकर्माणि मानसं योगमाचरेत् ॥ ६५ ॥

पुण्यस्थानमनुप्राप्य शान्तात्मा विजितेन्द्रियः ।
सर्वात्मना परं देवमभ्यर्च्य शरणं व्रजेत् ॥ ६६ ॥

वैष्णवान् योगनिष्ठांश्च पूजयित्वा विचार्य च ।
योगमार्गं समातिष्ठेदप्रमत्तः समाहितः ॥ ६७ ॥

गन्धर्वतन्त्रे २६ पटले :—

दृष्ट्वा दुःस्वप्नकं चैव होमात् सिद्धिमाप्नुयात् ।
शुभे शुभं वदेत् तस्य जुहुयादशुभे शतम् ।

अस्त्रेणेति क्रमात् प्रोक्तो विधिः शिष्याधिवासने ॥ ८५ ॥

स्वच्छन्दतन्त्रे ४ पटले :—

शुभास्तत्रानुमोद्यास्तु अशुभेषु तु होमयेत् ॥ २८ ॥

अष्टोत्तरशतं धाम्ना प्रायश्चित्ताद्विशुद्धचति ।
पूर्ववत्सकलीकृत्य विघ्नोच्चाटनरक्षणम् ॥ २९ ॥

वेष्टनं पूर्ववत् कुर्याच्छिवाभ्यः शिवहस्तकम् ।
लोकपालांस्तु संपूज्य शिवकुम्भं च स्थण्डिलम् ॥ ३० ॥

अग्निकार्यं यथापूर्वं पूर्णाहुतिप्रपातनम् ।
प्रायश्चित्तं ततः पश्चाद्दुःस्वप्नार्थं यदुक्तवान् ॥ ३१ ॥

मिलिन्दप्रश्ननामके बौद्धग्रन्थे दुःस्वप्ननिवारणार्थं बहव उपाया वर्णिताः । तत्र प्राधान्येन सर्वैः सह मैत्रीभावना दुःस्वप्ननाशने हेतुरिति वर्णितम् ।

अथ दुःस्वप्ने शान्तिः, महाकपिलपञ्चरात्रे—

दृष्ट्वा दुःस्वप्नकं चैव होमात् सिद्धिमवाप्नुयात् ।

पिङ्गलामते—

शुभं शुभे भवेत्तस्य जुहुयादशुभे शतम् ।
अस्त्रेणेति क्रमाद्विद्वान्…… … … … ॥ इति ॥

मेरुतन्त्रे—

सक्षीराणां घृताक्तानां समिधां च शतं हुनेत्।
पलाशानां तु गायत्र्या शूद्रःस्नात्वा हविष्यभुक् ॥

दीपं दद्याद्विप्रगृहे विष्णोर्गेहे शिवालये।
एवं दृष्ट्वाऽशुभं स्वप्नं गृह्णीयान्मनुमन्यथा ॥

गृहीते हानिरेव स्याद्वाऽन्यदेव विचिन्तयेत्।

नारदपञ्चरात्रे—

दृष्ट्वा समाचरेद्धोमं दन्तकाष्ठोदितं मुने।
केवलेनाथ वाऽज्येन सिंहमंत्रेण शान्तये ॥

अस्त्रमंत्रगायत्री-सिंहमन्त्राणां विकल्पः—

तारावज्रनखदंष्ट्रायुधाय महासिंहाय हूं फट् नमः।

इति श्रीभाष्याचार्य पं० हरिनामदत्तसूनु वि० प० देवीप्रसादशास्त्रिसङ्कलिते शतचण्डीयज्ञविधाने संगृहीताः स्वप्नकारिकाः।

## षड्विंशब्राह्मणे—

'षड्विंशब्राह्मण' ग्रन्थस्य पञ्चमप्रपाठके अद्भुतशान्तिप्रकरणे चतुर्थखण्डे स्वप्नजन्य-दोषनिवृत्त्यर्थं शान्तिविधौ याम्यनिमित्तहोमविशेष उक्तः, स यथातथमिह लिख्यते—

स दक्षिणां दिशमन्वावर्ततेऽथ यदाऽस्य प्रजया पशुषु शरीरे वाऽरिष्टानि प्रादुर्भ-वन्ति व्याधयो वा अनेकविधा अतिस्वप्नमस्वप्नमतिभोजमभोजनमालस्यव्रणमजीर्णं-निद्राण्येवमादीनि तान्येतानि सर्वाणि यमदैवतान्यद्भुतानि प्रायश्चित्तानि भवन्ति नाके सुपर्णमिति स्थालीपाकं हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति यमाय स्वाहा प्रेताधि-पतये स्वाहा दण्डयाणये स्वाहेश्वराय स्वाहा सर्वपापप्रशमनाय स्वाहेति व्याहृतिभि-र्हुत्वाऽथ साम गायेत्। ५।४

यद्यपि अस्मिन्नेव प्रपाठके दशमे खण्डे विहितवैष्णवाद्भुतहोमविशेषशान्ति-प्रकरणे स्वप्नस्य चर्चा नास्ति किन्तु अस्य खण्डस्य सायणभाष्ये भाष्यकृता स्वप्ना-वस्थाया अपि उल्लेखः कृतः। तस्माज्ज्ञायते यत्तस्मै स्वप्नदोषशान्तये वैष्णवहोमोऽपि रोचते। अतः खरमहिषयानारोहणादिदर्शने वैष्णवहोमः कर्तव्यः, सामान्ये याम्य-होमः।

## श्रीमद्भागवतीयं गजेन्द्रमोक्षोपाख्यानम्

श्रीशुक उवाच—

आसीद् गिरिवरो राजंस्त्रिकूट इति विश्रुतः।
क्षीरोदेनावृतः श्रीमान् योजनायुतमुच्छ्रितः ॥१॥

तावता विस्तृतः पर्यक् त्रिभिः शृंगैः पयोनिधिम्।
दिशः खं रोचयन्नास्ते रौप्यायसहिरण्मयैः ॥२॥

अन्यैश्च ककुभः सर्वा रत्नधातुविचित्रितः।
नानाद्रुमलतागुल्मैर्निर्घोषैर्निर्झराम्भसाम् ॥३॥

स चावनिज्यमानाङ्घ्रिः समन्तात्पय ऊर्मिभिः।
करोति श्यामलां भूमिं हरिन्मरकताश्मभिः ॥४॥

सिद्धचारणगन्धर्वविद्याधरमहोरगैः।
किन्नरैरप्सरोभिश्च क्रीडद्भिर्जुष्टकन्दरः ॥५॥

यत्र संगीतसन्नादैर्नदद्गुहममर्षया।
अभिगर्जन्ति हरयः श्लाघिनः परशंकया ॥६॥

नानारण्यपशुव्रातसंकुलद्रोण्यलंकृतः।
चित्रद्रुमसुरोद्यानकलकंठविहंगमः ॥७॥

सरित्सरोभिरच्छोदैः पुलिनैर्मणिवालुकैः।
देवस्त्रीमज्जनामोदसौरभाम्ब्वनिलैर्युतः ॥८॥

तस्य द्रोण्यां भगवतो वरुणस्य महात्मनः।
उद्यानमृतुमन्नाम आक्रीडं सुरयोषिताम् ॥९॥

सर्वतोऽलंकृतं दिव्यैर्नित्यं पुष्पफलद्रुमैः।
मन्दारैः पारिजातैश्च पाटलाशोकचम्पकैः।
चूतैः प्रियालैः पनसैराम्रैराम्रातकैरपि ॥१०॥

क्रमुकैर्नालिकेरैश्च खर्जूरैर्बीजपूरकैः।
मधूकैः सालतालैश्च तमालै रसनार्जुनैः ॥११॥

अरिष्टोदुम्बरप्लक्षैर्वटैः किंशुकचन्दनैः ।
पिचुमन्दैः कोविदारैः सरलैः सुरदारुभिः ॥१२॥

द्राक्षेक्षुरंभाजम्बूभिर्बदर्यक्षाभयामलैः ।
विल्वैः कपित्थैर्जम्बीरैर्वृतो भल्लातकादिभिः ॥१३॥

तस्मिन् सरःसु विपुलं लसत्काञ्चनपङ्कजम् ।
कुमुदोत्पलकह्लारशतपत्रश्रियोर्जितम् ॥१४॥
मत्तषट्पदनिर्घुष्टं शकुन्तैश्च कलस्वनैः ॥१४॥

हंसकारण्डवाकीर्णं चक्राह्वैः सारसैरपि ।

जलकुक्कुटकोयष्टिदात्यूहकुलकूजितम् ॥१५॥

मत्स्यकच्छपसंचारचलत्पद्मरजः पयः ।
कदम्बवेतसनलनीपवंजुलकैर्वृतम् ॥१६॥

कुन्दैः कुरवकाशोकैः शिरीषैः कुटजेंगुदैः ।
कुब्जकैः स्वर्णयूथीभिर्नागपुन्नागजातिभिः ॥१७॥

मल्लिकाशतपत्रैश्च माधवीजालकादिभिः ।
शोभितं तीरजैश्चान्यैर्नित्यर्त्तुभिरलं द्रुमैः ॥१८॥

तत्रैकदा तद्गिरिकाननाश्रयः करेणुभिर्वारणयूथपश्चरन् ।
सकटकान् कीचकवेणुवेत्रवद्विशालगुल्मं प्ररुजन् वनस्पतीन् ॥१९॥

यद्गन्धमात्राद्धरयो गजेन्द्रा व्याघ्रादयो व्यालमृगाः सखड्गाः ।
महोरगाश्चापि भयाद्द्रवन्ति सगौरकृष्णाः शरभाश्चमर्यः ॥२०॥

वृका वराहा महिषर्क्षशल्या गोपुच्छशालावृकमर्कटाश्च ।
अन्यत्र क्षुद्रा हरिणाः शशादयश्चरन्त्यभीता यदनुग्रहेण ॥२१॥

स घर्मतप्तः करिभिः करेणुभिर्वृतो मदच्युत्कलभैरनुद्रुतः ।
गिरिं गरिम्णा परितः प्रकम्पयन्निषेव्यमाणोऽलिकुलैर्मदाशनैः ॥२२॥

सरोऽनिलं पंकजरेणुरूषितं जिघ्रन् विदूरान् मदविह्वलेक्षणः ।
वृतः स्वयूथेन तृषार्दितेन तत्सरोवराभ्याशमथागमद्द्रुतम् ॥२३॥

विगाह्य तस्मिन्नमृताम्बु निर्मलं हेमारविन्दोत्पलरेणुवासितम् ।
पपौ निकामं निजपुष्करोद्धृतमात्मानमद्भिः स्नपयन् गतक्लमः ॥२४॥

स्वपुष्करेणोद्धृतशीकराम्बुभिर्निपाययन् संस्नपयन् यथा गृही ।
घृणी करेणुः कलभांश्च दुर्मदो नाचष्ट कृच्छ्रं कृपणोऽजमायया ॥२५॥

तं तत्र कश्चिन्नृप दैवचोदितो ग्राहो बलीयांश्चरणे रुषाऽग्रहीत् ।
यदृच्छयैवं व्यसनं गतो गजो यथा बलं सोऽतिबलो विचक्रमे ॥२६॥

तथाऽऽतुरं यूथपतिं करेणवो विकृष्यमाणं तरसा बलीयसा ।
विचुक्रुशुर्दीनधियोऽपरे गजाः पार्ष्णिग्रहास्तारयितुं न चाशकन् ॥२७॥

नियुध्यतोरेवमिभेन्द्रनक्रयोर्विकर्षतोरन्तरतो बहिर्मिथः ।
समाः सहस्रं व्यगमन् महीपते सप्राणयोश्चित्रममंसतामराः ॥२८॥

ततो गजेन्द्रस्य मनोबलौजसां कालेन दीर्घेण महानभूद्व्ययः ।
विकृष्यमाणस्य जलेऽवसीदतो विपर्ययोऽभूत् सकलं जलौकसः ॥२९॥

इत्थं गजेन्द्रः स यदाप संकटं प्राणस्य देही विवशो यदृच्छया ।
अपारयन्नात्मविमोक्षणे चिरं दध्याविमां बुद्धिमथाभ्यपद्यत ॥३०॥

नमामि मे ज्ञातय आतुरं गजाः कुतः करिण्यः प्रभवन्ति मोचितुम् ।
ग्राहेण पाशेन विधातुरावृतोऽप्यहं च तं यामि परं परायणम् ॥३१॥

यः कश्चनेशो बलिनोऽन्तकोरगात् प्रचण्डवेगादभिधावतो भृशम् ।
भीतं प्रपन्नं परिपाति यद्भयान्मृत्युः प्रधावत्यरणं तमीमहि ॥३२॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे मन्वन्तरानुवर्णने गजेन्द्रोपाख्याने द्वितीयोऽध्यायः ॥२॥

श्रीशुक उवाच—

एवं व्यवसितो बुद्धया समाधाय मनो हृदि ।
जजाप परमं जाप्यं प्राग्जन्मन्यनुशिक्षितम् ॥१॥

गजेन्द्र उवाच—

ओं नमो भगवते तस्मै यत एतच्चिदात्मकम् ।
पुरुषायादिबीजाय परेशायाभिधीमहि ॥२॥

यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम् ।
योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयंभुवम् ॥३॥

यः स्वात्मनीदं निजमाययार्पितं क्वचिद्विभातं क्व च तत्तिरोहितम् ।
अविद्धदृक्साक्ष्युभयं तदीक्षते स आत्ममूलोऽवतु मां परात्परः ॥४॥

कालेन पञ्चत्वमितेषु कृत्स्नशो लोकेषु पालेषु च सर्वहेतुषु ।
तमस्तदासीद् गहनं गभीरं यस्तस्य पारेऽभिविराजते विभुः ॥५॥

न यस्य देवा ऋषयः पदं विदुर्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम् ।
यथा नटस्याकृतिभिर्विचेष्टतो दुरत्ययानुक्रमणः स माऽवतु ॥६॥

दिदृक्षवो यस्य पदं सुमंगलं विमुक्तसंगा मुनयः सुसाधवः ।
चरन्त्यलोकव्रतमव्रणं वने भूतात्मभूताः सुहृदः स मे गतिः ॥७॥

न विद्यते यस्य च जन्मकर्म वा न नामरूपे गुणदोष एव वा ।
तथापि लोकाप्यय संभवाय यः स्वमायया तान्यनुकालमृच्छति ॥८॥

तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये ।
अरूपायोरुरूपाय नम आश्चर्यकर्मणे ॥९॥

नम आत्मप्रदीपाय साक्षिणे परमात्मने ।
नमो गिरां विदूराय मनसश्चेतसामपि ॥१०॥

सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता ।
नमः कैवल्यनाथाय निर्वाणसुखसंविदे ॥११॥

नमः शान्ताय घोराय मूढाय गुणधर्मिणे ।
निर्विशेषाय साम्याय नमो ज्ञानघनाय च ॥१२॥

क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे ।
पुरुषायात्ममूलाय मूलप्रकृतये नमः ॥१३॥

सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्यहेतवे ।
असताच्छाययोक्ताय सदाभासाय ते नमः ॥१४॥

नमो नमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाय ।
सर्वागमाम्नाय महार्णवाय नमोपवर्गाय परायणाय ॥१५॥

गुणारणिच्छन्नचिदूष्मपाय तत्क्षोभविस्फूर्जितमानसाय ।
नैष्कर्म्यभावेन विवर्जितागमस्वयंप्रकाशाय नमस्करोमि ॥१६॥

मादृक् प्रपन्न पशुपाशविमोक्षणाय मुक्ताय भूरिकरुणाय नमोऽलयाय ।
स्वांशेन सर्वतनुभृन्मनसि प्रतीतप्रत्यग्दृशे भगवते बृहते नमस्ते ॥१७॥

आत्मात्मजाप्तगृहवित्तजनेषु सक्तैर्दुष्प्रापणाय गुणसंगविवर्जिताय ।
मुक्तात्मभिः स्वहृदये परिभाविताय ज्ञानात्मने भगवते नम ईश्वराय ॥१८॥

यं धर्मकामार्थविमुक्तिकामा भजन्त इष्टां गतिमाप्नुवन्ति ।
किन्त्वाशिषो रात्यपि देहमव्ययं करोतु मेऽदभ्रदयो विमोक्षणम् ॥१९॥

एकान्तिनो यस्य न कञ्चनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्नाः ।
अत्यद्भुतं तच्चरितं सुमंगलं गायन्त आनन्दसमुद्रमग्नाः ॥२०॥

तमक्षरं ब्रह्म परं परेशमव्यक्तमाध्यात्मिकयोगगम्यम् ।
अतीन्द्रियं सूक्ष्ममिवातिदूरमनन्तमाद्यं परिपूर्णमीडे ॥२१॥

यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः ।
नामरूपविभेदेन फल्ग्व्या च कलया कृताः ॥२२॥

यथार्चिषोऽग्नेः सवितुर्गभस्तयो निर्यान्ति संयान्त्यसकृत्स्वरोचिषः ।
तथा यतोऽयं गुणसंप्रवाहो बुद्धिर्मनः खानि शरीरसर्गाः ॥२३॥

स वै न देवासुरमर्त्यतिर्यङ्न स्त्री न षण्ढो न पुमान्न जन्तुः ।
नायं गुणः कर्म न सन्न चासन्निषेधशेषो जयतादशेषः ॥२४॥

जिजीविषे नाहमिहामुया किमन्तर्बहिश्चावृतयेभयोन्या ।
इच्छामि कालेन न यस्य विप्लवस्तस्यात्म लोकावरणस्य मोक्षम् ॥२५॥

सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसम् ।
विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम् ॥२६॥

योगरन्धितकर्माणो हृदि योगविभाविते ।
योगिनो यं प्रपश्यन्ति योगेशं तं नतोऽस्म्यहम् ॥२७॥

नमो नमस्तुभ्यमसह्यवेगशक्तित्रयायाखिलधीगुणाय ।
प्रपन्नपालाय दुरन्तशक्तये कदिन्द्रियाणामनवाप्यवर्त्मने ॥२८॥

नायं वेद स्वमात्मानं यच्छक्त्याऽहं धिया हतम् ।
तं दुरत्ययमाहात्म्यं भगवन्तमितोऽस्म्यहम् ॥२९॥

श्रीशुक उवाच

एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाऽभिमानाः ।
नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीत् ॥३०॥

तं तद्वदार्तमुपलभ्य जगन्निवासः स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः ।
छन्दोमयेन गरुडेन समुह्यमानश्चक्रायुधोऽभ्यगमदाशु यतो गजेन्द्रः ॥३१॥

सोऽन्तः सरस्युरुबलेन गृहीत आर्तो दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम् ।
उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्रान्नारायणाखिलगुरो भगवन्नमस्ते ॥३२॥

तं वीक्ष्य पीडितमजः सहसाऽवतीर्य स ग्राहमाशु सरसः कृपयोज्जहार ।
ग्राहाद् विपाटितमुखादरिणा गजेन्द्रं संपश्यतां हरिरमूमुचदुच्छ्रियाणाम् ॥३३॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे गजेन्द्रमोक्षणे तृतीयोऽध्यायः ॥

श्रीशुक उवाच

तदा देवर्षिगन्धर्वा ब्रह्मेशानपुरोगमाः ।
मुमुचुः कुसुमासारं शंसतः कर्म तद्धरेः ॥१॥

नेदुर्दुन्दुभयो दिव्या गन्धर्वा ननृतुर्जगुः ।
ऋषयश्चारणाः सिद्धास्तुष्टुवुः पुरुषोत्तमम ॥२॥

योऽसौ ग्राहः स वै सद्यः परमाश्चर्यरूपधृक् ।
मुक्तो देवलशापेन हूहूर्गन्धर्वसत्तमः ॥३॥

प्रणम्य शिरसाऽधीशमुत्तमश्लोकमव्ययम् ।
अगायत यशोधाम कीर्तन्यगुणसत्कथम् ॥४॥

सोऽनुकम्पित ईशेन परिक्रम्य प्रणम्य तम् ।
लोकस्य पश्यतो लोकं स्वमगान्मुक्तकिल्बिषः ॥५॥

गजेन्द्रो भगवत्स्पर्शाद् विमुक्तोऽज्ञानबन्धनात् ।
प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ॥६॥

स वै पूर्वमभूद्राजा पाण्ड्यो द्रविडसत्तमः ।
इन्द्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः ॥७॥

स एकदाऽऽराधनकाल आत्मवान् गृहीतमौनव्रत ईश्वरं हरिम् ।
जटाधरस्तापस आप्लुतोऽच्युतं समर्चयामास कुलाचलाश्रमः ॥८॥

यदृच्छया तत्र महायशा मुनिः समागमच्छिष्यगणैः परिश्रितः ।
तं वीक्ष्य तूष्णीमकृतार्हणादिकं रहस्युपासीनमृषिश्चुकोप ह ॥९॥

तस्मा इमं शापमदादसाधुरयं दुरात्माऽकृतबुद्धिरद्य ।
विप्रावमन्ता विशतां तमोऽन्धं यथा गजः स्तब्धमतिः स एव ॥१०॥

श्रीशुक उवाच—

एवं शप्त्वा गतोऽगस्त्यो भगवान्नृप सानुगः ।
इन्द्रद्युम्नोऽपि राजर्षिर्दिष्टं तदुपधारयन् ॥११॥

आपन्नः कौञ्जरीं योनिमात्मस्मृतिविनाशिनीम् ।
हर्यर्चनानुभावेन यद् गजत्वेऽप्यनुस्मृतिः ॥१२॥

एवं विमोक्ष्य गजयूथपमब्जनाभस्तेनापि पार्षदगतिं गमितेन युक्तः ।
गन्धर्वसिद्धविबुधैरुपगीयमानकर्माद्भुतं स्वभवनं गरुडासनोऽगात् ॥१३॥

एतन्महाराज तवेरितो मया कृष्णानुभावो गजराजमोक्षणम् ।
स्वर्ग्यं यशस्यं कलिकल्मषापहं दुःस्वप्ननाशं कुरुवर्य शृण्वताम् ॥१४॥

यथानुकीर्तयन्त्येतच्छ्रेयस्कामा द्विजातयः ।
शुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशान्तये ॥१५॥

इदमाह हरिः प्रीतो गजेन्द्रं कुरुसत्तम ।
शृण्वतां सर्वभूतानां सर्वभूतमयो विभुः ॥१६॥

श्रीभगवानुवाच—

ये मां त्वां च सरश्चेदं गिरिकन्दरकाननम् ।
वेत्रकीचकवेणूनां गुल्मानि सुरपादपान् ॥१७॥

शृंगाणीमानि धिष्ण्यानि ब्रह्मणो मे शिवस्य च ।
क्षीरोदं मे प्रियं धाम श्वेतद्वीपं च भास्वरम् ॥१८॥

श्रीवत्सं कौस्तुभं मालां गदां कौमोदकीं मम ।
सुदर्शनं पाञ्चजन्यं सुपर्णं पतगेश्वरम् ॥१९॥

शेषञ्च मत्कलां सूक्ष्मां श्रियं देवीं मदाश्रयाम् ।
ब्रह्माणं नारदमृषिं भवं प्रह्लादमेव च ॥२०॥

मत्स्यकूर्मवराहाद्यैरवतारैः कृतानि मे।
कर्माण्यनन्तपुण्यानि सूर्यं सोमं हुताशनम् ॥२१॥

प्रणवं सत्यमव्यक्तं गोविप्रान् धर्ममव्ययम्।
दाक्षायणीर्धर्मपत्नीः सोमकश्यपयोरपि ॥२२॥

गङ्गां सरस्वतीं नन्दां कालिन्दीं सितवारणम्।
ध्रुवं ब्रह्मऋषीन् सप्त पुण्यश्लोकांश्च मानवान् ॥२३॥

उत्थायापररात्रान्ते प्रयताः सुसमाहिताः।
स्मरन्ति मम रूपाणि मुच्यन्ते ह्येनसोऽखिलात् ॥२४॥

ये मां स्तुवन्त्यनेनाङ्ग प्रतिबुध्य निशात्यये।
तेषां प्राणात्यये चाहं ददामि विमलां मतिम् ॥२५॥

श्रीशुक उवाच—

इत्यादिश्य हृषीकेशः प्रध्माय जलजोत्तमम्।
हर्षयन् विबुधानीकमारुरोह खगाधिपम् ॥२६॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे गजेन्द्रमोक्षणं नाम चतुर्थोऽध्यायः ॥ ४ ॥

## आयुर्वेदे स्वप्नविचारः

आयुर्वेदं[1] समालम्ब्य हेतून् भेदान् फलाफले।
स्वप्नानां विमृशामीह सर्वोपकृतिहेतवे ॥

आयुर्वेदे स्वप्नानां सप्तविधत्वं प्रतिपाद्य तत्राद्यानां पञ्चानां दृष्टश्रुतानुभूतकल्पितप्रार्थितानामफलत्वं[2] निर्दिश्य भाविकदोषजयोरनिषेधमुखेन साफल्यं सूचितम्। तत्र हि शुभाशुभफलसूचकस्य भाविकस्य सफलत्वेऽपि तत्रैतच्छास्त्रदृष्ट्या किमपि न वक्तव्यं यतो हि भाविके स्वप्नेऽदृष्टमेव केवलं निबन्धनं तन्निमित्तस्यादृष्टस्य प्रतीकारोपाय आयुर्वेदद्वारा कथमपि न संभवेद् येन भाविकः स्वप्नो नोदीयात्। मास्तु तच्चिकित्सासाध्योपायः किन्तु अन्यशास्त्रोक्तोपायस्तु तन्निवृत्तये वर्तत एव परं स नैतदीयविषयः। अतोऽत्र विचारं परित्यज्य सप्तमे दोषजे स्वप्ने विचारः क्रियते। दोषजस्वप्नस्य कारणं त्वित्थम्—

१. च. इ. प्र. ५।४२। अ. हृ. शा. स्था. ६।६०-६१।
२. च. इ. प्र. ५।४३। अ. हृ. शा. स्था. ६।६१।

मनोवहानां पूर्णत्वाद् दोषैरतिबलैस्त्रिभिः ।
स्रोतसां दारुणान् स्वप्नान् काले पश्यति दारुणे[१] ॥

अस्यार्थं चक्रपाणिराह—मनोवहानि स्रोतांसि यद्यपि पृथङ् नोक्तानि तथापि 'मनसः केवलमेवेदं शरीरमयनभूतम्' इत्यभिधानात् सर्वशरीरस्रोतांसि गृह्यन्ते। विशेषेण तु हृदयाश्रितत्वान्मनसस्तदाश्रिता दश धमन्यो मनोवहा अभिधीयन्ते। त्रिभिरिति त्रिभिरपीत्यर्थः, तेन च पृथक् चापि दोषैः पूरणं ज्ञेयम् इति ।

एवं हेतुं प्रदर्श्यापि तेन तत्प्रतीकाराय किमपि चिकित्सादिकं नोक्तम् । यथा शकुनादिकं स्वयं किमपि कर्तुमक्षमं सत् भाविशुभाशुभसूचकं तस्मिञ्छास्त्रेप्युपनिबद्धा दोषजदारुणाः स्वप्ना अपि भाविरोगाणां पूर्वसूचका अथ च पूर्वरूपा एव । एवं रोगिणां मृत्युसूचका आरोग्यसूचका च स्वस्थस्य शुभसूचकाः । तदुक्तम्—

पूर्वरूपैकदेशास्तु वक्ष्यामोऽन्यान् सुदारुणान् ।
ये रोगाननुबध्नन्ति मृत्युर्यैरनुबध्यते ॥[२]

य इमांश्चापरान् स्वप्नान् दारुणानुपलक्षयेत् ।
.... ... .... .... क्लेशाय महतेऽपि वा ॥[३]

तथा—

इत्येते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् ।[४]

स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति ।[५]

रोगी स भूयादारोग्यः स्वस्थो धनमवाप्नुयात् ।[६]

एते च स्वप्ना न केवलं स्वदृष्टा एव अपि तु परदृष्टा वा सूचका भवन्ति । तदुक्तम्—

सुहृदो यांश्च पश्यन्ति व्याधितो वा स्वयं तथा ।[७]

इत्थं स्वप्नैश्चिकित्स्यानां लक्षणं विचार्यैव चिकित्सा कार्या भिषग्वरैरित्यादेश आचार्याणाम्—

---

१. च. इ. प्र. ५।४० । २. च. इ. प्र. ५।५ । ३. च. इ. प्र. ५।२६ । ४. च. इ. प्र. ५।३६ । अ. हृ. शा. ६।३६ । ५. सु. सु. स्था. २९।६६ । ६. शा. सं. ३।२१ । ७. सु. सू. स्था. २९।५५ ।

एतानि पूर्वरूपाणि यः सम्यगवबुध्यते ।
स एषामनुबन्धं च फलं च ज्ञातुमर्हति ॥[1]

पूर्वरूपाण्यथ स्वप्नान् य इमान् वेत्ति दारुणान् ।
न स मोहादसाध्येषु कर्माण्यारभते भिषक् ॥[2]

एवं रूपान् शुभान् स्वप्नान् यः पश्येद् व्याधितो नरः ।
स दीर्घायुरिति ज्ञेयस्तस्मै कर्म समाचरेत् ॥[3]

एष च स्वप्नग्रामः क्वचिन्निष्फलोऽपि भवति स्वस्थे जने, केवलं संशयमेव प्रसूते । तदुक्तम्—

अरोगः संशयं गत्वा कश्चिदेव प्रमुच्यते ।[4]

एतदेवाक्षरशोऽष्टाङ्गहृदयेऽपि—

अरोगः संशयं प्राप्य कश्चिदेव प्रमुच्यते ।[5]

किन्तु नायं सार्वत्रिकः कश्चिन्नियमोऽस्ति ।

एवं स्वप्नस्य कारणं फलानुसन्धित्वञ्च प्रदर्श्य स्वप्नजन्यफलानि प्रतीकर्तुं शान्त्याद्युपायोऽप्युपन्यस्तः, यो हि शान्त्यध्याये निरूपितो मया, किन्तु तच्चिकित्सा काचन नोक्ताऽस्मिन् चिकित्साशास्त्रे । तत्र शङ्के किमेतस्यैतच्छास्त्रदृष्ट्याऽस्त्युपायो न वेति । विचारे क्रियमाणे सति इत्थमायाति यदस्योद्भवो मनोवहनाडीनां त्रिविध-दोषाधिक्यपूर्णत्वात् क्वचनाजीर्णत्वाद् भोजनविपरिणमत्वाच्चेत्तदानीं दोषापनुत्तौ स्वप्नाऽनुदयोऽपि भवितुमर्हति । यद्यपि प्राचीनवीनायुर्वेदग्रन्थेषु स्वप्नप्रतीकाराय काचन चिकित्सासरणिर्दृष्टिपथे नागच्छति, तथापि तज्जनकदोषाणामपहरणाय स्वानु-भवावलम्बितनवीनरोगोपयुक्तौषधवद् भिषजामत्रापि पद्धतिर्भवितुं शक्नोत्येव । सा चेत्थम्—यदि त्रिदोषाः सन्ति तदा तेषामुपशमनाय-कस्तूरीभैरव कालकूट-चन्द्रोदय-अभ्रक-ताम्रभस्म-आनन्दभैरव-सन्निपातभैरव-संशमनीवटी, इत्याद्यौषधानां समर्थयन्ते । एवं काष्ठौषधिषु त्रिफलापि त्रिदोषशान्त्यर्थं सफला, रजतस्वर्णं वङ्गादिभि-श्चापि अनुपानभेदेन त्रिदोषशान्तिः । भिन्ने भिन्ने च दोषे जाते त्वेष यत्नः कार्यः—वातप्रशमने हरीतकी प्रसिद्धा गोदन्ती च । पित्तप्रशमने आमलकप्रयोगः, पर्पटः ( पीत्तपापड़ा ), हरिदश्म ( जहरमुहरा खताई ) धान्यकम् ( धनिया ), चन्दनं रक्तचन्दनञ्चापि, कफप्रशमने विभीतकः गोदन्ती, जातिफलम्, कटुफलम्, आर्द्रकम्

१. सु. सू. स्था. २९।२१ । २. च. इ. ५।४६ । ३. सु. सू. २९।८१ । ४. च. इ. ५।३९ । ५. शा. ६।६० ।

इत्यौषधान्युपयुज्यन्ते। एतैश्चौषधैर्दोषस्य साम्ये जाते दोषजन्यस्वप्नानामपि शान्तिर्भवत्येव। दृश्यते चापि यदा ह्युदरे वातपित्तप्रकोपवशात् पाचनाभावे संजाते तदा शिरसि संतापादौ स्वप्नाधिक्यम्। तदर्थमौषधं करणीयम्। आहारविहारादिभिरपि दोषनिवारणं जायते तद् यथा - पैत्तिकीप्रकृतिर्यदि पुरुषस्य तदा तच्छान्त्यर्थं यवगोधूममुद्गा भोजने प्रयोक्तव्याः। कफप्रकृतौ गोधूमकरपट्टिकाः (रामदाना) आदिपदार्थाः उष्णञ्च भोजनम् सुखं कुर्वन्ति। वातप्रकृतौ गोधूममिश्रितचणकाः आढकी, भूकन्दप्रभृतयः प्रयोज्याः। यद्यपि इमाः प्रकृतयो जन्मजाताः शरीरान्तं यावत् प्राक्तनकर्मविपाकादपरिवर्तनीयाः सन्तिष्ठन्ते, तथापि उचितानुचिताचरणाहारविहारैस्तत्राधिक्यमौग्र्यं साम्यं न्यूनता ह्रासता तु आगच्छत्येव। एषैव प्रकृतिर्वातात्मिका सात्त्विकी पित्तात्मिका राजसी कफात्मिका तामसीति ज्ञेया। न इतो विलक्षणा सांख्यशास्त्रोदिता सत्त्वरजस्तमोमयी प्रकृतिः नापि ज्योतिःशास्त्रादिता ग्रहानुकूला प्रकृतिः, अपित्वेकैव केवलं स्वस्वप्रक्रियायां संज्ञायां वा वैविध्यं न तु तत्कारणे। समेषामेषामदृष्टवादिनामेकमत्यं प्रकृतिनिदानेऽदृष्टेऽस्ति। अदृष्टानङ्गीकारिणां मतेनाप्यविरुद्धमेव। यतो हि तैरासां प्रकृतीनां कारणं स्वभावोऽङ्गीक्रियते ते यदि स्वभावमेवादृष्टत्वेनानुमन्यन्ते तर्हि संज्ञाभेदं विहाय को भेदः। यद्यपीमे सर्वे कफादयो धातवः, सत्त्वादयो गुणा ग्रहयोगाश्च सर्वत्र न्यूनाधिकभावेन वर्तन्ते किन्त्वंशाधिक्यात् तत्तत्प्रकृतिव्यवहारः। ननु दुस्त्यजा प्रकृतिः, प्रकृतिं यान्ति भूतानि इत्युक्त्या प्रकृतेरविचलत्वाद् एतदुक्तोपायाचरणस्य साफल्यं किमिति चेत्सत्यं यथा सांख्यस्य ज्योतिषश्चोपायसाफल्यं तथैवात्रापि ज्ञेयम्, अपि चागन्तुकदोषनिवारकत्वेनास्य साफल्यात्। एवं च भाविन्युपयोगित्वात्।

स्वप्नानामाशुविलम्बफलप्रदत्वे यामादिभेदेन स्वप्नफलावाप्तौ यो हि वर्षादिकालनियमो ग्रन्थकारैरुक्तस्तत्र प्रतियामं यथास्थिति मानसी व्यवस्थितिरेव हेतुः। शयनानन्तरमुत्तरोत्तरमनोविशुद्धत्वेन तत्कल्पितकल्पनाजालस्य नैकट्येन साफल्यं भवति। दृश्यते च शुद्धे मनसि तत्कल्पितकल्पनाया आशुतरफलभावो यथा 'श्वो मे भ्राता आगन्ता' इति।

## वेदेषु स्वप्नविमर्शः

वेदेषु स्वप्नसंबन्धे पर्याप्तरूपेण पर्यालोचनं वर्तते। तत्रस्वप्नसामर्थ्यं तदुद्गमप्रक्रिया सामग्रीस्वरूपोपगूहनम् स्वप्नस्य शरीराधिष्ठातृत्वम् भद्राभद्रात्मकस्वप्नवर्णनम् तज्ज्ञानस्यावश्यता, मानवप्रकृतिः, दुःस्वप्ननिवारणोपाया प्रार्थना चेत्यादि विवेचितं तदेवेह संक्षेपेणोल्लिख्यते।

स्वप्नस्तु मानसप्रपञ्चः, मनसो नानाविधव्यापारेषु स्वप्नोऽप्येको व्यापारः। मनश्चाचिन्त्यशक्तिसम्पन्नम् तन्मतो दिवा रात्रौ वा विलक्षणया स्वशक्त्या विविधं भूतभविष्यात्मकं विचित्रं प्रपञ्चं सृजति। एवं भूतो रचितः सर्गः स्वप्न इत्याख्यायते। अय च स्वप्नो यमलोकेन नियुक्तः शरीराधिष्ठाता, तदधीनान्येव शरीरेन्द्रियाणि तदानीं सन्ति। तदुक्तमाथर्वणसूक्ते -'यमस्य लोकादध्याबभूविथ' (१९।५६।१)।

स च स्वरूपेण मिथ्यात्मक एवेति ध्वन्यते श्रुत्या—

अध स्वप्नस्य निर्विदेऽभुञ्जतश्च रेवतः।
उभा ता बस्रि नश्यतः। (ऋ. १।१२०।१२)

जीव एव स्वप्नद्रष्टा जीवश्चान्तःकरणावच्छिन्नं चैतन्यमेव। यावता हि सीमा मनसः तावत्येव स्वप्नस्यापि। मनसो हि न किमपि दूरम् सर्वमविप्रकृष्टमेव।

स्वप्नो द्विविधो जाग्रत्स्वप्नः सुप्तस्वप्नश्च। एतावेव दिवास्वप्नरात्रिस्वप्नेति नामभ्यामुच्येते। चतुर्धा विभागोऽप्यस्ति जाग्रत्स्वप्नः सुप्तस्वप्नो दिवास्वप्नो रात्रिस्वप्नश्च तथा चाह श्रुतिः—'यज्जाग्रद् यत्सुप्तो यद्दिवा यन्नक्तम्' (अ० १०।७।४) कालदृष्ट्या दिवारात्रिनाम्ना स्वप्नस्य विभागः, अवस्थादृष्ट्या जाग्रत्सुप्तेति नाम्ना विभागो वर्तते। दिवास्वप्ने इन्द्रियाणां बुद्धेश्च बाह्यजगतः संबन्धविच्छेदेऽपि मानसव्यवहाराः स्वप्नाय प्रवर्तन्ते रात्रिस्वप्ने निद्रायै। सबन्धविच्छेदेऽपि मात्राभेदो वर्तते। केचन स्वप्ना भूतकालसंबद्धाः केचन भविष्यकालसंबद्धाश्च। एते सर्वेपि स्वप्ना भद्रा अभद्राश्च भवन्ति तत्र भद्रस्वप्ना अशुभान् दोषान्, अभद्रस्वप्नाः शुभान् गुणान् हन्ति। एवं भद्रेषु स्वप्नेषु देवानां प्राबल्यम्, अभद्रेषु असुराणां प्राबल्यं भवति।

तथा—

देवानां पत्नीनां गर्भ यमस्य कर यो भद्रः स्वप्न।
स मम यः पापस्तद् द्विषते प्रहिण्मः।

---

१. यजुर्वेदे—यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवेति दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु।

अत्र दूरपदेन पदार्थज्ञान-प्रदेश-कालेति त्रितयावधिदूरं ग्राह्यम्।

अपि च—

येनेदं भूतं भुवनं भविष्यत् परिगृहीतममृतेन सर्वम्।
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयते वाजिन इव॥
ऋग्वेदेऽपि १०।८१।४ मन्त्रेऽस्ति।

मा तुष्टानामसि कृष्णशकुनेर्मुखम् ॥ ( अ० वे० १९।५७।३ )

दुःस्वप्नस्य प्रभावो न केवल मनुष्योपरि अपि तु गवादिपशुषु गृहेष्वपि जायते स्पष्टं चैतत् अथर्वणि—

तं त्वां स्वप्न तथा संविद्म स त्वं स्वप्नाश्व इव कायमश्व इव नीनाहम् ।
अनास्माकं देवपीयुं पियारुं वप यदस्मासु दुःष्वप्न्यं यद् गोषु यच्च नो गृहे ॥
( १६।५६।४ )

स्वप्नो बलवान् भवति तत्र कृतमपि पापं स्वप्नद्रष्टारं वध्नाति, यथा जाग्रत्कालिकम् । स्वप्नो हि मानसव्यापारः अतस्तत्र जातं सर्वमपि मानसं वर्तते प्रमाणश्चात्र श्रुतिरेव—

यदि जाग्रद् यदि स्वप्नन्नेन एनस्योऽकरम् ।
भूतं मा तस्माद् भव्यं च द्रुपदादिव मुञ्चताम् ॥ ( अथ० ६।११५।२ )

एतत्सर्वं स्वप्नजगद् विचित्रमेव तत्र केचन अनुभूताः केचन अननुभूताः संबद्धा असंबद्धाश्च सन्ति तत्सर्वं शक्तिमतो बहुजन्मानुभूतसंस्कारवतो मनसो विचित्रे व्यापारे एव पर्यवसितमस्ति ।

एषा च स्वप्नावस्था न केवलं जीवात्मनेव भवति अपि ब्रह्मणोऽपिसा स्फुटीभविष्यत्युपनिषत्प्रकरणे ।

## दुःस्वप्नानां कारणानि

वेदे दुःष्वप्नानां कारणानि-ग्राही, निर्ऋतिः अभूतिः, निर्भूतिः, पराभूतिः, देवजामी, वरुणः, साम, गन्धर्वः, अरतिः, अन्नानि, इति ।

एतत्स्वरूपं निरूप्यते—

ग्राही —ग्रहणकर्तेत्यर्थः । स्वप्नप्रकरणे तदुत्पत्तौ हेतुत्वेन निर्दिष्टा या ग्राही सा द्विधा-एका मानसग्राही द्वितीया शारीरग्राही । आद्या तु यदि कश्चिद् विचारो अपूर्णा कामना वा मानसं गृह्णाति तदाऽसौ मानसग्राहीति वक्तुं शक्यते । सा दुःस्वप्ने हेतुः । द्वितीया मलबन्ध एव न तु वातरोगो ( गठिया पदवाच्यः ) मलबन्धरूपिणा शारीरग्राही दुःस्वप्नानां जननी । सा च केवलं न रात्रावेव जनयति अपि तु दिवापि दिनेऽपि शयनदशायामेव केवलं जनयति अपितु जागरणेऽपि मानवमानसे-कुविचारान् प्रभावयति मलबन्धे जठरसंबन्धिनी अन्यविकारेऽपि नानास्वप्नाननु-भवन्ति लोकाः ।

**निर्ऋतिः**—अस्य शब्दस्यानेके अर्था निरुक्तव्याख्यानात् निर्वचनात् व्याकरण-प्रक्रियावशात्, विभिन्नग्रन्थाच्च परिस्फुरन्ति, किन्त्वत्र तमोगुणजन्या काचन दशा गृह्यते, यत्र मानवः श्रममुद्योगं वा विहाय अलसः स्वपन्निव प्रतिभाति। अथवा वायूनां रोगकारिका दुःखप्रदा गतिः निर्ऋतिरिति कथ्यतेऽत्र। एषापि दुःस्वप्नानुद्भावयति।

**अभूतिः**—अभाव इति तात्पर्यम्, सोऽपि दुःष्वप्नान् जनयति। स चाभावो न एक-विधः किन्तु बहुविधो वस्तूनां, वित्तस्य, स्वास्थ्यस्य, भार्यापुत्रादीनामभावात्। अथवा भूतेरभावो अभूतिः भूतिश्च आधिभौतिकी आध्यात्मिकी च दारिद्र्यं दुर्बुद्धिर्वा गृह्यते। प्राकृतिकसंपदामभावेऽपि विद्यमानायां दैव्यां संपदि नोत्पद्यते दुःस्वप्नः।

**निर्भूतिः**—कुसंगाद् दुराचारात् दौर्भाग्याद् वा उत्पथगामिनः पुरुषस्य सकाशात् पूर्वस्थिताया भूतेर्निष्क्रमणं निर्भूतिरिति। एषापि जनयति दुःष्वप्नान्। दृश्यते च अपगतैश्वर्ये पुरुषे दुःष्वप्नोद्गमः। अत्रापि पूर्ववदाधिभौतिकाध्यात्मिक-विभागः, तादृशी च मान्यता वर्तते।

**पराभूतिः**—पराभव इति। अस्मादपि उत्पद्यन्ते दुःष्वप्नाः। तस्य चिन्ता-सन्तानप्रदत्वात्।

**देवजामी**—देवबन्धुरसुर इत्यर्थः, आसुरो भयाः आसुरवृत्तयो वा। एवं सति तद्वशात् प्रादुर्भवन्ति दुःस्वप्नाः।

**वरुणः**—आरक्षिविभागाध्यक्षः स च पाशेन निःगृहणादि तस्माज्जायन्ते दुःस्वप्नाः। ते च स्वप्ना द्विधा प्रतिहिंसाजन्या दुःस्वप्ना एके, निराशायां भयोत्पन्ना आत्मविपत्तिकल्पनाजन्याश्च दुःस्वप्ना अन्ये। शारीरे क्षेत्रे वरुणो अपान इति कथ्यते। अपाने दूषिते दुष्टस्वप्ना उत्पद्यन्ते।

**साम**—अत्रैतत्पदेन शरीरेन्द्रियाणां क्रियाराहित्यमेव विवक्षितम्, न तु समता-शान्त्यादयः। क्रियाराहित्ये जाते खलु भवन्ति स्वप्ना इति जनैरनुभूयते।

**गन्धर्वः**—गन्धर्वपदेन रूपमोहितो योषित्कामः पुरुषोऽभिप्रेतः। एवं भूते स्वप्नाः संजायन्ते। इत्यपि अनुभवविषय एव।

**अरातिः**- अदानमित्यर्थः। अदाने सति समायातायामासुरवृत्तौ निसर्गत एव दुःस्वप्नाः समुद्भवन्ति।

**अन्नानि**--दूषितेष्वप्यन्नेषु जठरं गतेषु प्रादुर्भवन्ति दुष्टस्वप्नाः।

एतेषां स्वप्नजनकानां हेतूनां निराकरणाय जनस्य समाजस्य राष्ट्रस्य च हिते जनेन समाजेन राष्ट्रेण प्रयत्नो विधेयः। न हि केवलं जनैरेव यत्नो विधेयः, अपि तु मनुष्येषु

शासनजन्यदोषाणां ग्राह्यभूत्यादीनां निराकरण शासनेन समाजेनापि कर्तव्यम् येन पुण्यशालिनां समाजो भवेद् राष्ट्रं च स्वस्थं स्यात्। यदि सुकृतिनां समाजः सुदृढो नाऽभविष्यत् तदानीं समाजव्यवस्था शिथिलाऽभविष्यत्। दुःष्वप्न्यानां पाशेन समाजस्य बन्धनमपि भविष्यति। पापानां परिहाराय पुनः पुनः समाजद्वारा निर्भर्त्सनं धर्मपुरुष-प्रापणं चिकित्सकमेलनमपि करणीयम्। विषयेऽस्मिन् अथर्वषोडशकाण्डीयसप्तमसूक्त-मध्येतुमर्हम्। उपरिनिर्दिष्टानां हेतूनां निराकरणाय अथर्वणि प्रार्थनाप्येषा विहिता, मन्त्राः—अ० १६।२।५ सूक्ते--

विद्म ते स्वप्न अनित्रं ग्राह्याः पुत्रोऽसि यमस्य करणः ॥१॥
अन्तकोऽसि मृत्युरसि ॥२॥
तं त्वास्वप्न तथासंविद्म सनः स्वप्नः दुःष्वन्यात् पाहि ॥३॥
विद्म तेस्वप्नजनित्रं निर्ऋत्याः पुत्रोऽसि यमस्य करणः।
अन्तकोऽसिमृत्युरसि ।
तं त्वा स्वप्न तथा संविद्म स नः स्वप्नदुःष्वप्न्यात् पाहि ॥४॥
विद्म तेस्वप्न जनित्रं भूत्याः पाहि ॥५॥
विद्म तेस्वप्नजनित्रं निर्भूत्याः पाहि ॥६॥
विद्म तेस्वप्न जनित्रं पराभूत्याः पाहि ॥७॥
विद्म तेस्वप्न जनित्रं देवजामीनां पुत्रोऽसि यमस्य करणः ॥८॥
अन्तकोऽसि मृत्युरसि ॥९॥
तं त्वास्वप्नतथासंविद्म स नः स्वप्न दुःष्वप्न्यात् पाहि ॥१०॥

## दुःस्वप्ननिवारणयोपायाः

दैहिकैन्द्रियिकमानसिकादिदोषप्रभावात् स्वप्नरोगादिविकृतयो जायन्ते तेषां दोषाणां निवृत्तिश्चेदभविष्यत्तर्हि सुतरां स्वप्नरोगादीनामपि विनिवृत्तिरभविष्यत्। तदर्थं दोषशमनेन सहैव दैहिकादिशक्तिप्रबलीकरणमत्यन्तमपेक्षितं वर्तते। शक्ति-प्राबल्येन दोषशमने सहायता भवति, अपि च दोषाणां पुनरुत्थानं न जायते।

तत्र दोषशमनाय एष विमर्शोऽवगन्तव्यः—पृथिव्यामागन्तुकस्याग्नेर्मार्गद्वयम्-- एकस्तु मेघजलान्तर्गतोऽग्निर्वृष्टिद्वारा पृथिवीमागच्छति, द्वितीयः सूर्यादुच्चरत पृथिवी-मागच्छति। इमौ द्वावपि आप्यदिव्यौ बह्नी घोरशिवरूपात्पकौस्तः। तत्र घोररूपो

बाह्य आप्योऽग्निर् वृष्टिसस्यौषधद्वारा प्राणिनां देहे प्रविश्य रोगं भङ्गं हिंसां च करोति, म्रोचति, मनो हन्ति उत्पाटयति, निःशेषेण दहति आत्मानं तनूं च दूषयति, एवं त्रिधमपरमपि उपद्रवं करोति। आभ्यन्तरश्च घोररूपो य आप्योऽग्निः स तु अप्सु विद्यमानो देहे तिष्ठन् रसरक्तवीर्यादिसमोतः सर्वाणि तानि रसादीनि दूषयन् आत्ममन-इन्द्रियाणि दूषयति। सौरश्च दिव्यो घोररूपो बाह्यो वहुविधोऽग्निर् ऋतुसन्धिषु व्याध्यादीनां विस्तारम् अतिवृष्टिमनावृष्टिमन्यांश्च प्रकृतिप्रकोपाञ्जनयति। शिवरूप आप्यो वह्निः रसरक्तवीर्यादिषु प्रोतो वर्तते ततो वर्चः प्रवितश्च सदा प्रार्थनीयः। घोररूपस्याग्नेस्त्यागस्तु अवश्यमेव करणीयो न परिपोष्यः। तस्य परित्यागो जलानां दिव्याग्नीनां सदुपयोगेन, अभिचारकर्मणा, औषधादिभिः प्रार्थनया कर्त्तुं शक्यो येन दुःस्वप्नादीनामाक्रमणं न जायेत। एतत् सर्वम् अथर्वषोडशकाण्डप्रथमानुवाकप्रथम-सूक्ते स्पष्टम्।

तथा च मन्त्राः—

अतिसृष्टो अपां वृषभोऽतिसृष्टा अग्नयो दिव्याः ॥१॥

रुजन्परिरुजन्मृणन्प्रमृणन् ॥२॥

म्रोकोमनोहाखनोनिर्दाह आत्मदूषिस्तनूदूषिः ॥३॥

इदं तमतिसृजामि तं मास्यवनिक्षि ॥४॥

तेन तमभ्यतिसृजामो योस्मान् द्वेष्टि यं वयं द्विष्म ॥५॥

अपामग्रमसिसमुद्रं वोऽभ्यवसृजामि ॥६॥

योऽप्स्वग्निरिति तं सृजामि म्रोकं खनिं तनुदूषिम् ॥७॥

यो व आपोऽग्निराविवेश स एष यद्वो घोरं तदेतत् ॥८॥

इन्द्रस्य व इन्द्रियेणाभिषिञ्चेत् ॥९॥

अरिप्रा आपो अपरिप्रमस्मत् ॥१०॥

प्रास्मदेनोवहन्तुप्रदुःष्वप्न्यं वहन्तु ॥११॥

शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे ॥१२॥

शिवानग्नीनप्सु सदोहवामहे मयि क्षत्रं वर्चआधत्त देवीः ॥१३॥

(अ० १६।१।१)

अपरश्च प्रकारो वर्तते तदित्थम्—यदि दुःस्वप्नानां स्थाने भद्राः स्वप्नाः स्युः तर्हि तद्दोषा विनङ्क्ष्यन्ति[१]। तेषां भद्रस्वप्नानामवाप्त्यै उषसः प्रार्थना करणीया येन उषाः सन्तुष्टा स्यात्। उषा आध्यात्मिकक्षेत्रेण संबद्धा भौतिक-क्षेत्रेणापि एवमुभयविधा। तत्राद्या उषा यदि प्रस्फुटिता स्यात्, तदानीम् अज्ञान-जन्यान्धकाराभावे दुःस्वप्नावसरो न समायास्यति। द्वितीयस्यां स्फुटितायां दुःस्वप्ना नावकाशं लभन्ते। तद् यथा—प्रायो हि स्वप्नानां प्रादुर्भावः प्रथमे यामे शयनावसरे तथा सुषुप्त्यनन्तरं ब्राह्ममुहूर्ते भवति। तत्र ये जनाः प्रातः प्रतिबुध्यन्ते तेषामुपरि स्वप्नामाक्रमणं नैव भवति; तदानीं सत्त्वोद्रेकात्। अपि चेयमुषाः स्तुता सती स्वरश्मिभिः प्रभूतान्नप्रदत्वाद् अभूत्यादि द्वारा जातानां दुःस्वप्नानां निहन्त्री। इयञ्च उषा देवी वाग्देवीं संगत्य वाक् चोषसं संगत्य दुःस्वप्नान् निवारयति। एवम् उषस्पतिः सूर्यो वाचस्पतिना सह वाचस्पतिः सूर्येण सह संगत्य वाग् उषा चेति चतस्रो देवताः निखिलान् रोगान् दुःस्वप्नान् निघ्नन्ति। एतत्स्तुतिमन्त्राः—

अजैष्माद्यासनामाद्या भूमानागसो वयम् ॥१॥
उषो यस्माद्दुःष्वप्न्यादभैष्माप तदुच्छतु ॥२॥
द्विषते तत् पराबहुशपते तत् परा वह ॥३॥
यं द्विष्मो यश्च नो द्वेष्टि तस्मा एतद् गमयामः ॥४॥
उषा देवी वाचा संविदाना वाग् देव्युषसा संविदाना ॥५॥
उषस्पतिर्वाचस्पतिना संविदानो वाचस्पतिरुषस्पतिना संविदानः ॥६॥
तेऽमुष्मै परा वहन्त्वरायान् दुर्णाम्नः सदान्वाः ॥७॥
कुम्भीकाः दूषिका पीयकान् ॥८॥
जाग्रद्दुःष्वप्न्यं स्वप्ने दुःष्वप्न्यम् ॥९॥
अनागमिष्यतो वरानवित्तेः सङ्कल्पानमुच्या द्रुहः पाशान् ॥१०॥
तदमुष्मा अग्ने देवाः परा वहन्तु वध्रिर्यथा सद् विधुरो न साधु ॥११॥
(अ० १६।२।६)

एवं दुःष्वप्नविनाशाय उषसः प्रार्थना ऋग्वेदेऽपि विहिता—

यच्च गोषु दुःष्वप्न्यं यच्चास्मे दुहितर्दिवः।
त्रिताय तद्विभावर्याप्त्याय परावहानेहसोव ऊतयः सु ऊतयो व ऊतयः ॥

निष्कं वा घा कृण्वते स्रजं वा दुहितर्दिवः ।
त्रिते दुःष्वप्न्यं सर्वमाप्त्ये परिदद्मसि ॥

तदन्नाय तदपसे तं भागमुपसेदुषे त्रिताय च द्विताय चोषो दुःष्वप्न्यं वह[१] ॥
(ऋ० ८।४७।१४-१६)

एतदर्थं ऋग्वेदे मनसस्पतिप्रभृतीनां प्रार्थनामन्त्राः—

अपेहि मनसस्पतेऽप क्राम परश्चर ।
परो निर्ऋत्या आ चक्ष्व बहुधा जीवतो मनः ॥१॥

भद्रं वै वरं वृणते भद्रं युञ्जन्ति दक्षिणम् ।
भद्रं वैवस्वते चक्षुर्बहुत्रा जीवतो मनः ॥२॥

यदाशसा निःशसाभिशसोपारिम जाग्रतो यत्स्वपन्तः ।
अग्निर्विश्वान्यप दुष्कृतान्यजुष्टान्यारे अस्मद् दधातु ॥३॥

यदिन्द्र ब्रह्मणस्पतेऽभिद्रोहं चरामसि प्रचेता न अंगिरसो द्विषतां पात्वंहसः ॥४॥

अजैष्माद्यासनाम चाभूमानागसो वयम् ।
जाग्रत्स्वप्नः संकल्पः पापो यं द्विष्मस्तं स ऋच्छतु यो नो द्वेष्टि तमृच्छतु ॥५॥
(ऋ० १०।१६४)

सूक्तमिदं किञ्चिद्भेदेनाथर्ववेदेऽपि समायाति—

परोऽपेहि मनस्पाप किमशस्तानि शंससि ।
परे हि न त्वा कामये वृक्षां वनानि सं चर गृहेषु गोषु मे मनः ॥१॥

अवशसा निःशसा यत् पराशसोपारिम जाग्रतो यत् स्वपन्त ।
अग्निर्विश्वान्यप दुष्कृतान्यजुष्टान्यारे अस्मद् दधातु ॥२॥

यदिन्द्र ब्रह्मणस्पतेऽपि मृषा चरामसि ।
प्रचेता न अङ्गिरसो दुरितात् पात्वंहसः ॥३॥
(अ० ६।५।४५ सू०)

दुःस्वप्ननिवारणाय सूर्योपासनापि करणीया । तदर्थं वेदेषु विहिता मन्त्राः—

अद्यानो देव सवितः प्रजावत् सावीः सौभगम् ।
परा दुःस्वप्न्यं सुव ॥ (ऋ० ५।८२।४)

---

१. अत्र १७-१८ मन्त्रावपि द्रष्टव्यौ ।

येन सूर्य ज्योतिषा बाधसे तमो जगच्च विश्वमुदियर्षि भानुना ।
तेनास्मद् विश्वामनिरामनाहुतिमपामीवामप दुःष्वप्न्यं सुव ।।
(ऋ. १०।३७।४)

यो अद्य देव सूर्य त्वां च मां चान्तरायति ।
दुःस्वप्न्यं तस्मिञ्छमलं दुरतानि च मृज्महे ।। (अ. १३।१।५८)

यदि जाग्रद् यदि स्वप्न एनांसि चकृमा वयम् ।
सूर्यो मा तस्मादेनसो विश्वान् मुञ्चत्वंहसः ।। (यजु. २०।१६)

सूर्योपासनेव वरुणोपासनापि वर्तते, तन्मन्त्राः—

प्रास्मत् पाशान् वरुण मुञ्च सर्वान् य उत्तमा अधम वरुणा ये ।
दुःष्वप्न्यं दुरितं निष्वास्मदथ गच्छेम सुकृतस्य लोकम् ।।
अथ० ७।८३।४ ।

यो मे राजन् युज्वो वा सखा वा स्वप्ने भयं भीरवे मह्यमाह ।
स्तेनो वा यो दिप्सति नो वृको वा त्वं तस्माद् वरुण पाह्यस्मान् ।।
ऋ० २।२८।१०

जलचिकित्सयापि दुःस्वप्ना दूरीक्रियन्ते, तन्मन्त्राः—

अरिप्रा आपो अप रिप्रमस्मत् ।
प्रास्मदेनो दुरितं सुप्रतीकाः प्रदुःष्वप्न्यं प्रमलं वहन्तु ।।
( अथ० १०।५।२४ ) ।

प्रास्मदेनो वहन्तु प्र दुःष्वप्न्यं वहन्तु । ( अथ० १६।१।११ )

अपामार्गसेवनेनापि दुःस्वप्ननिवारणं भवति इति प्रतीयते निम्नमन्त्रद्वारा—

अपाघमप किल्बिषमप कृत्यामपो रपः ।
अपामार्ग त्वमस्मदप दुःष्वप्न्यं सुव ।। (यजु० ३५।११)

दौष्वप्न्यं दौर्जीवित्यं रक्षो अभ्वमराय्यः ।
दुर्णाम्नीः सर्वा दुर्वाचस्ता अस्मन्नाशयामसि ।। (अथ० ४।१७।५)

एवं ब्रह्मणः कामस्य ब्रह्मगव्याः स्तवेन दुःस्वप्ननिवारणम्, तन्मन्त्राः—

पर्यावर्ते दुष्वप्न्यात् पापात् स्वप्न्यादभूत्याः ।
ब्रह्माहमन्तरं कृण्वे परा स्वप्नमुखाः शुचः ।। (अथ० ७।१००।१)

यन्मे मनसो न प्रियं न चक्षुषो यन्मे बभस्ति नाभिनन्दति ।
तस्य दुःष्वप्न्यं प्रति मुञ्चामि सपत्ने कामं स्तुत्वोदहं भिदेयम् ॥
(अथ० ९।२।२)

दुष्वप्न्यं काम दुरितं च कामा प्रजस्तामस्वगतामवर्तिम् ।
उग्र ईशानः प्रतिमुञ्च तस्मिन् यो अस्मभ्यमहूंरणा चिकित्सात् ॥
(अथ० ९।२।३)

अथर्वणो द्वादशकाण्डे पञ्चम सूक्ते ब्रह्मगव्याः स्तवनं प्रस्तुतं वर्तते, तेन स्तवनेन दुःस्वप्नस्यापि निवारणं भवति, इति प्रतीयते तस्मिन् सूक्ते पठितेनानेन मन्त्रेण— अघं पच्यमाना दुःष्वप्न्यं पक्वा ॥ अथ० १२।५।३२ इति ।

स्वप्नस्य प्रभावो न केवलं स्वप्नद्रष्टुरुपर्येव भवति, अपि तु तत्परिजने पशौ संबन्धिन्यपि जायते तदर्थं स्वप्नस्य तदधिपतेर्यमस्य च स्तुतिर्विहिताथर्वणे १६ काण्डे ५६ सूक्ते—

यमस्य लोकादध्या बभूविथ प्रमदा मर्त्यान् प्रयुनक्षि धीरः ।
एकाकिना सरथे यासि विद्वान्त्स्वप्नं मिमानो असुरस्य योनौ ॥१॥

बन्धस्त्वाग्रे विश्वचया अपश्यत पुरा रात्र्या जनितोरेके अह्नि ।
ततः स्वप्नेदमध्या बभूविथ भिषग्भ्यो रूपमपगूहमानः ॥२॥

बृहद्गावासुरेभ्योऽधि देवानुपावर्तत महिमानमिच्छन् ।
तस्मै स्वप्नाय दधुराधिपत्यं त्रयस्त्रिंशासः स्वरानशानाः ॥३॥

नैतां विदुः पितरो नोत देवा येषां जल्पिश्चरत्यन्तरेदम् ।
त्रिते स्वप्नमदधुराप्त्ये नर आदित्यासो वरुणेनानुशिष्टाः ॥४॥

यस्य क्रूरमभजन्त दुष्कृतोऽस्वप्नेन सुकृतः पुण्यमायुः ।
स्वर्मदसि परमेण बन्धुना तप्यमानस्य मनसोऽधि जज्ञिषे ॥५॥

विद्म ते सर्वाः परिजाः पुरस्ताद् विद्म स्वप्न यो अधिपा इहा ते ।
यशस्विनो नो यशसेह पाह्याराद् द्विषेभिरप याहि दूरम् ॥६॥

स्वप्ननिवारणाय परिश्रमादिकञ्चापेक्षितं वर्तते—

इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति ।
यन्ति प्रमादमतन्द्राः ॥
(ऋ० वे० ८।२।१८)

तस्मात् स्वप्नो हेय एव ।

दुःस्वप्ननिवारणाय ऋग्वेदस्य प्रथममण्डलान्तर्गतसप्तदशाध्याये विंशत्युत्तर-शततमं सूक्तं पठनीयम् । अन्यच्चैतत् पठनीयम्—

स्वप्नेनाभ्युप्या चुमुरिं धुनिं च जघन्थ दस्युं प्रदभीतिमावः ।
रम्भी चिदत्र विविदे हिरण्यं सोमस्य ता मद इन्द्रश्चकार ॥
( ऋ० २।१५।६ )

यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥
( अथ० २०।९६।१६ )

इन्द्रियाणामुत्थापनाय परमोत्कृष्टताप्राप्त्यै औषधविशेषैः स्नानादिविधिः[१] कल्पोक्त सूत्रविधिना[२] कार्यः तथा स्वस्य बलाप्त्यै प्रार्थनापि करणीया[३] । एवं कृते सति सर्वविधशक्तिसम्पन्ने जाते दुःस्वप्ना रोगाश्च तस्योपरि आक्रमणं कर्त्तुं न शक्ता भवन्ति । दुःस्वप्नान् निवारयितुं सुस्वप्नदर्शनमपि शक्तम् यदि दुःस्वप्नस्थाने सुस्वप्नो जायेत तदा शनैः शनैः दुःस्वप्ना विनङ्क्ष्यन्ति भद्राश्च स्वप्ना जनिष्यन्ते जेष्यन्ति च । तदर्थं स्वापसमये भगवत्स्तुतिः कार्या । विशेषतः स्वप्नविषये अथर्ववेदस्य समग्रं षोडशं काण्डं तथा एकोनविंशतिकाण्डे ५६, ५७ सूक्ते, अन्यत्रापि वर्णितं विशेषस्थलं पठनीयमस्ति । अथर्वणि १६ काण्डस्य सप्तमे सूक्ते सर्वेषां दुःस्वप्नानां सामूहिकविनाशाय प्रेरणा, अष्टमे पाशबन्धनं भिन्नभिन्नचिकित्सासंबन्धि, नवमे दुःस्वप्नोपरिविजये प्राप्ते दशानिरूपणम्, १९ काण्डस्य ५७ सूक्तेपि विभिन्नोपायाः, तत्र कलाशफर्णादिवत् शनैः शनैः दुःस्वप्नानवतार्य द्विषति प्रक्षेपणाभिचारः ।

वैदिकवाङ्मयपर्यालोचनेनेदमायाति संक्षेपेण यद् दुःस्वप्नादिनिवारणाय दोषाणां विसर्जनं शरीरात्मशक्तीनां प्रबलीकरणञ्चावश्यकम् । यदि दोषपरित्यागपूर्वकं शक्तिप्रबलीकरणं न क्रियेत तदानीं दुःस्वप्नादिरोगजनने ते दोषा हेतवो भविष्यन्ति ।

## उपनिषत्सु

'अन्तःकरणचतुष्टयैरेव संयुक्तः स्वप्नः[४]' 'तद्[५]वासनासहितैश्चतुर्दशकरणैः शब्दाद्यभावेऽपि वासनामयाञ्छब्दादीन् यदोपलभते, तदात्मनः स्वप्नम्'[६], करणोपरमे जाग्रत्संस्काराद्यप्रबोधवद् ग्राह्यग्राहकरूपस्फुरणं स्वप्नावस्था भवति । तत्र विश्व एव जाग्रद्व्यवहारलोपान्नाडीमध्यं चरंस्तैजसत्वमवाप्य वासनारूपकं

१. कौशिकसूत्रे । २. अ० वे० १६।१।२ । ३. अ० वे० १६।१।३-४ । ४. शा० उ० १४ ।
५. तदिति पूर्वपरामर्शित्वाज्जाग्रद् गृह्यते तेनाऽत्र । ६. सर्व उ० ४ ।

**जगद्वैचित्र्यं स्वभासा भासयन् यथेप्सितं स्वयं भुङ्क्ते'[१]** इत्यादिश्रुतयः स्वप्न-स्वरूपं निरूप्य पुनश्च स्वप्नानुभवः सूक्ष्मकोशे एव भवतीति दर्शयन्ति—**अथैता दश दश नाड्यो भवन्ति तासामेकैकस्या द्वासप्ततिः द्वासप्ततिः शाखानाडीसहस्राणि भवन्ति। यस्मिन्नयमात्मा स्वपिति शब्दानां च करोत्यथ द्वितीये संकोशे स्वपिति, तदेमं च लोकं परं च लोकं च पश्यति सर्वाञ्छब्दान् विजानाति स संप्रसाद इत्याचक्षते प्राणः शरीरं परिरक्षति हरितस्य नीलस्य पीतस्य लोहितस्य श्वेतस्य नाड्यो रुधिरस्य पूर्णाः'।[२]**

अपि च **'सूक्ष्मनाडीषु सञ्चारो बुद्धेः स्वप्नः प्रजायते[३]** इति।

यद्यपि स्वप्नस्य चर्चा वृहदारण्यकमाण्डूक्यप्रश्नपैङ्गलादिविविधोपनिषत्सु वर्तते किन्तु वृहदारण्यकमनुसृत्यात्र किंचिद् विचार्यते—तत्र[४] जनकयाज्ञवल्क्यसंवादे सर्वेषु ज्योतिष्षु विलयं गतेषु सत्सु यदात्मा स्वयं ज्योतिर्भवतीत्यत्र कतम आत्मेति जनकस्य शङ्कां परिहर्तुकामो याज्ञवल्क्यो विविनक्ति—**'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि[५]'**।

प्राणेषु हृदि चान्तर्ज्योतीरूपेण निवसन्नयं विज्ञानमयः पुरुषो मृत्युकालं प्राप्तः सन् लोकाय परलोकाय च समानो भवति। तस्योभयत्र समानगतिर्जायते भूत-भविष्यज्जन्मनोस्तदानीं फलाफलं पश्यति, पुण्यं पापं च ध्यायति। यदा शनैः शनैरिमं लोकं तथा चास्य मृत्यो रूपाणि प्रजहाति, तदा तदा स्वप्नरूपापन्नो भवति जीवात्मा।

अस्मिन् प्रकरणे स्वप्नावस्थां विशदयता महर्षिणेदमपि प्रोक्तम्—**'स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः संसृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति[६]**।

एवं भूतायाम् अवस्थायां पापपुण्ये फलप्रदानाद् विरते भवतः, इत्येष भावः, न तु पापात्सर्वंशा विमुक्तिः। अन्यथा ज्ञानाभावेऽपि मोक्षप्रसङ्गः स्यात्। तस्मिन् समये स्थूलशरीराभावेन भोगस्यानुपपद्यमानत्वात् पापादिफलविरतिवर्तते।

एतेनेदमायातं यन्मृत्युमारभ्य जन्मपर्यन्तं याऽवस्था सा स्वप्नावस्था। सैव सन्धिस्थानमिति कथ्यते। तत्स्वरूपादिकं स्पष्टयति—

**तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीयं स्वप्नस्थानं तस्मिन् सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं**

---

१. पै० उ० २।१२। २. सुबा० उ० ४।३। ३. वराहोपनिषद् २।६१। ४. बृ० उ० ४।३ ब्राह्मणे। ५. बृ० उ० ४।३।७। ६. बृ० उ० ४।३।८।

**च परलोक स्थानं च। अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दांश्च पश्यति, स यत्र प्रस्वपिति अस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवति[१]।"**

पुरुषस्य द्वे स्थाने, इदं वर्तमानं जन्मशरीरेन्द्रियविषयवेदनाविशिष्टं द्वितीयं शरीरादिवियोगोत्तरकालानुभाव्यं परलोकस्थानम्। इह लोकपरलोकयोर्यः सन्धिस्तस्मिन् भवं सान्ध्यं यत् तृतीयं तत्स्वप्नस्थानम्। तस्मिन् स्थाने तिष्ठन् पुरुष इदं परलोकश्चोभयस्थानं पश्यति। अयं पुरुषः परलोकस्थाने प्रतिपत्तव्ये निमित्ते यादृशाश्रयो भवति तं विद्याकर्मपूर्वप्रज्ञालक्षणमाश्रयमाश्रित्य पापफलानि दुःखानि पुण्यफलानि सुखानि चोभयानि पश्यति। स च प्रकृत आत्मा यस्मिन् काले स्वापमनुभवति अस्य जागरितलक्षणस्य लोकस्य कार्यकारणसंघातस्य मात्रामपच्छिद्यादाय दृष्टजन्मवासनावासितः सन् स्वयमेव देह पातयित्वा स्वयमेव स्वप्नदेहं निर्माय आत्मीयेन प्रकाशेन प्रस्वपिति। अस्यामवस्थायाम् अयं पुरुषः स्वयमेव विविक्तज्योतिर्भवति। जागरिते हीन्द्रियबुद्धिमनआलोकादिव्यापारसंकीर्णमात्मज्योतिः। इह तु स्वप्ने इन्द्रियाभावात्तदनुग्राहकादित्याद्यालोकाभावाच्च विविक्तं केवलं भवति। अतो जागरिताद् विलक्षणा स्वप्नावस्था। अस्यामवस्थायां पुरुषः स्वयमेव रथादिलक्षणविषयान् सृजति अर्थाद् रथादिवासनारूपान्तःकरणवृत्तिस्तदुपलब्धिनिमित्तेन कर्मणा चोद्यमाना दृश्यत्वेन व्यवतिष्ठते। न तत्र करण-करणानुग्राह-रथादिविषया विद्यन्ते।

अथाह श्रुतिः—

**न तत्र रथा न रथयोगा ... ... ... सृजते स हि कर्ता।[२]**

स्वप्नभावेन शरीरं निष्चेष्टमापाद्य सर्वानित्र भावानात्मशक्त्या अवभासयति। शुद्धं ज्योतिष्मदिन्द्रियमात्रारूपमादाय पुनः कर्मणे जागरितस्थानं गच्छति। हिरण्मय इव चैतन्यज्योतिः स्वभावः। एक एव जाग्रत्स्वप्नेहलोकपरलोकादीन् गच्छति।

तथा च श्रुतिः—

**'स्वप्नेन शरीरमभि... ... ... ... एकहंसः।[३]**

एतावता मृत्युस्वप्नस्य संक्षेपेण वर्णनं जातम्, अग्रे रात्रिस्वप्नसंबन्धे विचारो वर्तते, यथा रात्रिस्वप्ने विरतेषु इन्द्रियेषु मनसि पतितानि संस्कारजातानि स्वप्नरूपं सन्धार्यं प्रकटीभवन्ति। तथैव मृत्युस्वप्ने गतजन्मनो मनसि पतितानि संस्कारचित्राणि समक्षं समुद्भवन्ति।

---

१. बृ० उ० ४।३।९। २. बृ० उ० ४।३।१०। ३. बृ० उ० ४।३।११।

स पुरुषः प्राणेन निकृष्टं नीडात्मकं शरीरं परिपालयन् तस्माच्छरीराद् बहिर्गत्वा यद्यपि शरीरस्थ एव स्वप्नं पश्यति, तथापि तत्संबन्धाभावात्तत्स्थ इवाकाशो बहिर्गत्वेति कथ्यते। स्वयममरणधर्मा यत्र यत्र विषयेषु उद्भूतवृत्तिर्भवति तं तं कामं वासनारूपेणोद्भूतं गच्छति। किञ्च स्वप्नस्थाने देवादिभावं तिर्यगादिभावं विपर्योकृत्य तेन तेनात्मना स्वेनैव स्वयं गम्यमानः वासनारूपाणि बहूनि रूपाणि कुरुते कदाचित् स्त्रीभिः सह मोदमान इव कदाचिद् वयस्यैः सहः हसन्निव कदाचित् सिंहव्याघ्रादीनि पश्यन्निव।

तथा श्रुतिः –

**प्राणेन रक्षन्नवरं कुलायं ·· ···एकहंसः।[1]**

**स्वप्नान्त उच्चावचमीयमानो ·· ··· ···भयानि पश्यन्।[2]**

सर्वे जनाः आत्मनो वासनारूपम् आत्मना निर्मितं ग्रामनगरस्त्र्यन्नादि पश्यन्ति किन्तु कश्चन तमात्मानं न पश्यति, इति कष्टम्। सुप्तमात्मानं सहसा न बोधयेत् इति कथयन्ति जना (चिकित्सकाः) लोके। यतो हि सर्वशरीरगोऽयं पुरुषः स्वापसमये स्वीयां चित्तिशक्तिमपकृष्य बहिर्वर्तते तच्छरीरं तदा केवलं प्राणेनैव जीवति। तदानीं सहसा बोधने भीतिरेषा यत् कदाचिच्चितिशक्तिर् इन्द्रियद्वाराणि न प्रतिपद्येत। एवं सति आन्ध्यवाधिर्यादिदोषप्राप्तौ अचिकित्स्यो देहः स्यात्। तस्माद-कस्मान्निद्रितजनबोधो निषिध्यते। एषा एव गतिर्दिवास्वप्ने। नरश्चिन्तनवेलायां यदा विचारलीनो भवति, तदा व्याघातो न विधेयः। यतो हि तदानीं चितिशक्तिः शिरसि तिष्ठति। दिवारात्रिस्वप्नयोर्मात्राभेदं विहाय नास्ति कोऽपि भेदः। केचन जागरित-देशस्यैवापररूपं स्वप्नं मन्वते, परे स्वप्नजाग्रदवस्थयोरभिन्नत्वमङ्गीकुर्वन्ति।

तथा श्रुतिः—

**आराममस्य पश्यन्ति न तं पश्यति कश्चनेति।**

**तं नायतं बोधयेदित्याहुः दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यते।**

**अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत् पश्यति तानि सुप्त··· ···· ····ब्रूहीति।[3]**

एष पुरुषः स्वप्ने रत्यादिसुखमनुभूय मित्रैर्बन्धुभिः सह विहृत्य पुण्यं पापं च दृष्ट्वा सुषुप्तौ प्रविशति, कञ्चित् कालं तत्र स्थित्वा पुनर्यथागतं यथास्थानं तथैव स्वप्नावस्थायै प्रत्यागच्छति। स तत्र सम्प्रसादे यत् किञ्चित् पश्यति तेनाननुबद्धो भवति जीवः। यतो हि असङ्गोऽयं पुरुषः।

१. बृ० उ० ४।३।१२। २. बृ० उ० ४।३।१३। ३. बृ० उ० ४।३।१४।

तथा च श्रुतिः—

स वा एष एतस्मिन् संप्रसादे रत्वा चरित्वा दृष्ट्वैव च पुण्यं पापं च पुनः प्रतिन्यायं प्रतियोन्या .... ...ब्रूहीति।[१]

एवमेव स्वप्नेऽपि सर्वं व्यवहारजातं विधाय जागरितदेशाय प्रधावत्ययं जीवः। तथा जाग्रद्दशातः स्वप्नावस्थायां पुनः प्रविशति। एवं स्वप्नावस्थापन्नो जीवो नक्तन्दिवमपरयोर्द्वयोरवस्थयोः पार्श्वं स्पृशति गमनागमनाभ्याम्। यथा नदीप्रवाहस्थितो मत्स्यः तटद्वयं क्रमशः क्रामति। प्रकटयति श्रुतिरेतत्सर्वम्—

स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वा... ... ...बुद्धान्तायैव... ... ...ब्रूहीति।[२]

स वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वा... .... ...स्वप्नान्तायैव।[३]

'तद् यथा महामत्स्य उभे कूले संचरति .. ... ...स्वप्नान्तं च बुद्धान्तं च।[४]'

यथा आकाशे श्येनः विहृत्य विहारकर्मणा खिन्नः सन् पक्षौ संहृत्य नीडायैव स्वयमेव स्वात्मना धार्यते, तथा अयं पुरुष एतस्मै अन्ताय धावति, यस्मिन्नन्ते सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति। श्रुतिः—

'तद् यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरित्य श्रान्तः संहृत्य पक्षौ संलयायैव... .. पश्यति।[५]'

एतदनन्तरमग्रिमया ऋचा नाडीसम्बन्धं विवृणोति श्रुतिः। तद्विवरणन्त्वन्यत्रोल्लिखितं वर्ततेऽतोऽत्र तस्य नावश्यकता प्रतिभाति।

स्वप्नावस्थां प्राप्तो विज्ञानमयोऽयं पुरुषो मनोराज्ये विहरति सूक्ष्मभोगश्च भुङ्क्ते। सर्वं कार्यं च तत्रैव कुरुते, इत्यादि सर्वं वृ० उ० २।१।१७-१८ इत्यत्रवर्णितमस्ति।

## शैवागमे स्वप्नस्वरूपविमर्शः

मनोमात्रजन्या असाधारणार्थविषया विकल्पाः स्वप्नः। अर्थाद् बाह्यार्थाभावे तद्वृत्युपशान्तौ बाह्यार्थनिरपेक्षमन्तर्विसृत्वराणामुरगगिरिवनोपवनाद्युल्लेखवैचित्र्येणाभासमानानां स्वार्थक्रियाकारिणां विकल्पानां नवनवाविर्भावः स्वप्नः पशोः स्वरूपमावृणोति। तथा चोक्तम्—

१. वृ० उ० ४।३।१५। २. वृ० उ० ४।३।१६। ३. वृ० उ० ४।३।१७। ४. वृ० उ० ४।३।१८। ५. वृ० उ० ४।३।१९।

'स्वप्नो विकल्पाः' इति शिवसूत्रे[१]। तद्वार्तिके[२] च –

> दृष्टिस्वभावस्य विभोरन्तर्नवनवोदयः ।
> विकल्पानां स्मृतः स्वप्नस्तद्बाह्यार्थनिरासतः ॥
>
> प्रतिभानाद् विकल्पानां दृढतादृढता पुनः ।
> पशुत्वादावृतिः सैव ज्ञेया शक्त्यात्मनः प्रभोः ॥

तन्त्रालोके तु—

> यस्त्वधिष्ठानकरणभावमध्यास्य वर्तते ।
> वेद्यं सत्पूर्वकथितं भूततत्त्वाभिधामयम् ॥
>
> तत्स्वप्नो मुख्यतो ज्ञेयं तच्च वैकल्पिके पथि ।
> वैकल्पिकपथारूढवेद्यसाम्यावभासनात् ॥
>
> लोकरूढोऽप्यसौ स्वप्नः साम्यं चाबाह्यरूपता ।
> उत्प्रेक्षास्वप्नसंकल्पस्मृत्युन्मादादिदृष्टिषु ॥
>
> विस्पष्टं यद् वेद्यजातं जाग्रन्मुख्यतयैव तत् ।
> यत्तु तत्राप्यविस्पष्टं स्पष्टाधिष्ठातृ भासते ॥
>
> विकल्पान्तर्गं वेद्यं तत्स्वप्नपदमुच्यते ॥

यद्यपि विकल्पाविकल्पात्मके पदद्वयेऽप्यस्यैवंरूपता वर्तते, किन्त्वत्र विशेषतो विकल्पमधिकृत्यैवोक्तम् । तत्र हि यत् पुनर्जाग्रद्दशाधिशाय्यपि चैत्रमैत्रादिभूततत्त्वाधिष्ठितक्रियायां प्रमाणपदास्कन्दनेनास्ते तन्मुख्यतः स्वप्नो मेयच्छायावभासिनो मानप्रधाना स्वप्नावस्थेयम् । मा शङ्कीर्यल्लोके सर्वस्य स्वापावसरे स्वानुभवसाक्षिकमविकल्पवृत्त्यैव तत्तदर्थानुभवो भवितुमर्हति वैकल्पिकत्वाङ्गीकारे को लाभ इति, लोकेऽपि ह्यसाधारण्यादिना वैकल्पिकार्थसमानमेवावभासमधिकृत्य स्वप्नावस्था प्ररोहमुपगतेति । विकल्पस्वप्नयोरर्थविभासे साम्यमबाह्यरूपतेव । अतोऽत्र स्वप्नेऽपि अबाह्यरूपत्वादेव असाधारण्यादि भवति । अबाह्यत्वं नाम बाह्यत्वे हि अर्थस्य सर्वप्रमातृसाधारण्य स्थिरत्वं च भवति तद्भिन्नत्वमिति ।

इत्थं स्वप्नस्य वैकल्पिकार्थत्वेऽपि स्पष्टास्पष्टतया द्वैविध्यं भवति । यत्र स्वप्ने वेद्यजातं स्पष्टतया प्रतीयते तत्स्वप्नजागरेति कथ्यते । गाढत्रासानुरागादिना पुरः स्फुरद्रूपमेवाततायिनायिकादिभावात् । तदुक्तम्[३]—

१. १।९। २. ४१, ४२। ३. त० लो०, १० आ, पृ० १७०।

भावनाबलतः स्पष्टं भयादाविव भासते।
यज्ज्ञानमविसंवादि तत्प्रत्यक्षमकल्पकम्॥

कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुताः ।
अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव॥

अत्र ह्यर्थस्य वैकल्पिकत्वात् स्वप्नत्वं स्पष्टत्वाच्च जाग्रत्त्वमित्यतः स्वप्नजागरेति कथ्यते। यत्र तु जाग्रदविशिष्टाधिष्ठात्रपि विकल्पान्तर्गममविस्पष्टं वेद्यजातं पुनस्तत्रोत्थ्रादौ यद् भासते तत्स्वप्नपदमुच्यते, तदेव स्वप्नस्वप्न इति गीयते, स एव मुख्यः स्वप्नोऽपि भवति। एष च स्वप्नो मातृमानमेयमितिगतत्वेन चतुर्विधो भवति। तच्च चातुर्विध्यम् - गतागत - सुविक्षिप्त - संगत - सुसमाहित भेदात्।

तदुक्तं मालिनीविजये—

द्विसंज्ञं स्वप्नमिच्छन्ति पदस्थं व्याप्तिरित्यपि।[१]
........................ पदस्थं चतुर्विधम्,
गतागतं सुविक्षिप्तं संगतं सुसमाहितम्॥[२]

एतन्नामचतुष्टयं न केवलं संज्ञामात्रमपि त्वन्वर्थम्। षट्त्रिंशदङ्गुलप्राणचारोपजायमानगमनागमनसंबन्धाद् गतागतम्, दूरतरदेशकालोल्लिख्यमानपदार्थसंस्पर्शात् सुविक्षिप्तम्, संकल्पनैकवृत्तिमनोमात्रसंसर्गात् संगतम्, वैकल्पिकैकतानत्वात् सुसमाहितमिति। प्रकारान्तरेण लोकयोगप्रसंख्यानेति त्रैरूप्यवशात् स्वप्नस्य तिस्रः संज्ञाः। तत्र लौकिकी [सामान्यजनानुभूता] संज्ञा स्वप्नसुषुप्ततुर्यशब्दैः कथ्यते। यौगिकी संज्ञा पदस्थरूपरूपातीतशब्दैर्निगद्यते। ज्ञानीया संज्ञा व्याप्तिमहाव्याप्तिप्रचयशब्दैरुच्यते।

यथा जागरणावस्थायां प्रमेयस्य प्राधान्यं भवति, तथैवेह स्वप्नावस्थायां प्रमाणस्य प्राधान्यं भवति।

तदुक्तम्—

'मानभूमिरियं मुख्या स्वप्नो ह्यामर्शनात्मकः।[३],

स्वप्नशब्दस्य प्रवृत्तिनिमित्तम्—बाह्याभिमतभावानामग्रहणमिति।

प्रत्यभिज्ञाकारादीनां मतेन स्वप्नस्वरूपमित्थं प्रदर्शितं तन्त्रालोके—

आत्मसंकल्पनिर्माणं स्वप्नो जाग्रदविपर्ययः।
लयाकलस्य भोगोऽसौ मलकर्मवशात्तु॥[४]

---

१. त० लो० १२।३७ उद्धृतम्। २. त० लो० २।४४। ३. त० लो० १०।२५६।
४. त० लो० १०।२९०।

ईश्वरप्रत्यभिज्ञायां तु—

> **मनोमात्रपक्षेऽप्यक्षविषयत्वेन विभ्रमात् ।**
> **स्पष्टावभासा भावानां सृष्टिः स्वप्नपदं मतम् ॥**[१]

शैवपरिभाषायां तु—आत्मनः केवलसकलशुद्धेति त्रिविधामवस्थामुपवर्ण्य सकलावस्थातः केवलावस्थाप्राप्तिसमये जाग्रदादिभेदेन पञ्चविधोऽवस्थाभेदो दर्शितः। तत्र सकलावस्थापन्नस्यात्मनः स्वप्नावस्थासूक्ष्मदेहभोगनिमित्तानि शब्दादीनि पञ्च वचनादीनि पञ्च प्राणादीनि दश मनोबुद्ध्यहंकारचित्तानि चत्वारि, एतैः सह पञ्चविंशकः क्षेत्रज्ञनामकः आत्मा यदा कण्ठे स्थितो व्यावहारिकविषयान् विहाय तात्कालिकप्रातिभासिकविषयाननुभवति, तदा स्वप्नावस्था। तदुक्तं सिद्धान्तसारावल्याम्[२]—स्वप्नोऽन्तःकरणस्थवृत्तिविषयविज्ञानं सुषुप्तिः परम्। केवलावस्थापन्नस्यात्मनस्तु जाग्रदवस्थाकारणस्याकारस्योकारे बाह्यविषयग्राहकस्य मनसश्चाहङ्कारे लये सति अहङ्कारचतुष्टयस्योकारादिचतुष्टयेन सह कण्ठे सोऽहम्भावनयाऽवस्थानं निर्मलस्वप्नः। तदुक्तं सिद्धान्तबोधे[३]—

> **स्वप्नोऽन्तः करणैरेव केवलैर्गलदेशतः ।**
> **पूर्वं विषयाख्याणुयोगेन संवेदनं यथा ॥**

शैवमते स्वप्नस्वरूपस्य विषये एवं मतभेदेऽपि जाग्रदाद्यवस्थानां तात्पर्येणैकमेव रूपमिति विज्ञापयन्त्यभिनवगुप्तपादाः[४] :—

> **यस्य यद् यत् स्फुटं रूपं तज्जाग्रदिति मन्यताम् ।**
> **तदेवास्थिरसाभाति स पूर्वं स्वप्न ईदृशः ॥**
>
> **अस्फुटं तु यदाभाति सुप्तं तत्पुरोपि यत् ।**
> **त्रयस्यास्यानुसन्धिस्तु यद्वशादुपजायते ॥**
>
> **स्रक्सूत्रकल्पं तत्तुर्यं सर्वभेदेषु गृह्यताम् ।**
> **यत्त्वद्वैतभरोल्लासद्रावितशेषभेदकम् ॥**
>
> **तुर्यातीतं तु तत्प्राहुरित्थं सर्वत्र योजयेत् ।**

ज्ञानशक्तिः स्वप्न उक्तः ।[५]

## अपरतन्त्रेषु

तन्त्रशास्त्रे स्वप्नोऽयं मनस उल्लास एव निगद्यते। उक्तं च त्रिपुरारहस्ये ज्ञानखण्डे[६]—

---

१. ३।२।१६। २. यो० पा० ८ श्लो०। ३. शै० प० २ प० पृ० ६३।६४ उद्धृतम्। ४. त० आ० १०।२९४-२९७। ५. त० आ० १०।३००। ६. ९।४७-४८ 'जाग्रत्स्वप्नसुषुप्त्यादि मनोमयमितीरितम्' तेजो० वि० उ० ५।१०३।

स्वप्नस्तु मानसोल्लासस्तदेतं वर्जयेत् कथम् ।
भूयो निगृह्य पश्यामीत्येवं निश्चित्य वै दृढम् ॥

रुरोध चित्तं तु हठात्तदेतदभवत् स्थिरम् ।
तदानन्दसमुद्रान्तर्निमग्न इव सोऽभवत् ॥ इति ।

एष च स्वप्नो मनस एका क्रिया, अतो मनसा सहाऽस्य विशेषः सम्बन्धः न तु देहेन। यतो हि जन्मनः प्राग् मृत्योः पश्चाच्च न स्थूलशरीरं तिष्ठति, केवलं सूक्ष्मशरीरमेव, यत्र मनसो राज्यं विजृम्भते, स्वप्नस्य च विषयो न केवलं वर्तमान-घटना अपि तु भूतभाविसम्बन्धिघटनापि। तस्मात् स्वप्नदशायामपि मनोनिग्रहो जाग्रद्वदेव आवश्यक इति विचार्यते योगचिन्तकैः।

**स्वप्नेऽपि यो हि युक्तः स्याज्जाग्रतीव विशेषतः[1]** । इति ।

तदानीं मनोनिग्रहस्तस्यैव भवति यस्य जागरणे मनोनिग्रहो वर्तते नान्यथा। अर्थाद् यो हि पुरुषो जाग्रति मनो निगृह्णाति स एव समर्थः स्वप्नेऽपि। तादृशपुरुषस्तु जीवन्मुक्त इति कथ्यते, तदुक्तम्—'**तुरीयमक्षरमिति ज्ञात्वा जागरिते सुषुप्त्यवस्थापन्न इव यच्छ्रुतं यद् दृष्टं तत्सर्वमविज्ञातमिव यो वसेत् तस्य स्वप्नावस्थायामपि तादृगवस्था भवति स जीवन्मुक्त इति वदन्ति[2]** ।'

स्वप्नावस्थायां जीवस्य विशेषस्थानं कण्ठ इति '**कण्ठे स्वप्नं समाविशत्[3]**' इति ।

अस्मिन् सम्प्रदाये दिवास्वापपदेन विद्याभ्यासे प्रमाद इति गृह्यते। अर्थाद् योगचिन्तकैः कदापि विद्यायां प्रमादो न करणीय इति निर्गलितम्।

## दर्शनेषु

सांख्याः—स्वप्नस्य मायिकत्वं स्वीकुर्वन्ति।[4] तत्र कारणं संस्कारः। एषा बुद्धिवृत्तिः, अस्य साक्षी जीवः। तदुक्तं सांख्यदर्शने '**सुषुप्त्याद्यसाक्षित्वम्[5]**' इत्यस्य भाष्ये—

---

१. नारदपरिव्राजकोपनिषद् ३११ पृष्ठे।
२. ,, ,, ३१८ पृष्ठे।
३. ,, ,, ,, ।
४. सां० सू० १।१४८।
५. 'स्वप्नजागराभ्यामिव मायिकामायिकाभ्यां नोभयोर्मुक्तिः पुरुषस्य' (सा० सू० ३।२६) इत्यत्र वृत्तिः—मायिकः स्वप्नः, अमायिको जागरः इति।

जाग्रत् स्वप्नः सुषुप्तञ्च गुणतो बुद्धिवृत्तयः।
तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः ।। इति ।

स्वप्नावस्था च संस्कारमात्रजन्यो विषयाकारः परिणामः। मायिकत्वञ्चास्या असत्यमस्थिरत्वमिति यावत्। व्यञ्जितश्चैतत् 'स्वप्नजागराभ्यामिव मायिकामायिकाभ्याम्'[1] सूत्रभाष्ये।

यतो जाग्रद्दशायां प्रमाणविपर्ययविकल्पाख्यवृत्तयो गुणभेदेने अन्तःकरणेऽनुभूयन्ते, अतः स्वप्नोऽपि त्रिविधः, सात्त्विको राजसस्तामसश्चेति। एतच्छास्त्रानुसारं जगतोऽस्य कर्त्री प्रकृतिः सा सद्रजस्तमोगुणात्मिका अतस्तदुत्पन्नं जगदपि त्रिविधम्। तत्र ये पुरुषाः प्रधानतया सत्त्वप्रकृतयस्ते सत्फलाधायकं सात्त्विकमुत्तमं स्वप्नं पश्यन्ति प्रायः। ये तु राजसास्ते द्वेषात्मकान् मिश्रितान् स्वप्नान् विलोकयन्ति। ये खलु तामसास्ते मोहात्मकान् अशुभानेव पश्यन्ति।

स्वप्नस्य मायिकत्वेऽपि तत्प्रत्ययस्य नात्यन्तिकं मिथ्यात्वं खपुष्पवत्, न च स्वात्मन्यपि मिथ्यात्वम् अन्यथा स्वप्न इत्येव न स्यात्। न चात्यन्तादृष्टे स्वप्नः, किन्तु जाग्रद्दृष्टेऽर्थे इति दर्शितम् 'इतरस्यापि नात्यन्तिकम्'[2] इति सूत्रे।

उक्तञ्चान्यत्र—[3]

सदृशा दृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः।
अतो नातिप्रसंगोऽस्ति स्वप्नादौ भावनाबलात् ॥

योगशास्त्रानुयायिनः—प्रमाणादिपञ्चवृत्तिषु निद्रामप्येकां वृत्तिं मन्यन्ते किन्तु तत्र स्वप्नं न गणयन्ति। निद्रायां स्वप्नदशायां जायमानत्वेन नासौ वास्तविकी निद्रा। स्वप्नावस्था जाग्रत्सुषुप्तिमध्यवर्तिनी। यतो जाग्रद्दशायां प्रमाणविपर्ययविकल्पाख्यवृत्तयो गुणभेदेन अन्तःकरणेऽनुभूयन्ते। सुषुप्तिदशायां प्रमाणादिवृत्तयो नैजमवलम्बनं विरहन्ति। अपि तदभावप्रत्ययीभूतकारणस्वरूपतमोगुणाश्रयेण निद्रावृत्तिरुदेति। स्वप्ने नैतादृशी गतिः अतो मध्यपातित्वमस्य सुनिश्चितम्। मन्ये योगानुयायिनोऽस्यान्तर्भावं निद्रायामन्यस्यां वा कुर्वन्तीति। जाग्रद्वदत्राप्यनुभवो भवति गुणतारतम्येनान्तःकरणे अतः स्वप्नोऽपि गुणानुरोधेनास्मिन् मते त्रिविधो भवति सात्त्विको राजसस्तामसश्चेति सत्फलाधायकः सात्त्विकः, जाग्रद्दशादृष्टिगोचरीभूतपदार्थावलोकनमयः स्वप्नः। राजसो मध्यमः। विषयवासनामयः स्वप्नस्तामसिकोऽधमः। विचारितञ्चैतज्ज्ञानानन्दकृतभाष्ये[4]।

---

१. सां०सू० ३।२७ मायिकः स्वप्नः, अमायिको जागरः, इत्यनुरुद्धवृत्तिः। २. सा० सू० ३।२७। ३. सांख्यसूत्रानिरुद्धवृत्तौ १७२ पृष्ठे। ४. ६०, ६५ पृ०।

## वैशेषिकाः

वैशेषिकशास्त्रे चतुर्विधां विद्यां व्युत्पाद्य चतुर्विधा अविद्यापि व्याख्याता। तत्र चतुर्विधासु अविद्यासु एका अविद्या स्वप्नो नाम। तल्लक्षणं सूत्रकृतोक्तम्—'आत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः',[१] 'तथा स्वप्नः[२]' इति।

यथात्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिस्तथा स्वप्नज्ञानमपीत्यर्थः। उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्य इन्द्रियद्वारेणैव यदनुभवनं मानसं तत् स्वप्नज्ञानम्। यदा बुद्धिपूर्वाद् आत्मनः शरीरव्यापाराद् अहनि खिन्नस्य प्राणिनो निशि विश्रामार्थमाहारपरिणामार्थं चादृष्टकारितप्रयत्नापेक्षादात्मान्तःकरणसम्बन्धान्मनसि क्रियाप्रबन्धाद्दन्तर्हृदये निरिन्द्रिये आत्मप्रदेशे निश्चलं मनस्तिष्ठति तदा प्रलीनमनस्क इत्याख्यायते। प्रलीने च तस्मिन्नुपरतेन्द्रियग्रामो भवति। तस्यामवस्थायां प्रबन्धेन प्राणापानसन्तानप्रवृत्तावात्ममनःसंयोगविशेषात् स्वापाख्यात् संस्काराच्चेन्द्रियद्वारेणैवासत्सु विषयेषु प्रत्यक्षाकारं स्वप्नज्ञानमुत्पद्यते।

तत्स्वप्नज्ञानं त्रिविधम्—किञ्चित् संस्कारपाटवात्, किञ्चिद्धातुदोषात् (वातपित्तादि दोषात्) किञ्चिददृष्टवशात्।

तत्र संस्कारपाटवात्—कामी क्रुद्धो वा यमर्थमादृतश्चिन्तयन् स्वपिति तस्य तस्यामवस्थायां प्रत्यक्षाकारं ज्ञानं पुराणादिश्रवणजनितसंस्कारवशाज्जायते कर्णार्जुनीय–युद्धादिविषयकं जायते। अर्थात् तदानीं सैव चिन्तासन्ततिः (स्मृतिसन्ततिः) संस्कारातिशयात् प्रत्यक्षाकारा साक्षादर्थावभासिनी सञ्जायते।

धातूनां वात-पित्त-श्लेष्मणां दोषाद् यथा—तत्र वातदोषाद् आकाशगमन-वसुन्धरापर्यटन-व्याघ्रादि भय-पलायनादीनि नरः पश्यति। वातप्रकृतिकोऽपि नर एवमेव पश्यति। पित्तप्रकृतिः पित्तोपचयदोषदूषितो वा वह्निप्रवेश-वह्निज्वालालिङ्गन-कनकशैल-विद्युल्लताविस्फुरण-दिग्दाहादिकं पश्यति। श्लेष्मदोषप्राबल्यात्तु समुद्र-सन्तरणनदीमज्जन-धारासारवर्षण-रजतपर्वतादिकं पश्यति।

अदृष्टवशाद् यथा अदृष्टञ्च द्विधा धर्माधर्माभ्याम्। तत्र धर्माद् गजारोहण-छत्रलाभ-पायसभक्षण-राजसंदर्शनादिविषयकं स्वप्नज्ञानं जायते। अधर्मात्तु तैलाभ्यञ्जन-अन्धकूपपतन-उष्ट्रारोहण-पङ्कमज्जनस्वविवाहदर्शनादिविषयकं स्वप्नज्ञानमुत्पद्यते। अत्यन्ताप्रसिद्धपदार्थसंदर्शनमप्यदृष्टादेव जायते तत्रोक्तात् त्रिविधात् कारणाज्जायमानेषु सर्वत्र उक्तकारणत्रयं वर्तत एव किन्तु गुणप्रधानभावमादायैव पार्थक्येन व्यवहारः प्राधान्येन व्यपदेशा भवन्तीतिन्यायात्।

---

१. यत् स्वयमनुभूतेष्वननुभूतेषु वा प्रसिद्धार्थेषु वा यच्छुभावेदकं........ ... तत्सर्वं संस्कारधर्माभ्यां भवति, इत्यादि प्र० भा० ९।२।६।१२ क० सूत्रेषु। एवमुपस्कार-विवृतावपि वर्तते।

## नैयायिकाः

न्यायसूत्रस्य चतुर्थाध्याये द्वितीयाह्निके शून्यवादं निराकृतवता सूत्रकृता भाष्यकृता च स्वप्नविषये काचिच्चर्चा चर्चिता तामुपादाय तन्मतेन विवृणोमि—यथा स्मृतिसंकल्पौ पूर्वानुभूतपदार्थविषयौ, तथा स्वप्नेऽपि विषयाभिमानः पूर्वानुभूतपदार्थविषयकः। पूर्वानुभूतश्च पदार्थो नासन् संभवतीति न स्वप्नविषयाभिमानोऽसद्विषयको भवति। सिद्धमेतज्जाग्रद्दशायां यद् दृश्यते तद्विषयको भवति स्वप्नः, तत्वसद्विषयकः। ननु यदि स्वप्नोऽपि सद्विषयक एव, तदा स्वप्नस्य मिथ्यात्वं कथमुच्यत इति चेदित्थम्—यो हि पुरुषः सुप्तः स्वप्नं पश्यति, स एव पुरुषो जाग्रदवस्थायाम् 'इदमद्राक्षम्' इत्यादि स्मरति। तत्र **'स्वप्नविषयाभिमानो मिथ्या'** इति व्यवसायो जाग्रद्बुद्धिवृत्तिवशाज्जायते स्मरणे सत्यपि जाग्रदवस्थायां स्वाप्नविषया नोपलभ्यन्ते इति हेतोरेव स्वप्नविषयज्ञानस्य मिथ्यात्वमुच्यते न तु स्वरूपेण स्वप्नकाले तत्सत्त्वस्य बाधकाभावात्, क्वचिदपि देशे काले वा वर्तमानस्य मिथ्यात्वासंभवात्। स्वप्नविषयाभिमानस्य मूलं तु जाग्रद्विषयाभिमान एव। अतस्मिंस्तदिति व्यवसायः प्रधानाश्रयः—अपुरुषे स्थाणौ पुरुष इति यो हि व्यवसायः स प्रधानाश्रयः (पुरुषप्रत्ययमूलकः), पुरुषे पुरुषप्रत्ययो हि प्रधानम्, अपुरुषे पुरुषप्रत्ययश्चाप्रधानम्। अन्यथा पुरुषे पुरुषप्रत्ययं विना स्थाण्वादौ पुरुषोऽयमिति व्यवसायो न भवति। एवं **'हस्तिनं स्वप्नेऽद्राक्षम्'** इत्यादिस्वप्नविषयव्यवसायेऽपि जाग्रद्विषयाभिमानमूलको भवितुमर्हति। इत्थं जाग्रद्विषयस्य प्रधानता स्वप्नविषयस्याप्रधानता, तस्मात् प्रधानाप्रधानयोर्जाग्रत्स्वप्नविषययोर्न साम्यम्। एवं सति सिद्धे मिथ्याज्ञानस्य तत्त्वज्ञानमूलकत्वेऽपि यथा तत्त्वज्ञानान्मिथ्याज्ञानस्य विनाशो भवति तथैव जाग्रद्बोधेन स्वप्नविषयाभिमानस्य विनाशो भवति। स्वप्ने विषया न सन्ति किन्तु तथा अभिमानो भवति। उक्तञ्च भाष्ये—**'स्वप्नान्ते चासन्तो विषया उपलभ्यन्ते'**[1] इति। अन्तशब्दोऽत्रावस्थावाचीति तात्पर्यटीका। सर्वमेतत् प्रपञ्चितं न्यायसूत्रभाष्ययोः[2]। एतच्छास्त्रानुसारं स्वप्नः अयथार्थज्ञानमेव।

अत्र स्वप्नस्त्रिविधः[3]—भयोपसंहितः, प्रमोदोपसंहितः, उभयविपरीतश्च। निमित्तभेदादेव ह्यस्मिन् भेदः। कदाचित् स्वप्न एव न दृश्यते। यद्यप्यत्र स्वप्नस्य भेदो वर्णितः, तथाप्येषां हेतुविषये भाष्ये काचन चर्चा नोट्टङ्किता। मनोऽन्यत्र ये हेतवः सन्ति त एवात्राप्यङ्गीक्रियन्ते। यद्यपि स्मृतिसंकल्पवत् स्वप्नस्य पूर्वोपलब्धविषयता स्वीकृता, किन्त्वेवं सति 'निजशिरः खण्डनरूपस्य स्वप्नदर्शनस्य, स्वयमेव स्वखादनरूपस्य स्वप्नदर्शनस्य, एवमघटितस्याऽसमञ्जसस्य अन्यस्य स्वप्नदर्शनस्य कथं सङ्गता स्याद् यादृशो हि विषयः कदापि पूर्वं नोपलब्धो नाप्यनुभूत इति चेदुच्यते-

१. न्या० सू० ४।२।३३। २. न्या सू० ४।२।३४ ३५। ३. न्या० सू० ४।२।३३।

स्वशिरश्छेद-स्वखादने यद्यपि नानुभूते किन्तु शिरश्छेदादिकन्तु पूर्वमुपलब्धमेव तत्र संसर्गज्ञानम्, अर्थात् सम्बन्धिविशेषज्ञानमेव भ्रान्तमस्ति। तदानीमेवम्भूते भ्रमजनने कालविशेषादृष्टादिविशेषादय एव हेतवः। एवं स्वप्नेऽसत्यपि बाह्यार्थे यः स्वप्नविषयाभिमानो भवति जाग्रद्बुद्धिवृत्तिवशादेव तेन स मिथ्या तस्य विनाशो बोधेन जायत इति मन्यन्ते नैयायिकाः।

द्रष्टव्यमेतत् **'स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहाः सुखादिप्रत्यक्षमिच्छादयश्च मनसो लिङ्गानि'।**

इति सूत्रस्य अवतरणभाष्यम्—**'स्वप्नज्ञानमपि दृश्यमानेनेन्द्रियसन्निकर्षाद्यभावात् स्मृतिरूपमेवेति मनो विना नोपपद्यत इति स्वप्नज्ञानमपि मनोलिङ्गम्,'**[1] इति।

तथा स्वप्ने विनैव पदार्थं स्वाप्नपदार्थस्याभिमानं मिथ्याज्ञानं भवति **'स्वप्नविषयाभिमानवद् मिथ्योपलब्धिरिति चेद् भूतोपलब्धौ तुल्यम्**[2]**'** इत्यादि।

मीमांसकास्तु—स्वप्नमपि बाह्यमेव देशकालान्तरगतम्, अदृष्टोद्बोधितसंस्कारवशात् स्मर्यमाणं निद्रादूषितमनस्कतया भ्रान्त्या सन्निहितदेशकालमिव मन्यन्ते। विस्पष्टश्चैतद् अनन्तरदिवसानुभूतस्य स्वप्ने वर्तमानावभासदर्शनात्। अन्यत्रापि स्वप्ने तथाऽङ्गीकर्तुं युक्तम्। शिरश्छेदोऽपि अन्यत्रावगतः स्वसम्बन्धितया दोषवशादवगम्यते। सर्वत्र संसर्गमात्रमसदेव अवभासते संसर्गिणस्तु सन्त एव। सेयं विपरीता ख्यातिरुच्यते मीमांसकैः। असत्ख्यातिवादिनस्तु संसर्गिणोऽपलपन्तीति विशेषः। शुक्तिरजतवेदनेपि विद्यमानैव रजतत्वजातिर्विद्यमानस्यैव शुक्तिकाशकलस्य अनात्मभूतैव आत्मतयाऽवगम्यते। तथा बन्ध्यासुतादिष्वपि विद्यमान एव सुतशब्दार्थो बन्ध्यान्विततया तत्पदसन्निधिदोषवशादवगम्यते। तस्मात् स्वप्नादिष्वपि बाह्यस्यैव अन्यथाभूतस्य अन्यथाभासनं सिद्धम्।

## वेदान्ते

**शाङ्करमतम्—**

आरम्भणाधिकरणे[3] भगवता पूज्यपादेन स्वप्नस्य मिथ्यात्वं समर्थ्यापि मिथ्याभूतेन स्वप्नेन सत्यफलानुसन्धानता भवतीति अङ्गीकृतम्। प्रत्यक्षारिष्टदर्शनस्य यथा शुभाशुभफलानुसन्धानं कुशलैः क्रियते तद्वदस्य स्वप्नदर्शनस्यापि। असत्यस्यापि सत्यफलताऽवलोक्यते लोके। यथा गणितज्ञा असत्यमपि किञ्चिदङ्कं मानधनत्वेनाङ्गी-

---

१. १।१।१६ न्या० सू०। २. ४।१।३२ तथा च ४।२।३१ न्या० सू०। ३. ब्र० सू० २।१।६।१४।

कृत्य सत्यं गणितं सफलयन्ति, यथा वा रेखानृताऽक्षरप्रतिपत्त्या अकारादिसत्याक्षर-प्रतिपत्तिर्दृश्यते। एषाऽवस्था जीवस्यैवाङ्गीकृता, तथा च भाष्यम्[1]—'**इदानीन्तु तस्यैवावस्थाभेदः प्रपञ्च्यते**' इति।

अपि च स्वाप्निकी सृष्टिर्न पारमार्थिकी अपि तु मायामयी जीवकर्तृका मायामयत्वेऽपि स्वप्नो भाविसूचक इत्यादि विस्तरेण सन्ध्याधिकरणे[2] प्रतिपादितम्।

तदनुयायिनः पद्मपादाचार्या अपि पञ्चपादिकायामेवोक्तवन्तः—**तदिह निद्रादि-दोषोपप्लुतं मनोऽदृष्टादि समुद्बोधितसंस्कारविशेषसहकार्यनुरूपं मिथ्यार्थ-विषयं ज्ञानमुत्पादयति, तस्य च तदवच्छिन्नापरोक्षचैतन्यस्थाविद्याशक्तिराल-म्बनतया विवर्तते**[3]' इति। तस्मादान्तरः स्वप्नार्थप्रतिभासः।

विद्यारण्योऽपि विवरणप्रमेयसंग्रहे—**स्वप्नपदार्थज्ञानं तु न प्रमाणम्, स्वप्नेऽपि देहस्यान्तरन्तःकरणवृत्तौ निद्रादिदोषोपप्लुतायामभिव्यक्ते वृत्त्यवच्छिन्न-चैतन्ये स्थिताऽविद्या अदृष्टोद्बोधितनानाविषयसंस्कारसहिता प्रपञ्चाकारेण विवर्तताम्**[4] इत्याह।

अप्पयदीक्षितोऽपि सिद्धान्तलेशसंग्रहे[5] 'केचन आचार्या स्वप्नस्य कारणं सुषुप्त्याख्यं तमोऽज्ञानमिति मन्यन्ते इत्येवमनेकेषामाचार्याणां मतमुपन्यस्य स्वाप्नपदार्था-धिष्ठानविचारं स्वाप्नपदार्थानुभवप्रकारं च विस्तरेण कृतवान्।

एवमन्यत्रापि वेदान्तग्रन्थेषु भाष्यानुसारी विचारो वर्तते।

**विशिष्टाद्वैतिनः**—स्वप्ने दृश्यमानार्थजातं परमपुरुषसृष्टम्, न तु जीवसृष्टम्। इयञ्च स्वाप्निकी सृष्टिः स्वप्नद्रष्टृ-पुरुषानुभाव्या तत्कालमात्रावसाना इतरपुरुषाननु भाव्या आश्चर्यमयी। एवं विधाश्चर्यरूपा सृष्टिः सत्यसंकल्पस्य परमपुरुषस्यैव उपपद्यते सत्यसंकल्पत्वादियुक्तस्य जीवस्य संसारदशायां कार्त्स्न्येनानभिव्यक्तस्वरूपत्वान्न तथाविधाश्चर्यमयी सृष्टिरुपपद्यते। **कामं कामं पुरुषो निर्मिमाणः**'[6] इति श्रुतिरपि परमपुरुषमेव निर्मातारमाह।

**य एषु सुप्तेषु जागर्ति तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते।**
**तस्मिन् लोकाश्रितास्सर्वे तदु नात्येति कश्चन**[7]॥

इत्युपक्रमसंहारयोः परमपुरुषासाधारणस्वभावप्रतीतेः।

---

१. ब्र० सू० ३।२।१।१। २. ब्र० सू० ३।२।१।१। ३. १० पृष्ठे। ४. १४१-१४३ पृष्ठे। ५. ३४०-३५६ पृष्ठे। ६. कठ. २।५।८। ७. कठ. २।५।८।

अपि च परमपुरुषसंकल्पाद् अस्य जीवस्य स्वाभाविकं रूपं तिरोहितं भवति। एवं देहयोगादपि। अतोऽनभिव्यक्तस्वरूपत्वात् स्वप्ने जीवो न रथादीन् संकल्पमात्रेण स्रष्टुं शक्नोति। तस्मान्निश्चप्रचं यद् भगवता एव स्वप्ने प्राणिनां पुण्यपापानुगुणा तत्तत्पुरुषानुभाव्या तत्तत्कालावसाना स्वदेहेन देशान्तरगमनम्, राज्याभिषेकः, शिरश्छेदः इत्यादयो विषयाः सृज्यन्ते। अपि च स्वप्नाध्यायविदः स्वप्नं शुभाशुभयोः सूचकमाचक्षते। सूचकत्वं च स्वसंकल्पायत्तस्य नोपपद्यते। तथा च अशुभस्यानिष्टत्वाच्छुभस्य सूचकमेव सृष्ट्वा पश्येत्। अतः स्वाप्ना अर्था न जीवसंकल्पपूर्वका अपि तु स्वप्ने सृष्टिरीश्वरेणैव कृता। तदुक्तं श्रीभाष्ये[१]—स्वप्ने च प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्याः तत्तत्कालावसानाः तथाभूताश्चार्थास्सृज्यन्ते।

तथा हि श्रुतिस्वप्नविषया **'न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते··· ·· ···स हि कर्ता'**[२] इति।

**यद्यपि सकलेतरपुरुषमात्रानुभाव्यतया तदानीं न भवन्ति, तथापि तत्तत्पुरुषानुभाव्यतया तथाविधानर्थानीश्वरः सृजति, स हि कर्ता, तस्य सत्यसंकल्पस्याश्चर्यशक्तेस्तथाविधं कर्तृत्वं सम्भवति··· ··· ·· इत्यादि।**

तत्रैव गूढार्थसंग्रहे[३]—न हि सुप्तस्य जन्तोः क्षणमात्रेण योजनशतान्तरितं देशं पर्येतुं विपर्येतुं च तत्र सामर्थ्यं संभाव्यते। क्वचिच्च प्रत्यागमनवर्जितं स्वप्नं श्रावयति कुरुष्वहमद्य शयानो निद्रयाऽभिप्लुतः स्वप्ने पाञ्चालानभिगतश्चास्मिन् प्रतिबुद्धश्चेत्यादि। एतत् सर्वं जीवस्य कर्तृत्वे सामञ्जस्यं न लभते।

**शुद्धाद्वैतिनो वल्लभमतानुयायिनः—**

न हि तावत् स्वप्नः सत्यमपि तु मिथ्या। स्वप्नप्रपञ्चस्तु मायामात्रं देशकालवस्तुसापेक्षाभिव्यक्त्यभावात्। **'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः'** इत्यादिश्रुतिषु सर्जनता प्रतिपादिता, न तु सृष्टस्य पदार्थस्य सत्यता। यथा—**ऐतदात्म्यमिदं सर्वं तत्सत्यम्' 'आत्मानं स्वयमकुरुत तत्सत्यम्' 'असतः सज्जायते'** इत्यादिश्रुतिभ्यो अस्य जगतः सत्यत्वं प्रतीयते न एवं स्वप्नप्रपञ्चस्य सत्यत्वं क्वचिच्छ्रुतिराह। अपि च यथा सत्यप्रयोजनं जगतः सिध्यति—न तथा स्वप्नतः। स्वप्नमात्रविहारस्तु महामायाविस्वात्मायायाऽपि सिध्यति। नापि स्वाप्निकसृष्टिप्रतिपादकश्रुतिबलात् सृष्टः स्वप्नप्रपञ्चो भिन्नो, जीवस्यैकत्वात्। अविद्यया मन्यत इति वचनान्न तत्सुखदुःखभोगार्थमपि सत्यत्वमङ्गीकर्तव्यम्। स्थानद्वयप्रतिज्ञा

---

१. ब्रह्म० सू० ३।२।१ पृ० ८५२-८५५ पृष्ठेषु। २. बृ० उ० ४।३।१०। ३. ८५५ पृष्ठे।

च विरुध्येत 'जीवतो मृतांश्च पश्यति' इति लोकद्वय दर्शनम्। अतो लोकद्वयप्रतिच्छाय-रूपत्वान्मायया क्रीडायामन्यानुरोधाभावेनातिसुखत्वाद् भगवत्कृतमात्रवाचकत्वाच्च श्रुतेरतिरिक्तकल्पनायां प्रमाणाभावान्मायामात्रमेव स्वप्नः। अतो न तत्कृतगुणदोष-सम्बन्धो जीवस्य। दीक्षितस्यान्नभोजनादिप्रायश्चित्तं तु भगवत्क्रीडायामपि प्रति-ज्ञायत्वात् क्रियते तदानीं कर्तृत्वस्यारोपादन्यदा कर्तृत्वस्याशास्त्रत्वान्न धर्माधर्म-जनकत्वम्। अयञ्च स्वप्नः शुभाशुभफलसूचकः क्वचिदाज्ञाविशेषदानसूचकश्च। स्वप्नस्य कर्ता भगवानेव करणमुपादानं च मायैव तस्मात् स्वाप्निकी सृष्टिर्मायामयी न वस्तुभूता। यदि मायिक-स्वप्न-सृष्टौ सत्यत्वमुपलभ्येत, तर्हि यथा जागरिते दोषव-शान्मायिकत्वदर्शनं तथैव स्वप्ने गुणवशात् सत्यस्य दर्शनम्। स्वापपदेन स्वप्नविषयकं ज्ञानं गृह्यतेऽस्यैवावान्तरभेदः सुषुप्तिः। सुषुप्तौ आत्मस्फुरणं स्वत एव जायते। विस्तरेण निगदितञ्चैतद् वल्लभभाष्ये प्रस्थानरत्नाकरे च वल्लभपुरुषोत्तमाभ्याम्।

**निम्बार्कास्तु** - स्वाप्निकी सृष्टिः परमेश्वरनिर्मिता[१], न तु जीवकृता। यतो हि परमेश्वरः सत्यसंकल्पः सर्वज्ञत्वशक्तिमान् च। अत आश्चर्यमयमपि सर्गं कर्तुं स शक्तः। जीवस्तु न तथा, तस्य बद्धत्वाद् ईश्वरीयसकलशक्तेः तस्मिन्नप्रकाशित-त्वात्। यदि हि जीव एव कर्ता तदा इष्टस्वप्नदर्शनमेव भवेत्, न तु अनिष्टस्वप्न-दर्शनम्। दृश्यते तदपि। अतः परमात्मा एव निर्माता अस्याः सृष्टेरित्याहुः[२]।

**माध्वास्तु**—स्वप्नविषयकं ज्ञानं मिथ्येति अङ्गीकुर्वन्तः स्वप्नसृष्टिं सत्यां निरुपादानिकाञ्च कथयन्ति। चिन्तामणि-कामधेनु-कल्पतर्वादिभ्यः पदार्थाः चिन्ता-मात्रनिमित्तादुत्पद्यन्ते। तत्र हि न चिन्तामण्यादीनामुपादानत्वं विक्रियाया अदर्शनात्। तथैव स्वप्नेऽपीति।

**विज्ञानभिक्षवस्तु**—स्वप्नसृष्टेः साक्षान्निर्माता परमात्मा एव। **'स्वप्नेऽपि जीवः सुखदुःखभोक्ते'** त्याद्यपि परमात्मप्रकरणस्थमेव। **'य एष सुप्तेषु जागर्ति'** इत्यादिकं ब्रह्मलिङ्गमेव जीवव्यावृत्तम्। न च श्रुत्यन्तरे स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा च स्वपिति जोवस्य स्वयं शब्देन स्रष्टृत्वमुक्तमिति वाच्यम्, उपाधिद्वारकोपादनत्वाभिप्रायेणैव स्वयंशब्दप्रयोगात्. स्वेन ज्योतिषेति तृतीया च विशेषणे अलुप्तचैतन्ये एव स्वपितीत्यर्थः। एतेन न तत्र रथा इत्यादि श्रुत्युक्तजोव-

---

१. स्वप्ने सत्यसंकल्पसर्वज्ञपरमेश्वरनिर्मितमेव रथादि कार्यजातम्। यतो ह्याश्चर्यरूपं तन्न जीवकृतं तदीय सत्यसंकल्पत्वादेर्बद्धावस्थायां कात्स्न्येंनानभिव्यक्तस्वरूपत्वात्। वेदान्तपरिजातसौरभः—ब्र० सू० ३।२।३।

२ बुद्धिपूर्वकेष्टागमसूचकस्वप्नादर्शनादेवानिष्टागमसूचकस्वप्नदर्शनाच्च परमात्मैव स्वप्न-रथादिनिर्माता। वे० पा० सौ०—ब्र० सू० ३।२।४।

कर्तृत्वमप्युपपन्नं पच्यते तण्डुलः स्वयमेवेतिवत्, उपाधिद्वारकपरिणामस्वातन्त्र्यविवक्षयेति मन्तव्यम्। न स्वप्नो ज्ञानमात्रं स्वप्ने जाग्रद्वदेव पुत्रादीनां पदार्थानां प्रतीयमानत्वात् ते पदार्था आत्मचैतन्यमात्रा भवितुं नार्हन्ति नित्यतापत्तेः। स्वरूपचैतन्यस्य निराकारत्वात्तथा कर्मकर्तृविरोधेनैकस्य भास्यभासकतानुपपत्तेः, जाग्रत्पदार्थानामपि तथात्वापत्त्या विज्ञानवादिबौद्धमताभ्युपगमापाताच्च। यदि च बुद्धेर्घटाकारः परिणाम एव ज्ञानशब्देनोच्यते, तदा स एवास्माभिः स्वप्नसृष्टिरुच्यते। एवं स्वप्नेऽपि सृष्टयङ्गीकारे स्वप्नो मायामात्रं जाग्रत्तु सत्यम्। अर्थात् स्वाप्नसृष्टिः परमेश्वरस्य मायामात्रमिति तु जाग्रत्सृष्टितो वैलक्षण्यम् यथा जाग्रद्विषयाः सर्वपुरुषसाधारण्येन अर्थक्रियाकारित्वेन स्थिरत्वेन दृष्टोत्पादकविनाशकसामग्रीनियतत्वादिना च सर्वधर्मैरभिव्यज्यन्ते नैव स्वप्नविषयाः। अत इन्द्रजालवत् परमेश्वरमायाकार्यतया मायामात्राः। ऐन्द्रजालिकेश्वरयोर्विशेषस्त्वियान् यदैन्द्रजालिकस्य मन्त्रादिनैरपेक्ष्येण सत्यसंकल्पादिमती प्रकृतिपुरुषादिकोशभूता स्वशक्तिरेव मुख्यमाया। यथा ऐन्द्रजालिकं नात्यन्तममसत् तथैव स्वप्नसृष्टिरपि। नह्यात्यन्तासत उपलब्धिर्भवति। विस्तरेणास्मिन् विषये सांध्याधिकरणे विज्ञानामृतभाष्ये प्रतिपादितम्।

## योगवासिष्ठादिषु

योगवासिष्ठे तु मनसस्तिस्रोऽवस्थाः 'जाग्रत्स्वप्नसुषुप्तयः' प्रदर्शिताः। एतासामपराणि नामानि **'घोरशान्तमूढा'** इति, अर्थाज्जाग्रदवस्थाकालिकं चित्तं घोरम्, स्वप्नावस्थाकालिकं शान्तम्, सुषुप्त्यवस्थाकालिकं मूढमिति व्यपदिश्यते। एतदवस्थात्रयरहितं स्वतन्त्रं चित्तं मृतप्रायमिव सत्त्वरूपेण स्थितं सर्वत्रैकरसं भवति। तदुक्तम्[1]—

> **जाग्रत्स्वप्नसुषुप्ताख्यं त्रयं रूपं हि चेतसः।**
> **घोरं शान्तं च मूढं च आत्मचित्तमिहास्थितम्॥**
>
> **घोरं जाग्रन्मयं चित्तं शान्तं स्वप्नमयं स्थितम्।**
> **मूढं सुषुप्तभावस्थं त्रिभिर्हीनं मृतं भवेत्॥**
> **यच्च चित्तं मृतं तत्र सत्त्वमेकं स्थितं समम्।**

स्वप्नश्च कः, कीदृक् कदा च भवतीति विमर्शे आह—बाह्येन्द्रियाणां (ज्ञानेन्द्रियाणाम्) क्रियां विनैव अन्तः क्षोभेण यज्ज्ञानं जायते तदेव स्वप्नपदेनोच्यते। यथा जीवः प्राणैः क्षुब्धो भूत्वा ज्ञानेन्द्रियद्वारा बाह्यपदार्थान् पश्यति, तथैव यद्यद्वासनाभिभूतो भवति तत्तदनुरूपस्वप्नान् अन्तरनुभवति। तत्रेदृक्प्रकारः—जीवधातुः सुषुप्तौ सौम्यावस्थां प्राप्तः सन् यदा प्राणैः क्षुब्धस्तदा स चितिचित्ताकारतां गतः स्वस्मिन्नेव सकलजगतां भावाभावपदार्थान् सविशदं तथानुभवति यथा बीजः स्वस्मिन् वृक्षमनु-

[1]. यो० वा० ६।१२४। ३६-३८।

भवति। तत्र वायुना क्षुब्धे स्वप्ने गगनगमनादिदर्शनम्, जलेन क्षुब्धे जलसम्बन्ध्यादि-दर्शनम्, पित्तैः क्षुब्धे ग्रीष्मादिसम्बन्धि स्वप्नदर्शनम्, रक्ताधिक्ये तु रक्तपदार्थदर्शनं भवति। तदुक्तम्[1]—

सुषुप्ते सौम्यतां यातैः प्राणैः संचाल्यते तदा।
स जीवधातुः सा संवित् ततश्चित्ततयोदिता॥

स्वान्तः संस्थजगज्जालं भावाभावैः क्रमभ्रमैः।
पश्यति स्वान्तरेवाशु स्फारं बीज इव द्रुमम्॥

जीवधातुर्यदा वातैः किञ्चित् संक्षुभ्यते भृशम्।
ततोऽस्म्यहं सुप्त इति पश्यत्यात्मनि खे गतिम्॥

यदाऽम्भसा प्लाव्यतेऽसौ तदा वार्यादिसंभ्रमम्।
अन्तरेवानुभवति स्फारं बहिरिवाखिलम्॥

रक्तापूर्णो रक्तवर्णान् देशान् कालान् बहिर्यथा।
पश्यत्यनुभवात्मत्वात् तत्रैव च निमज्जति॥

सेवते वासनां यां तां सोऽन्तः पश्यति निद्रितः।
पवनक्षोभितो रन्ध्रैर्बहिरक्षादिभिर्यथा॥

अनाक्रान्तेन्द्रियच्छिद्रो यतः क्षुब्धोऽन्तरेव सः।
संविदानुभवत्याशु स स्वप्न इति कथ्यते॥

स स्वप्नो द्विविधः—

१. स्वप्नः २. स्वप्नजाग्रत्। तत्राद्यः—
अल्पकालं मया दृष्टमेवं नो सत्यमित्यपि।
निद्राकालानुभूतेऽर्थे निद्रान्ते प्रत्ययो हि यः।
स स्वप्नः कथितस्तस्य महाजाग्रत्स्थिते सति॥[2]

स्वप्नजाग्रत्तु—

चिरसंदर्शनाभावादप्रफुल्लबृहद्वपुः।
स्वप्नो जाग्रत्तया रूढो महाजाग्रत् पदं गतः।
अक्षते वा क्षते देहे स्वप्नजाग्रन्मतं हि तत्॥[3]

---

१. यो० वा० ४।१९।९६-२३। २. यो० वा० ३।११७। १६-२०। ३. यो० वा० ३।११७। २०, २२।

**सूतसंहितायाम्**

जाग्रदित्युदितावस्थामपेक्ष्य स्वपनाभिधा ।
अवस्थाऽसत्यरूपा हि न सत्या हि दिवौकसः ।।[१]

तथा जाग्रदवस्था स्वकारणमपेक्ष्यासत्यापि सति प्रमातरि बाधविरहरूपात् स्वप्नावस्थावैलक्षण्यात् सत्या तामपेक्ष्य स्वप्नावस्थापि सत्येव प्रमातरि बाधितत्वाद-सत्यैव । एवमेकस्य वस्तुनो व्यवहारदृष्ट्या सत्यत्वं परमार्थोपाधावसत्यत्वं च न विरुध्यते ।

तथापि स्वप्नदृष्टं तु वस्तु स्वर्गनिवासिनः ।
सूचकं हि भवत्येव जाग्रत्सत्यार्थसिद्धये ।।[२]

यद्यपि स्वप्नावस्था मिथ्याभूता तथापि स्वप्नदृष्टं वस्तु भाविनः सत्यस्य फलस्य सूचकं भवति ।

स एव भगवानीशो माययैवात्मभूतया ।
मुह्यमान इव स्थित्वा स्वस्वातन्त्र्यबलेन तु ।।

शरीरमिदमास्थाय करोति सकलं पुनः ।
जाग्रत्संज्ञमिदं धाम प्रकल्प्य स्वीयमायया ।।

राजपुत्रादिवत्तस्मिन् क्रीडया केवलं हरः ।
अन्नपानादिभिः स्त्रीभिस्तृप्तिमेति सुरर्षभाः ।।

स्वप्नकाले तथा शम्भुर्जीवत्वेन प्रकाशितः ।
सुखदुःखादिकान् भोगान् भुङ्क्ते स्वेनैव निर्मितान् ।।

सुषुप्तिकाले सकले विलीने तमसावृतः ।
स्वस्वरूपमहानन्दं भुङ्क्ते दृश्यविवर्जितः ।।

जाग्रत्स्वप्नसुषुप्त्याख्यावस्थारूपेण भाति यः ।
स विश्वतैजसप्राज्ञसमाख्यः क्रमशो भवेत् ।।

विश्वो हि स्थूलभुङ् नित्यं तैजसः प्रविविक्तभुक् ।
प्राज्ञस्त्वानन्दभुक् साक्षी केवलः सुखलक्षणः ।।[३]

---

१. सू० सं० ब्रह्मगीतायां २।२७ । २ सू० सं० ब्र० गी० २।२८ , ३. सू० सं० ब्रह्मगीतायां ८ । १६-२३ ३१-३२ ।

जन्माङ्गे गोचरे प्रश्ने ग्रहयोगेन यादृशः।
जायते भुवने स्वप्नस्तत्स्वरूपं विविच्यते ॥

ज्योतिः शास्त्रे ग्रहनिबन्धनं हि जगतां सर्वं कार्यं विचार्यते तत्र तेषामेव प्राबल्यात्। अतः स्वप्नोऽपि तद्वशाद् दृष्टो भवति। एते हि ग्रहा यत्प्रकृतिकास्तदनुसारं स्वप्नं दर्शयन्तीति तत्प्रकृत्यादिविचाराय किञ्चिल्लेखनम् आवश्यकम्। यद्यप्येतादृशोविमर्शो ज्योतिः शास्त्रीयविविधग्रन्थेषु बहुधा वर्तते, बृहत्पाराशरहोरायां तु विस्तरेणेदमस्ति —

| | सूर्यः | चन्द्रः | भौमः | बुधः | गुरुः | शुक्रः | शनिः | राहुः | केतुः |
|---|---|---|---|---|---|---|---|---|---|
| स्वभावः | क्रूरः | पूर्णः सौम्यः क्षीणः क्रूरः | क्रूरः | सौम्यः | सौम्यः | सौम्यः | क्रूरः | क्रूरः | क्रूरः |
| स्वरूपम् | आत्मा | मनः | बलम् | वाणी | ज्ञान-सुखे | वीर्यम् | दुःखम् | | |
| पदम् | राजा | राजा | सेनापतिः | युवराजः | मन्त्री | मन्त्री | भृत्यः | सेना | सेना |
| रङ्गः | रक्तश्यामः | गौरः | रक्तः | दुर्वाश्यामः | गौरः | चित्रः | कृष्णः | कृष्णः | कृष्णः |
| प्रत्यधिदेवः | अग्निः | जलम् | कार्तिकेयः | विष्णुः | इन्द्रः | इन्द्राणी | ब्रह्मा | | |
| लिङ्गम् | पुरुषः | स्त्री | पुरुषः | नसपुंकम् | पुरुषः | स्त्री | नपुसकम् | | |
| वर्णः | क्षत्रियः | वैश्यः | क्षत्रियाः | वैश्यः | ब्राह्मणः | ब्राह्मणः | शूद्रः | | |
| गुणः | सत् | सत् | तमः | रजः | सत् | रजः | तमः | | |
| तत्त्वम् | | | अग्निः | भूमिः | आकाशम् | जलम् | वायुः | | |
| प्रकृतिः | पित्तः | वातः | पित्तः | पित्तवातकफा | कफः | कफः | वातः | वातः | वातः |
| स्वामी | अस्थनः | रक्तस्य | मज्जायाः | त्वचः | वसायाः | शुक्रस्य | स्नायोः | | |
| स्वामी | देवालयस्य | जलाशयस्य | अग्निस्थानस्य | क्रीडास्थानस्य | केशस्य | शयनस्य | उत्करस्य | | |
| स्वामी | अयनस्य | मुहूर्तस्य | अहोरात्रस्य | ऋतोः | मासस्य | पक्षस्य | वर्षस्य | | |
| स्वामी | कटोः | लवणस्य | तिक्तस्य | मिश्रितस्य | मधुरस्य | अम्लस्य | कषायस्य | | |

**अपरत्र एवमपि दृश्यते**

सूर्यः रक्तवर्णः पशुभूमिचारी, पित्तप्रकृतिकः, सद्‌गुणी, क्रूरग्रहः, क्षत्रियवर्णः, पुरुषसंज्ञकः ।
चन्द्रः शुक्लः, जलचारी कफप्रकृतिः, सद्‌गुणी, शुभग्रहः, वैश्यः, स्त्रीसंज्ञकः ।
भौमः रक्तः, भूचारी, पित्तप्रकृतिः, तमोगुणी, क्रूरः, क्षत्रियः, पुरुषः ।
बुधः हरितः, उच्चभूचारी, वातपित्तकफप्रकृतिः रजोगुणी, शुभः, शूद्रः, स्त्री ।
गुरुः पीतः, ग्रामचारी, त्रिधातुकः, सद्‌गुणी, शुभः, ब्राह्मणः, पुरुषः ।
शुक्रः श्वेतः, जलचारी, कफप्रकृतिः, रजोगुणी, शुभः, ब्राह्मणः, स्त्री ।
शनिः कृष्णः, वायुचारी, वातप्रकृतिः, तमोगुणी, क्रूरः, शूद्रः, स्त्री ।

राहुकेतू तु शनिवद्, वैशिष्ट्यश्च तत्र चाण्डालवर्ण एव ।

मानवानां प्रकृतिरपि एतच्छास्त्रानुसारं ग्रहस्थितिवशादेव जायते। यस्य जातकस्य यादृशं लग्नं तदीशश्च यादृशः, तथा लग्ने स्थितानां ग्रहाणां च यादृशी स्थितिः, दृष्ट्यादिबलश्च यादृशस्तदनुकूला एव प्रकृतिस्तस्य प्रसूयते। अतः स्वप्रकृत्यनुसारमेव स्वप्नान् पश्यन्ति जनाः। एतदेवादाय अस्मिन् शास्त्रे लग्नगैर्ग्रहैः स्वप्नानां स्वरूपं प्रदर्शितम्। अत्र लग्नगस्य लग्ननवमांशगस्य ग्रहस्य प्राधान्यम्। तस्माल्लग्नलग्ननवमांशगतग्रहानुकूलजन्यप्रकृतिवन्तो जनाः प्रकृत्यनुकूलस्वप्नद्रष्टारो भवन्ति। जातकजन्मकुण्डलीस्थग्रहानुकूलः स्वभावः स्थायी भवति। तेन नैरन्तर्यस्थितिस्तादृशस्वप्नानाम्। प्रश्नकुण्डलीस्थग्रहानुसारस्वभावस्त्वस्थायी भवति। अतोऽस्थायित्वं भवति प्रश्नलग्नगतग्रहकृतस्वप्नानाम्। प्रायो ह्येते एवाकस्मिकाः स्वप्ना भाविशुभाशुभसूचकाः सफलाः। अपरास्तु यथास्वप्रकृतिनिबन्धनाः सार्वदिका अफला एव प्रकृतिनैयत्येन जायमानत्वात्। उभयोरपि स्वप्नयोः शुभाशुभग्रहचारजन्यत्वादुभयत्र सुस्वप्नत्वं दुःस्वप्नत्वञ्च सिध्यति। शास्त्रेऽस्मिन् ग्रहचारबलेनैव मानवानां स्थितिः मर्यादा, आयुः, वित्तम् दशा, रागः, अभ्युदयः, विद्या इत्याद्यखिलं विचार्यते।

## ज्यौतिषे स्वप्नस्य हेतुफलस्वरूपवर्णनम्

ज्योतिःशास्त्रे जातकानां जन्मकुण्डल्यां ग्रहस्थितिवशाद् वैविध्येन स्वप्नदर्शनमुपवर्ण्य तेषां शुभाशुभत्वं निरूपितम् यथा—येषां जातकानां लग्ने लग्ननवमांशे वा सूर्यस्तिष्ठति, ते प्रायः सूर्यबिम्बम्, रक्तवस्त्रम्, अग्निम्, अन्यांश्चैवंविधान् स्वप्नान् पश्यन्ति। तथैव येषां लग्ने नवांशे वा चन्द्रस्तिष्ठति, ते प्रायः श्वेतानि वस्त्राश्वपुष्परत्नानि सुनायिकाप्रभृतींश्च पदार्थान् स्वप्ने पश्यन्ति। एवं येषां लग्ने तन्नवांशे वा भौमो वर्तते ते सुवर्णरक्तवस्त्रमालामणिप्रवालादीन् ईक्षन्ते, तथा येषां लग्ने तन्नवांशे बुधोऽस्ति, ते स्वप्ने अश्वं स्वर्गगमनं पश्यन्ति धर्मकथाश्च शृण्वन्ति। यदि गुरुस्तत्रैव राजते येषां कुण्डल्याम्, ते रति-धर्मकथा-देवदर्शनादि-सुस्वप्नान् अवलोकयन्ते। शुक्रश्चेल्लग्ने नवांशे वा तेषां मित्रसमागमजलतरण देवदर्शनविलासादिस्वप्ना भवन्ति। तादृशः शनिश्चेत्तदा वनपर्वतगमननीचसंगत्यादयः स्वप्ना जायन्ते। राहुकेतू शनिवदेव स्वप्नानुद्भावयतः। इमे शनिप्रभृतयो ग्रहाः पापात्मत्वाद् दुःस्वप्नदा भवन्ति। अपि च जन्मलग्नात् तृतीयपञ्चमसप्तमैकादशषष्ठस्थानेषु गुरुरविशुक्रैर्दृष्टश्चन्द्रो वर्तते अथवा नवमे केन्द्रेषु (१।४।७।१०) च शुभग्रहाः स्युः स्तदा स्वप्ने सुन्दरीणां समागमो जायते।

उक्तञ्च नीलकण्ठचाम्[१]

लग्नांशगेऽर्के तनुगेऽपि वास्मिन् दुःस्वप्नमीक्षेत यथार्कबिम्बम्।
रक्ताम्बरं वह्निमथापि चन्द्रे शुभ्राश्वरक्ताम्बरपुष्पवस्त्रम्॥

१ ता० नी० क० वर्षप्रकरणे ६ अ० १५-१८ श्लोकाः।

स्त्रियः सुरूपाश्च कुजे सुवर्णरक्ताम्बरस्रङ्मणिविद्रुमाणि ।
बुधे हयस्वर्गतिधर्मवार्ता गुरौ रतिर्धर्मकथासुरेच्छा ॥

सद्बन्धुसंगश्च सिते जलानां पारे गतिर्देवरतिर्विलासः ।
शनावरण्याद्रिगतिश्च नीचैः सगश्च राहौ शिखिनीत्थमेव ॥

सहजधीमदनायरिपुस्थितो यदि शशी गुरुभानुसितेक्षितः ।
नवमकेन्द्रगते तु शुभग्रहे स्वबलया मनुजो रमते सदा ॥

बलभद्रविरचिते हायनरत्ने अन्तिमे भागे दिनप्रवेशे स्वप्नविचारो विहितो वर्तते । तत्र उपर्युक्तास्ताजिकनीलकण्ठ्याः प्रथमे त्रयः श्लोकास्तथैव निर्दिष्टाः शेषभागस्त्वित्थम्[१]—

चण्डेश्वरः—

मिश्रे मिश्रं वदेत् स्वप्नं स्वामियुक्ते तु हेतुजम् ।
नीचेऽरिभे जिते वापि परवेश्मगतेऽस्तगे ॥

दुस्स्वापवाच्यं तत्स्वप्नमन्यथा सुभगं वदेत् ।
लग्ने सूर्ये शुभैर्दृष्टे रविराशिस्तयोर्युते ॥

स्वप्ने स्वप्नं तदा दृष्टं निश्चयेनेति निर्दिशेत् ।
रवीन्द्रशुक्रौ दृष्टौ च तयो र्वा यदि सप्तमः ॥

तदा स्वप्ने नृपो दृष्टश्चण्डेश्वरनृपोदितम् ।

एवं प्रश्नकर्तुः प्रश्नेनापि स्वप्नानां विचारो भवति । यदि प्रश्नलग्ने सूर्यो वर्तते, तदा नृपाग्निशस्त्ररक्तपदार्थानां स्वप्नदर्शनम्, चन्द्रे लग्नगे तु श्वेतपुष्पश्वेतपट-गन्धनारीणां दर्शनं जायते । भौमे प्रश्नलग्नस्थिते रक्तमांसप्रवालसुवर्णानां बुधे तु आकाशगमनस्य गुरौ धनबन्धुसमागमस्य स्वप्ने दर्शनं भवति । एवं प्रश्नलग्नगे शुक्रे जलावगाहनं शनौ तु उच्चस्थानाधिरोहणं पश्यन्ति जनाः स्वप्ने । अथवा लग्नस्य तन्नवांशस्य यो ग्रहः पतिः तदनुकूलः स्वप्नो जायते । अथवा सर्वेषु ग्रहेषु यो ग्रहः सर्वापेक्षया बली तद्ग्रहानुकूलस्वप्नदर्शनं भवति । यदि तेषु नैको ग्रहो बली, अपि तु तेषां साम्यं तदा दुष्ठुसुष्ठुमिलितानां स्वप्नानां दर्शनं जायते । यदि निर्बला एव ग्रहास्तदा केवलं दुःस्वप्नानां दर्शनं जायते । प्रश्नकर्तुः प्रश्नसमये यदि सूर्यो लग्नगत-श्चन्द्रेण दृष्टो वर्तते आहोस्वित् सूर्यचन्द्रौ द्वावपि लग्नगौ तदा प्रश्नकर्ता दृष्टस्वप्नोऽस्ति अथवा स्वप्नं द्रक्ष्यति । उक्तञ्च ताजिकनीलकण्ठ्याम्[२]—

---

१. ८८ पत्रे । २. ता० नी० क० ।

लग्नेऽर्के नृपतिं वह्निं शस्त्रं पश्यन्ति लोहितम्।
श्वेतं पुष्पं सितं वस्त्रं गन्धं नारीं च शीतगौ॥

रक्तं मांसं प्रबालं च सुवर्णं धरणीसुते।
बुधे खे गमनं जीवे धनं बन्धुसमागमम्॥

जलावगाहनं शुक्रे शनौ तुङ्गावरोहणम्।
लग्नलग्नांशपवशात् स्वप्नो वाच्योऽथवा बुधैः॥

सर्वोत्तमबलाद् वापि खेटा बुद्ध्या विचिन्तयेत्।
बलसाम्ये फलं मिश्रं दुःस्वप्नो निर्बलैः खगैः॥

रविलग्ने शशिदृष्टे रविशशिसमेते विलग्नाद् वा।
स्वप्नं दृष्टं प्रवदेत् प्रष्टुर्लग्नान्तरात् कालः॥

एषां श्लोकानामर्था उक्ताः स्पष्टाश्च।

## ग्रहावस्थाविचारः

ग्रहाणामवस्थावशादपि फलानां तारतम्यमस्ति। अतस्तदवस्था विचारणीयेति मत्वा दिङ्निर्देशः क्रियतेऽत्र—ग्रहाणां विविधा अवस्था[१] तत्र मुख्या बालाद्यवस्था जाग्रदाद्यवस्था दीप्ताद्यवस्था लज्जिताद्यवस्था शयनाद्यवस्था च। तत्र बालकुमार-युववृद्धमृतभेदात् पञ्चधा प्रथमा। जाग्रत्स्वप्नसुषुप्त्याख्या त्रिधा द्वितीया। दीप्तस्वस्थ-प्रमुदितशान्तदीनदुःखितविकलखलकुद्धाख्या नवधा तृतीया। लज्जितगर्वितक्षुधित-तृषितमुदितक्षोभिताख्या षड्धा चतुर्थी। शयनोपवेशननेत्रपाणिप्रकाशनगमनागमन-समावासागमभोजननृत्यलिप्साकौतुकनिद्राख्या द्वादशधा पञ्चमी।

तत्र प्रायो ज्यौतिषशास्त्रानुसारिभिर्ग्रहाणामपि अवस्थात्रयं बहुधा प्रकल्प्य तत्रस्थानां फलं विचार्यते—तद्यथा-स्वराशौ स्वोच्चे वा स्थिता ग्रहा जाग्रदवस्थापन्नाः, ते एव पूर्णफलप्रदातारः। मित्रगृहे समगृहे वा स्थिता ग्रहाः स्वप्नावस्थापन्नाः ते मध्यफलदा ज्ञेयाः। शत्रुगृहे नीचे वा ये ग्रहाः सन्ति ते सुषुप्त्यवस्थापन्नाः सन्तः शून्यफलप्रदा भवन्ति। तदुक्तं बृहत्पाराशरहोरायाम्—

स्वभोच्चयोः समसुहृद्भयोः शत्रुभनीचयोः।
जाग्रत्स्वप्नसुषुप्त्याख्या अवस्था नामदृक्फलाः॥

जागरे च फलं पूर्णं स्वप्ने मध्यफलं तथा।
सुषुप्तौ तु फलं शून्यं विज्ञेयं द्विजसत्तम॥[२]

---

१. बृ० पा० हो० ४५ अध्याये। २. बृ० पा० हो० ४५। ५-६।

एवम् अत्रापरोऽपि प्रकारोऽस्ति बृहत्पाराशरहोरासारांशे—

त्र्यंशादंशं त्रिभागं च कल्पयित्वा पृथक् पृथक्।
विषमादिक्रमेणैव समे वै विपरीतक्रम् ॥

विज्ञाय प्रथमं पुंसां जाग्रत्स्वप्नसुषुप्तिकाः।
विशेषतः परीक्षा स्याज्जागरः कार्यसाधकः ॥

स्वप्नावस्था मध्यफला उपदेष्टा गुरुर्यदि।
निष्फला चरमावस्था ज्ञातव्या मुनिसत्तम ॥[१]

एष विचारो नह्यन्यस्मिन् विषये एव करणीयः अपि स्वप्नफलाफलविचारेपि नियोजनीयः। एवं ग्रहाणां दशाविचारकर्मणापि स्वप्नस्य विषये तत्फलाफलशुभाशुभविषये च दृष्टिर्देया। सबला ग्रहा नहि केवलं स्वदशायामेव फलं विदधति. अपि तु जातकस्य जनिसमये एव स्वफलं दिशन्ति। तदुक्तं सारावल्याम्—सबला नराणां कुर्वन्ति जन्मसमये निजमेव सत्त्वम्।[२]

अत्राय निष्कर्षः—यादृशो ग्रहाणां प्रकृतिस्वरूपधर्माः सन्ति तदनुकूलं स्वप्नं पश्यन्ति जना ग्रहैः सह तेषां निकटसंबन्धत्वात्। ग्रहाः सत्त्वरजस्तमोगुणात्मानो वायवाप्यजलीयतैजसरूपेण वातपित्तकफप्रकृतिकाः सन्ति तादृशग्रहयोगान्मानवा अपि तद्वद् गुणप्रकृतिका भवन्ति। अतःप्रकृत्यैवेदृशया प्रायस्तथाविधान् स्वप्नान् विलोकयन्ते। प्रकृत्यनुकूला हि स्वप्ना बाहुल्येन दृश्यन्ते ते चाफला एव ज्ञेयाः। यथायुर्वेदादिशास्त्रे[३] प्रकृत्यनुकूलदृष्टस्वप्नानामफलत्वं वर्णितम्, तथैवात्रापि बोध्यम्। तत्र वातपित्तकफनिमित्तकानां प्रकृतीनां चर्चा, अत्र ग्रहकृतप्रकृतीनाम्। विचारे क्रियमाणे उभयोरेकत्रैव पर्यवसानम्। यद्यपि शास्त्रेऽस्मिन् एवंविधानां स्वप्नानां प्रतिकारोपायो न वर्णितः, यदि क्वचन मुहूर्तगणपतिप्रभृतिग्रन्थेषु किमप्युल्लिखितं वर्तते तत्तु न ज्योतिःशास्त्रानुसारपद्धत्या किन्तु धर्मशास्त्रपुराणादिरीत्यैव अतस्तन्न प्रकरणानुकूलं तस्मादुपेक्ष्यम्। एवं सति प्रतिकारोपाय इत्थं विवेचनीयः—यथा

---

१. बृ० पा० हो० सा०। २. जातकपारिजातस्य २।२ टीकायामुद्धृतम्।

३. प्रकृतिजन्यस्वप्नास्त्वित्थम्—वाताधिकोऽभ्रं भ्रमतीति पश्येत् कृष्णानि वर्णानि प्रचण्डवातञ्च। पित्ताधिकः काञ्चनरक्तमार्ग्यदिवाकराग्निज्वलनानि पश्येत्। श्लेष्माधिकश्चन्द्रभगुक्लपुष्पसरित्सरोऽम्भोनिधिलङ्घनानि। काले मरुत्पित्तकफप्रकोपः साधारण्येन स्याद् बलसन्निपातात्। एतेन प्रकृतिजन्येन सह ग्रहकृतस्वप्नानां तुलना करणीया। यदि ग्रहकृतेऽधिकं प्रतीयते तत्तु ग्रहाणां स्वरूपादिकारणजन्यमेवाभ्यस्यीयते।

ग्रहकृतानामितरासां पीडानां निवारणार्थं तत्तद्ग्रहोचितमणिरत्नधारणं, तत्तन्मन्त्रजपः, तदभ्यर्चा, हवनं दानमित्यादय उपाया निरूपितास्तथैव ते उपाया अत्रापि भवितुमर्हन्ति ।

अपि च ज्योतिःशास्त्रेऽपरापि विचारसरणिरेवं वर्तते—राज्यादियोगकारका ग्रहा यदि निर्बलाः सन्ति तदा जागरणे मानवेभ्यस्तद् राज्यादीष्टं प्रदातुमसमर्थाः सन्तः स्वप्नावस्थायामेव किञ्चित्कालपर्यन्तं मानवोपभोगार्थं सर्वं प्रदर्श्य क्षणिकं सुखं च प्रदाय स्वकार्यकारितां स्थापयन्ति । एतादृशा एव ग्रहा राज्यादिसुखं स्वप्ने इत्थं प्रदर्श्य ग्रहयोगभावादात्मकृत्याद् विरमन्ति । उक्तञ्च वराहेण वृहज्जातके[१]—

शुभफलददशायां तादृगेवान्तरात्मा
बहु जनयति पुंसां सौख्यमर्थागमं च ।
कथितफलविपाकैस्तर्कयेद् वर्तमानां
परिणमति फलोक्तिः स्वप्नचिन्तास्ववीर्यैः ॥

अवीर्यैर्बलहीनैर्ग्रहैर्दत्तानां शुभाशुभफलानां प्राप्तिः स्वप्नावस्थायां परिणमति, अनुभूयते चिन्तायां मनोरथेन वा इत्यर्थः ।

अस्यायं भावः—यदि कश्चिद् ग्रहः सिंहासनारोहणफलदो निर्बलो भवेत् तदा स्वप्ने तत्फलप्राप्तिर्वाच्या । अर्थादसौ नरः कदाचित् स्वप्नावस्थायां 'अहं सिंहासनारूढोऽस्मि' इत्येवमनुभवेत्—अथवा तस्य केवलं मनोरथेनैव पूर्तिर्भवेदिति वाच्यम् । जातकपारिजातेऽपि एष एव श्लोकः पठितः[२] ।

श्रीमद्बालविहारिणोऽङ्घ्रियुगलं धन्नाजनन्या पुनर्
ध्यायंध्यायमथाधमर्ण्यमनिशं शीर्ष्णा वहँल्लज्जितः ।
तुष्टयापीषदहं तयोश्च सुतरामाप्तुं शुभामाशिषं
स्वप्नान् खेटकृतान् परामृशमिह श्रीरामनारायणः ॥

---

१. बृ० जा० ८।२२ ।  २. जा० पा० १८।१३ ।

# बौद्धसाहित्ये दर्शने च स्वप्ननिरूपणम्

**बौद्धमते स्वप्नविमर्शः**

बाह्यार्थशून्यवादिनो योगाचारास्तु—सर्वमेव हि ज्ञानम् आत्मांशपर्यवसितमनादिवासनावशात्मानमेव बाह्यतयाऽध्यवस्यन् मिथ्यैव। ज्ञानस्य आत्मांशपर्यवसायित्वमनुमानात् बाह्ये च प्रवृत्त्यसामर्थ्याद् गम्यते। तथा चानुमानम्—स्तम्भादिप्रत्ययाः स्वांशमेव बाह्यतया अध्यवस्यन्तो मिथ्याभूताः प्रत्ययत्वात् स्वप्नप्रत्ययवत् शुक्तिकारजतादिप्रत्ययवद् वा। स्वप्नादिप्रत्यया हि यथावगम्यमानबाह्यार्थाभावाद् देशान्तरे-कालान्तरवर्तिनाञ्च सन्निहितदेशकालतया प्रतिभासासंभवात् क्वचित् कदाचिदप्यसंभवतां स्वशिरश्छेदादीनां स्वप्ने प्रतिभासादवश्यं स्वात्मानमेव बहिर्वत् गृह्णन्तीति। अतस्तत्सामान्यात् जाग्रज्ज्ञानानामपि स्वांशपर्यवसायित्वात् मिथ्यात्वम्। एतन्मते स्वप्नादिषु बोधकेन ज्ञानान्तरेण बाह्यसद्भावनिराकरणाद् आत्मख्यातिर्युक्ता एव। स्वप्नादिबंधे **वन्ध्यासुतो याति, अङ्गुल्यग्रे हस्तियूथशतम्'** इत्यादौ अत्यन्तासद्भावात् बाह्यस्य ज्ञानात्मकत्वमेव।

**शून्यवादिनो माध्यमिकाः**—सर्वस्य दृश्यादृश्यपदार्थस्य शून्यत्वं मन्यमाना जगतस्तदुत्पत्तिस्थितिभङ्गानामसत्यतां ज्ञापयितु दृष्टान्तत्वेन स्वप्नानामसत्यत्वं संगिरन्ते।

तद् यथा—

**यथा माया यथा स्वप्नो गन्धर्वनगरं यथा।**
**तथोत्पादस्तथा स्थानं तथा भङ्ग उदाहृतः॥**[१]

**यथा कुमारी सुपिनान्तरस्मिन् सा पुत्रजातं च मृतं च पश्यति।**
**जातेऽतितुष्टा मृतिदौर्मनस्यिता तथोपमान् जानथ सर्वधर्मान्॥**[२]

**'वितथा इमे सर्वधर्माः, मायोपमा इमे सर्वधर्माः, असन्त इमे-सर्वधर्माः, विठपिता इमे सर्वधर्माः, स्वप्नोपमा इमे सर्वधर्माः'** इत्यादि।[३]

तदेवमसत्येऽपि स्वप्ने अविद्याप्रत्ययसंस्कारः स्वप्नप्रपञ्चः सांवृतिक एव। तथा एते स्वभावतोऽविद्यमानाः स्वप्नाः स्वविपर्यासविठपिता बालानां संक्लेशहेतवः।

---

१. माध्यमिकवृत्तिः ७।३४। २ म० वृ० १७८ पृ०। ३. म० वृ० ५३ पृ०। १०६ पृ० १११ पृ० १२२ पृ० १७८ पृ०।

मृषास्वभावानां पदार्थानां यथा संक्लेशव्यवदानहेतुत्वं तथा मध्यमकावताराद् विस्तरेणावसेयम्। संक्षेपेण—यदि निःस्वभावाः कथं तह्युंपलभ्यन्ते इति चेदुच्यते गन्धर्वनगराकाराकारा मरीचिस्वप्नसन्निभाः[१]। तद् यथापि नामकुलपुत्रः कश्चिदेव पुरुषः सुप्तः स्वप्नान्तरे स्वगृहे राजभार्यां पश्येत्। स तया सार्धं शय्यां कल्पयेत्। स्मृति-संमोषाच्चैवं कल्पयेत्। विरुद्धोऽस्मीति। स भीतस्त्रस्तः पलायेत्…… ……इत्यादि।[२]

क्लेशाः कर्म्माणि देहाश्च कर्तारश्च फलानि च।
गन्धर्वनगराकारा मरीचिस्वप्नसन्निभाः॥[३]

एवं विचारे ज्ञाते सति स्वप्नादौ विज्ञानमप्यनालम्बनमिति सिद्धम्। नानालम्बनं स्वप्नादिविज्ञानं निमित्तालम्बनत्वादिति केचित्। निमित्तं पुनरर्थप्रतिबिम्बं विप्रयुक्तसंस्कारस्वभावम्। नहि स्वप्नादावसत्यर्थे तन्निमित्तं युज्यते। सुखाद्यभावे तत्प्रतिबिम्बासिद्धिवज्जायमानं जातं वा विज्ञानं निमित्तं नालम्बते अभावप्रतिषेधयोः पूर्वं प्रतिपादितत्वात्। विज्ञानमेवार्थप्रतिभासत्वादर्थप्रतिबिम्बम्। अतो न विप्रयुक्त-संस्कारात्मकं निमित्तं युज्यते। अवश्यं चार्थाकारं विज्ञानमभ्युपगन्तव्यम्। अनाकारे हि तस्मिन् ग्राह्यग्राहकनियम एव न स्यात्। अन्यस्त्वप्रतिघं रूपमेव स्वप्ने योगिनां चाशुभालम्बनं मन्यते। तस्यापि वर्णसंस्थानाद्यात्मकत्वादप्रतिघत्वं मनोमात्रविषयत्वं विरुध्यते। न चाविज्ञप्तिमात्रादन्यप्रतिघरूपं शास्त्रे वर्ण्यते। तस्मात् कल्पनामात्रमेव। अपरस्तु नीलादिरूपस्य जात्यन्धस्वप्नेऽग्रहणादनुभूतार्थं स्वप्नविज्ञानविषयमिच्छति। जात्यन्धो हि स्वप्ने रूपं न गृह्णाति। अव्युत्पन्नसंकेतत्वात्तु नामतो न जानात्यतो नान्यस्याचष्टे। यदि चानुभूतस्यैव स्वप्ने दर्शनम् एवं जात्यन्धस्यापि रूपदर्शनं किं नेष्यते? तेनापि पूर्वजन्मसु रूपमुपलब्धमेव। न च वर्तमानजन्मन्युपलब्धस्यैव स्वप्ने-दर्शनम्, नह्यतीतानागतवर्तमानानुभवे सुप्तस्य जाग्रतश्च कश्चिद् विशेषोऽस्ति। तस्मात् परिकल्पमात्रमेवैतदनुभूतार्थविषयं स्वप्नज्ञानमिति। अतोतस्य चाभाव न्नि-र्विषयं विज्ञानमेव स्वप्नेऽर्थाभासमुत्पद्यते इति निश्चीयते।[४]

केचन क्षणिकविज्ञानात्मवादिनो वदन्ति—आलयविज्ञानद्वारा स्वप्नेऽपि चेतन्यं तादृशं ज्ञानं चेत्थं संभवति, यथाऽऽयते विस्तृते कस्मिंश्चिद् वाससि एकत्रिते कृते तत्रैकस्मिन् प्रदेशे स्थापितो मृगमदः सर्वान् तत्प्रदेशान् सौरभ्येण युनक्ति परम्परया तद्-भागस्य द्वारा। एवं जाग्रदवस्थानुभूतान् विषयान् स्वप्ने तथास्वरूपान् पश्यति जनः।

---

१. म० वृ० १५७ पृ०। २. म० वृ० ४६४। एतदतिरिक्तेषु ४४५, ४४९, ४५०, ४५७ पृष्ठेष्वपि द्रष्टव्यम्। ३. म० वृ० १७।३३। ४. मध्यान्तविभागसूत्रभाष्य-टीकायां १ प० २२ पृ० प्रदर्शितमेतत्।

बौद्धप्रसङ्गवशाद् 'मिलिन्द प्रश्न' कथितस्वप्नविषयिणी वार्ताप्युद्ध्रियतेऽत्र—

भन्ते नागसेन ! सर्वे हि पुरुषाः स्त्रियश्च स्वप्नं पश्यन्ति, सुष्टु दुष्ठु वा पूर्वानुभूतं पूर्वाननुभूतं वा पूर्वसम्पादितमसम्पादितं वा शान्तिप्रदं व्याकुलकारिणञ्च दूरस्थं समीपवर्तिनञ्च अन्यानेकप्रकारं सहस्रशः ।

एष हि स्वप्नः किं वस्तु ? कश्चैनं पश्यति ?

महाराज ! स्वप्नो हि चित्तसविधे आगन्तुकं निमित्तमेवास्ति[१] ।

महाराज ! षोढा हि स्वप्नो भवति --(१) वायुवेगात् (२ पित्तप्रकोपात्, (३) कफाधिक्यात्, (४) देवताप्रभावात् (५) भूयोभूयः कार्यविशेषानुशीलनात् । (६) भावित्वाच्च । महाराज ! एषु षट्सु यो हि चरमो भविष्यत्कालभाविकार्याणां सूचकः स्वप्नः स एव सत्यो भवति, शेषस्तु मिथ्यैव ।

भन्ते नागसेन ! भाविनां पदार्थानां कथं स्वप्नो हि जायते किं पुरुषस्य चित्तं बहिर्गत्वा भविष्यत्कालभाविघटनानां सन्देशं ( ज्ञानं वा ) आनयति, आदत्ते ? अथवा भाविपदार्थवार्ता स्वयमेव पुरुषस्य चित्ते समाविशति ? अथवा अन्यः कश्चिदागत्य पुरुषचित्तं अवबोधयति ।

महाराज ! नापि पुरुषचित्तं बहिर्गत्वा भाविघटनासन्देशमानयति, नापि अन्यः कश्चिदागत्य चित्तमवबोधयति अपितु भविष्यकालिकवार्ता स्वयमेव तस्य चित्ते समागच्छति ।

महाराज ! दर्पणः स्वयं बाह्यपदार्थविम्बमन्विष्य स्वस्मिन् न आनयति, न तु कश्चिदन्य एव दर्पणे बिम्बं प्रवेशयति किन्तु बाह्यपदार्थानां छाया स्वयमेव गत्वा दर्पणे प्रतिबिम्ब रचयति ।

महाराज ! तथैव पुरुषचित्तमपि न बहिर्गत्वा भविष्यकालिकघटनानां सन्देशमानयति, नापि कश्चिदितर आगत्य तद् प्रतिबोधयति, अपितु भाविघटना स्वयमेव यतः कुतश्चित् पुरुषचित्ते प्रतिबिम्बिता भवति ।

भन्ते नागसेन ! यच्चित्तं स्वप्नं पश्यति, किंतज्जानाति यदस्य स्वप्नस्य फलं कीदृग् भविष्यति शुभमशुभं वा ?

महाराज ! तन्न जानाति यदस्य फलं कीदृग् भविष्यति शान्तिदं भयदं वा । अपि तु कांश्चिद् यादृशस्तादृशः स्वप्नान् विलोक्य तदितरान् अवगमयति । त एव तेषां स्वप्नानां अर्थं घटयन्ति ।

---

१. रायसडेविडमहोदयेन निमित्तशब्दस्य 'Suggestion' अनुवादः कृतः । अनुवादश्चैष आधुनिकमनोविज्ञानानुकूल एवेति नितान्तं प्रतीयते ।

भद्र नागसेन ! साधूक्तम् बहुसुन्दरम्, तथापि कृपया उदाहरणेनैकेन मां प्रतिबोधय महाराज ! मनुष्याणां शरीरेषु तिलविस्फोटदद्र्वादि जायते। तत्तु तेषां मानवानां लाभाय हानये वा यशसे अपयशसे वा प्रशंसायै निन्दायै वा सुखाय दुःखाय वा भवति।

महाराज ! तदा किं ते दद्रवः विस्फोटकाः तिलानि वा ज्ञात्वा प्रादुर्भवन्ति यदहम् ईदृक् फलं विधास्यामि।

नहि भद्र ! अपितु ज्योतिर्विदः एव विस्फोटसमुत्थानस्थानानुसारं विचार्य फलं निगदन्ति। यदस्य ईदृक् फलं भविष्यतीति।

महाराज ! इत्थं यच्चित्तं स्वप्नं पश्यति तद् न जानाति, यदस्य फलं कीदृग् भविष्यति शान्तिप्रदं भ प्रदं वा। अपितु यादृक् तादृक् स्वप्नान् विलोक्य सोऽन्यान् बोधयति त एव तेषां स्वप्नानां अर्थमनुसंदधते।

भद्र नागसेन ! यः स्वप्नान् विलोकयति स किं शयानो जाग्रद् वा। महाराज ! यः स्वप्नं पश्यति स न तु शयानः पश्यति नापि जाग्रद्। अपितु निद्रायाः शैथिल्ये या एका तन्द्रा अवस्था भवति तस्यामेव स्वप्नाः भवन्ति। महाराज ! सान्द्रनिद्रायामागतायां चित्तं विस्मृतं भवति। विस्मृत चितं कार्यं न करोति, तदा तत् सुखदुःखे नानुभवति। यदा चित्तं किंचिन्न जानाति तदा तत्र स्वप्ना नागच्छन्ति। स्वप्नास्तु कार्यव्यावृते चित्ते एवागच्छन्ति।

महाराज ! घनीभूते तमसि विमलेऽप्यादर्शे प्रतिबिम्बं नोत्पद्यते। महाराज ! तथैव सान्द्रनिद्रायां विद्यमानेपि शरीरे चित्तं कार्यं न करोति। यदा चित्तं कार्यं न करोति तदा स्वप्ना अपि नागच्छन्ति। महाराज ! यथाऽऽदर्शो तथैव शरीरं ज्ञेयम् यथा तमस्तथैव सान्द्रनिद्रा ज्ञेया। यथा प्रकाशस्तथा चित्तं ज्ञेयम्।

महाराज ! घनीभूते तुषारे आच्छाद्यमाने सूर्यकान्तिः किञ्चित् कार्यं न करोति, विद्यमाना अपि सूर्यरश्मयो अभिभूता भवन्ति, अभिभूतेषु तेषु ज्योत्स्ना नोदीयते।

महाराज ! एवं सान्द्रनिद्रायां चित्तं विस्मृतं भवति। विस्मृते सति चित्तं कार्यं न करोति। अक्रियमणेषु कर्मसु स्वप्ना नाविर्भवन्ति।

महाराज ! यथा सूर्यस्तथा शरीरं ज्ञेयम्। यथा तुषारस्तथा सान्द्रनिद्रां ज्ञेया। यथा सूर्यरश्मयस्तथा चित्तं ज्ञेयम्।

महाराज ! द्वयोरवस्थयोर्विद्यमानेऽपि शरीरे चित्तमवरुद्धं भवति—(१) सान्द्रनिद्रायां चित्तस्य विस्मृतत्वात् वर्तमानेऽपि शरीरे चित्तं संकुचितं भवति। (२) निरोधावस्थायां वर्तमानेऽपि शरीरे चित्तं मुकुलितं भवति।

महाराज ! जाग्रदवस्थायां चित्तं चञ्चलं विकसितं स्पष्टं प्रकटितं स्वतन्त्रञ्चास्ते। अस्य मवस्थायां किमपि निमित्तं नास्ति।

महाराज ! यथा स्वमन्तर्धाप्य स्थापितुमिच्छन् जनः कस्मिंश्चित् स्फीतालोकयुक्ते स्थाने निर्व्यवहिते सर्वेषां सविधे मौनी सन् स्थितः अन्यपुरुषदृष्टीर्निवार्य स्थातुमिच्छति।

महाराज ! एवं जाग्रति चित्ते दिव्यार्था नागच्छन्ति। अतो जाग्रत्पुरुषाः स्वप्नान् न पश्यन्ति।

महाराज ! यथा कुत्सितवृत्तीनां दुराचारिणां मित्राणां शीलभ्रष्टानां कातराणां उत्साहरहितानां भिक्षुकाणां पार्श्वे (अन्तिके) ज्ञानिनां गुणा नागच्छन्ति। तथैव जाग्रत्पुरुषाणामन्तिके दिव्यार्था नागच्छन्ति। अतो जाग्रत्पुरुषाः स्वप्नान् न पश्यन्ति।

भन्ते नागसेन। किं घनीभूतनिद्राया आदिमध्यान्तविभागा भवन्ति ? बाढम् महाराज ? घनीभूतनिद्राया आदिर्भवति मध्यो भवति अन्तो भवति।

तस्या आदिः कः, मध्यः कः, अन्तश्च कः ?

शरीरं श्रान्तं मर्दनञ्च तत्रानुभूयते, क्षीणता प्रतीयते, तत्र मन्दता शिथिलता च जायते इत्येव तस्या आदिरस्ति। महाराज ! मर्कटनिद्रावत् अर्धं जागर्ति अर्धं शेते, इति तस्या मध्योऽस्ति। महाराज ! आत्मानं नितान्तं विसस्मार, अर्थात् विस्मृतः इत्येवान्तः।

महाराज ! एषु या मध्यावस्था तस्यामेव स्वप्ना भवन्ति।

महाराज ! कश्चित् संयतो जितेन्द्रियः शान्तो धर्मधीरो दृढप्रतिज्ञो वा जनोऽशान्तस्थानाद् दूराद्दूरतरं वने गत्वा गम्भीरवार्तानुसन्धानं कुर्यात्।

तत्र स न शयीत्, अपि तु स तत्र एकाग्रमनसा तां गम्भीरसमस्यां निर्ग्रन्थयितुं तत्परो भवेत्। महाराज ! इत्थं जाग्रत्सुषुप्त्योर्मध्ये वर्तमानायामवस्थायां वर्तमानो मर्कटवत् शयानः पुरुषः स्वप्नान् पश्यति।

महाराज ! यो हि जनानां कोलाहलः तथैव जाग्रदवस्था ज्ञेया यद्धि एकान्तमरण्यं तथैव मर्कटनिद्रा ज्ञेया। कोलाहलादपसृत्य निद्रामवरुध्य मध्या-

वस्थायां वर्तमानो गम्भीरचिन्तनं करणीयम्। तथैव कपिनिद्रावदवस्थायां स्वप्ना आविर्भवन्ति।

सत्यमस्ति भन्ते नागसेन ईदृश्येव वार्ता अहमेनां स्वीकरोमि।[1]

आर्हताः– अथ स्वप्नदशायां स्तम्बेरमादिप्रत्ययस्य किमालम्बनमिति चेत्, तद्देशवर्ती शय्यादिपदार्थ एवेत्येके। तदनुपपन्नं प्रमाणाभावात्। न हि सन्निहितत्वादेव ज्ञानस्य विषयः किन्तर्हि यस्तत्र प्रतिभासते सचोत्तरकालभाविना प्रत्यभिज्ञानेन बाधकेन व्यवस्थाप्यते। न च शय्यादाविदत्थं प्रत्यभिज्ञानमुन्मज्जति यदुत यदेव गजादिरूपता पूर्वं मया प्रतिपन्नं तदेवेदं शय्यादि नाप्येवं तत्र बाधकमुज्जिहीते नेदं गजादिक किन्तु शय्यादीति। तस्मान्न तत्र शय्यादिकमालम्बनं किं तर्हि; पूर्वोपलब्धोऽनुपलब्धो वा विद्यमानोऽविद्यमानो वा यः प्रतिबुद्धावस्थायां बाधकेन प्रत्ययेनानुसन्धीयते स खलु देशकालस्वभावान्यत्वेन स्वप्नज्ञाने प्रतिभासमानस्तस्यालम्बनमित्युच्यते। तथाहि प्रतिबुद्धः सन् कथयति मयाऽद्य स्वप्ने देशान्तरस्थः पुत्र इह स्थित इति दृष्टः। पिता पुनर्मृतोऽपि जीवतीति दृष्टः। तथा अन्धोऽनन्ध इत्येवमादि। केशकूर्चाकारज्ञानेऽप्यविद्यमानः केशसमूहः सदाकारतया प्रतिभासमानः सन्नालम्बनम्। बाधकोत्पत्तौ तयानुसन्धानात्। ननु चाविद्यमानस्यालम्बनस्यायोगान्निर्विषयमेतज्ज्ञानं प्राप्तमिति। मैवं वादीः। अतीतानागतयोरविद्यमानत्वेऽप्यालम्बनात्। निरालम्बनत्वे ह्यख्यातिरेव स्यात् तत्र चोक्तो दोषः अतीतानागतस्वप्नादिज्ञानानामविद्यमानार्थालम्बनत्वाविशेषात्। भ्रान्ताभ्रान्तसंवेदनविशेषानुपपत्तिरिति चेन्मैवं मंस्थाः। तद्रूपातद्रूपाध्यवसितत्वेन तयोस्तयोर्विशेषोपपत्तेः नहि विद्यमानाविद्यमानार्थालम्बनत्वेन तत्त्वज्ञानेतरविभागः। किं तर्हि अविद्यमानोऽप्यर्थो यथा तथा च ते नैवाविद्यमानाकारेण निश्चीयते तदा तद्विषयं तत्त्वज्ञानमेव तद्रूपाव्यभिचारात्। यदा पुनर्विपरीतेन सदाकारेण असन्नर्थो व्यवसीयते तदा भ्रान्तिरिति।

द्विविधो हि स्वप्नः सत्यस्तद्विपरीतश्च। प्रथमो देवताविशेषकृतो धर्माधर्मकृतो वा कश्चित् साक्षादर्थाव्यभिचारी। यद्देशकालाकारतया स्वप्ने प्रतिपन्नोऽर्थस्तद्देशकालाकारतया जाग्रद्दशायां तस्य प्राप्तिसिद्धेः। कश्चित् पुनः परम्परयाऽर्थाव्यभिचारो। राजादिदर्शनेन स्वप्नाध्यायनिगदितस्य कुटुम्बवर्धनादेः प्राप्तिहेतुत्वादनुमानवत्। योऽपि वातपित्ताद्युद्रेकजनितोऽसत्यत्वेन प्रसिद्धः स्वप्नः। सोऽपि नार्थमात्रव्यभिचारी। न हि सर्वथाप्यननुभूतेऽर्थे स्वप्नोऽपि समुपजायते इति न स्वप्नप्रत्ययो निरालम्बनो युक्तः।[2]

[3]वर्धमानसूरिमहोदयेन स्वविरचिते स्वप्नप्रदीपे स्वप्नस्य चातुर्विध्यमुक्तम्।

---

१. एतत् सर्वं मिलिन्द प्रश्ननामकग्रन्थे चतुर्थपरिच्छेदे अष्टमवर्गे ७६ प्रश्ने स्वप्नविषयमनुसृत्य लिखितं वर्तते। दुःस्वप्नानां शान्त्युपाया अपि तत्रोल्लिखिता वर्तन्ते ते तत्रैव द्रष्टव्याः। २. स्याद्वादरत्नाकरे १४१, १८२, १८६ पृष्ठेषु विस्तरेण प्रपञ्चितमेतत्। ३. रामस्वरूपशास्त्रिणा रचिते स्वप्नविज्ञाने ५२ पृष्ठे समुद्धृतमिदम्।

[illegible]द्यथा—

> [illegible]चतुर्विधः प्रोक्तो दैवः स्वानुभवप्रजः ।
> धातुप्रकोपजश्चैव चित्तोद्भूतश्चतुर्थकः ॥
> द्वावाद्यौ सफलावन्त्यौ निष्फलौ द्वौ दिवानिशम् । इति

# स्वाप्निकस्य मायिकत्वम्

## स्वप्ने दृष्टपदार्थस्य मायिकत्वम्

अथ स्वप्ने दृष्टपदार्थस्य पारमार्थिकव्यावहारिकप्रातिभासिकसत्तात्रयमध्ये का सत्तेति विचार्यते। कालत्रयाबाध्या सत्स्वरूपा आद्या, सा ब्रह्मण एव। यावद् व्यवहारं तिष्ठतीति द्वितीया, सा जगतः। यावत् प्रतिभासं सन्तिष्ठत इति तृतीया, सा शुक्तिरजतादेः। आसु स्वाप्निकपदार्थः पारमार्थिकतां लब्धुं न क्षमते, जाग्रदवस्थया तस्य बाध्यमानत्वात्। एतेनैव तस्य व्यावहारिकत्वमपि निरस्तम्। अतः परिशेषात् तृतीयकोटावेवास्य प्रवेशः। **'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते'** इति बृहदारण्यकेन[१] वासनामयी एव सृष्टिरुक्ता। यतो हि तस्यामवस्थायां सर्वसाधनाभावात् व्यवहारिकी सृष्टिः कथमपि न संभवेत्। इदमेव **'ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति'** इत्युपनिषदापि वर्णितम्। तथापि विचारे सति इत्थं प्रतिभाति यथा ब्रह्मणो लीलाविजृम्भितं जगदेतत् तथैव जगदन्तःवर्तमानं स्वाप्निकमपि लीलाविजृम्भितमेव। **'सुषुप्त्याख्यं तमोऽज्ञानं यद् बीजं स्वप्नबोधयोः'** इत्याचार्योक्तौ एकमेव मूलाज्ञानं स्वप्नजागरणप्रपञ्चयोः कारणं निश्चीयते। अतो यथा व्यावहारिकस्य मायिकत्वं तथैव स्वाप्निकस्यापि भवितुमर्हति। श्रुतिरपि[२] **'मायां तु प्रकृतिं विद्यात्'** इति सर्वोपादानत्वं मायाया एव वर्णयति। इति मायामयत्वेऽनयोर्द्वयोर्जाग्रत्स्वप्नयोः समानेऽपि स्वाप्निकस्य प्रातिभासिकत्वं व्यपदिश्यते, न तु वियदादिप्रपञ्चस्य तस्य प्रतिदिनं निवृत्तेः स्थिरप्रतीतिश्च प्रपञ्चस्य। बाधश्चोभयोर्ब्रह्मज्ञानादेव।

## स्वाप्निकस्य प्रातिभासिकत्वम्

सोऽयं सर्वः पूर्वोक्तः स्वाप्निकः प्रपञ्चः प्रातिभासिक एव, न तु व्यावहारिकसत्तामवलम्बते। यद्यपि वेदान्तनये ब्रह्मणोऽतिरिक्तस्य निखिलस्य जाग्रत्स्वप्नावस्थागतस्य सर्गस्यानिर्वाच्यतया मायामयत्वमुद्घोषितम्, तथापि तत्र प्रबोधकालिकः सर्गो ब्रह्मसाक्षात्कारं यावदनुवर्तते, यदि निवर्तते तत्तु ब्रह्मसाक्षात्कारादेव। अयं स्वाप्निकः सर्ग आप्रबोधाद् आसुप्तेश्च प्रवर्तते, प्रबोधे च सति प्रतिदिनं निवर्तते, इति विशेषः।

---

१. बृ० उ० ४।३।७। २. श्वेत० उ० ४।१०।

अतोऽन्ययोर्मायामयत्वाविशेषेऽपि प्रातिभासिकत्वमेवास्य स्वाप्निकस्य। यतो हि—अविद्यातिरिक्तदोषाजन्यत्वमेव व्यावहारिकत्वे प्रयोजकम्। अयं तु न तथा, आगन्तुकनिद्रादिदोषजन्यत्वात्। प्रातिभासिकत्वे तु आगन्तुकदोषजन्यजन्यत्वमेव प्रयोजकम्। तच्च शुक्तिरूप्ये काचादि दोषजन्यत्वरूपेण वर्तते, स्वप्ने च निद्रादिदोषजन्यत्वरूपेण।

ननु मास्तु व्यावहारिकत्वमस्य, किन्तु प्रातिभासिकत्वं कथं व्यवस्थाप्यते? प्रातिभासिकत्वे हि इन्द्रियसम्प्रयोगः, संस्कारो दोषश्चेति कारणत्रयम्। अनुभूयन्ते चेमे शुक्तिरजतादिप्रातिभासिकस्थले। प्रकृते च तादृशानां कारणानामभावात् प्रातिभासिकत्वं न संभवति। तथा हि—अदृष्टचरविषये विलक्षणस्वप्ने तादृशस्य विषयस्य पूर्वमननुभूतत्वात् ततः संस्कारानुत्पत्तावपि पुरुषादिसामान्यानुभवसंस्कारमात्रेण स्वप्नेऽदृष्टचरपुरुषादिविशेषारोपात् तादृशसंस्कार उपपद्यत एव। तदुक्तम्—"

**सामान्यतोऽपि संस्कारो विशेषारोपकारणम्।**
**स्वप्ने तथैव वाच्यत्वादिह बिम्बानुसारिता॥"** इति।

एवञ्च निद्रादिदोषादृष्टोद्बुद्धसंस्काररूपकारणद्वयसत्त्वेऽपि इन्द्रियसम्प्रयोगस्य अभावादिति चेद् अत्रोच्यते, प्रत्यत्र शुक्तिरजतादिप्रातिभासिकस्थले 'इदं रजतम्' इन्द्रियसम्प्रयोगो बाह्यशुक्त्यादिमंशादिविषयकान्तःकरणवृत्त्युत्पादको भवति, यतस्तस्यामवस्थायाम् अन्तःकरणं विनेन्द्रियसाहाय्यं देहाद् बहिर्गन्तुमक्षमं सत् तादृशीं बाह्यविषयाकाराकारितां वृत्तिं निर्मापयितुं न सहते। अतस्तत्र जागरणे प्रातिभासिकस्थले इन्द्रियसम्प्रयोगस्तन्त्रं भवितुमर्हति। किन्त्वत्र ततो वैलक्षण्यं वर्तते। स्वप्नावस्थाया जाग्रदिन्द्रियाणामुपरते अनुपरतमन्तःकरणं देहाभ्यन्तरे स्वतन्त्रं सद् विनैव इन्द्रियसंप्रयोगं स्वयमेव वृत्त्याकारेण परिणमते। अतो नास्ति इन्द्रियसम्प्रयोगापेक्षा।

एवमपि मास्तु सम्प्रयोगापेक्षा, किन्तु कारणैकदेशविकलता तु स्यादेव, येन कार्योत्पत्तिर्न स्यादिति मा शङ्कीः? यतो हि सम्प्रयोगात् काचिदन्तःकरणवृत्तिरेव उदेति, तद्द्वारैवास्य कारणत्वं न स्वातन्त्र्येण। अतः सिद्धं यज्जागरणेऽपि अन्तःकरणवृत्तिरेव प्रातिभासिकज्ञानकारणम्, तदुपकारकतया इन्द्रियसम्प्रयोगस्य कारणकोटौ निवेशः। तेन यथा जागरणे इन्द्रियसम्प्रयोगस्थानीया अन्तःकरणवृत्तिःकारणम्, तथैव स्वप्नेऽप्यन्तःकरणवृत्तिरेव तृतीयं कारणम् वर्तत एवेति न कश्चित् सन्देहगन्धः। यथा 'इदं रजतम्' इत्यत्र दोषवशात् शुक्त्यंशस्य प्रमोषः, 'नेदं रजतम्' इति बाधश्च वर्तते, तथैव स्वप्नेऽपि दोषवशादधिष्ठानस्य प्रमोषः 'मिथ्यैव प्रत्यभात्' इति बाधश्च स्तः।

प्रातिभासिकत्वस्य इमानि लक्षणानि आचार्यैरुक्तानि—'आगन्तुकदोषजन्यत्वम्, 'अविद्यातिरिक्तदोषजन्यत्वम्' 'लौकिकपरमार्थविलक्षणत्वम्' 'व्यवहारकालबाध्यत्वम्' ब्रह्मज्ञानेतरज्ञानबाध्यत्वम् इति। सर्वाणि च तान्यत्र स्वाप्निके समनुयन्ति।

अस्य स्वप्नप्रपञ्चस्य अविद्यातिरिक्तदोषजन्यत्वादेव प्रातिभासिकत्वं केचिदाहुः।

'बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे, इति भाष्योक्तेरस्य जाग्रद्बोध-निवर्त्यत्वेन ब्रह्मज्ञानेतरज्ञानबाध्यतया प्रातिभासिकत्वमपरे प्राहुः।

अतो निर्विवादमेतद् यच्छुक्तिरूप्यवत् स्वाप्निकं सर्वम् दृश्यं तज्ज्ञानं देश-विशेषादिश्च प्रातिभासिकान्येव। उक्तञ्च वेदान्तपरिभाषायाम्[1] —'**शुक्तिरूप्यवत् स्वप्नोपलब्धरथादयोऽपि प्रातिभासिका यावत्प्रतिभासमवतिष्ठन्ते'** इति।

प्रातिभासिकत्वञ्च प्रतिभाससत्ताव्याप्यसत्ताकत्वम्। स्वाप्नज्ञानस्य च कारणत्रितयजन्यत्वम्, **'परत्र परावभासः'** इत्यादि लक्षणाक्रान्तत्वत्वाद् भ्रमत्वम्। नैयायिकैरपि स्वाप्नज्ञानस्य अयथार्थकोटौ परिगणनात् भ्रमत्वमेव स्वीकृतम्।

## स्वाप्निकपदार्थस्य किमुपादानम्?

ननु स्वाप्निकस्य पदार्थस्य किमुपादानम्? नहि चैतन्यमुपादानं भवितुमर्हति, यत उपादानं तदेव भवति यत् परिणामि। नेदं चैतन्यं तथा कूटस्थत्वात्। नापि मूलाविद्या सा हि मृत्पिण्डादिघटावयवद्वारैव घटादेरुत्पादिका, न तु स्वयं साक्षादुत्पादिका। अतो व्यावहारिकघटादेरपि मूलाविद्याकार्यत्वमुच्यते। स्वप्ने च तथा स्वाप्निकपदार्थस्यापि तदवयवद्वारैव निष्पत्तिर्भवितुमर्हति। किन्तु तदवयवाभावेन साक्षात्तदनुपयोगितया न तदुत्पादिका। एवं तूलाविद्यापि नोपादानम्, सापि बाह्यदेशावच्छिन्नचैतन्याश्रितैवोपादानम्, नान्यथा। स्वप्ने तु देशविशेषोऽपि कल्पित एव, न व्यावहारिकः। न चान्तःकरणावच्छिन्नाश्रिता एव स्वाप्निक-पदार्थसृष्टिहेतुः, स्वाप्निकपदार्थोपादानभूताविद्या-विद्याधिष्ठानतावच्छेदकत्वे अन्तः करणस्य प्रमाणाभावात्। अतः स्वाप्निकस्य न प्रातिभासिकत्वम्। किन्तु स्वप्नकाले व्यावहारिकपदार्थविषयकस्मरणमेव भवति नानुभवः। एवञ्च न प्रातिभासिकत्वम्, किन्तु स्मृतित्वमिति चेत्।

अत्रोच्यते—मूलाऽविद्यैव साक्षात् स्वाप्निकपदार्थस्योपादानम्, सैव स्वप्न-पदार्थाकारेण परिणमते शुक्तिरजतादिवत्। अतः शुक्तिरूप्यवत् स्वाप्निकस्य प्रातिभासिकत्वान्नावयवापेक्षत्वं मूलाविद्यायाः। लोकप्रसिद्धव्यावहारिकपदार्थे एव तदवयवापेक्षत्वं वर्तते। एवं सर्वत्र प्रातिभासिकस्थले अविद्ययैव अर्थाध्यासो ज्ञानाध्यासश्च उपपद्यते।

---

१. प्र० प० ६५ पृ०।

अस्मिन् वचसि स्वप्नजाग्रदुभयप्रपञ्चस्य एकाज्ञानकार्यता स्पष्टं निरूपिता। अत्र मानं तु 'सुषुप्त्याख्यं तमोऽज्ञानं यद्बीजं स्वप्नबोधयोः' इत्याचार्यवच एव। अन्यथा पदार्थतद्वृत्तिरूपभ्रमपरिणामित्वेन अविद्याया एवोपादानत्वाङ्गीकारे स्यात्यन्तोच्छेदानापत्तेः अविद्यापरिणामिनो मनसोऽविनाशात्। तथा च विशेषदर्शनोत्तरमपि कदाचित् प्रतीयेत, तदानीमपि तस्यैव मनसः सत्त्वात्। न च प्रतीयते, लोके कदाचिदेवं न संघटते। तस्मात् नाशान्यथानुपपत्त्यां अविद्यैव परिणामिनी। तथा चोक्तं वेदान्तपरिभाषायाम्—स्वप्नगजादयः साक्षान्मायापरिणामा इति केचित्[1]। अन्तःकरणद्वारा तत्परिणामा इत्यन्ये[2] इति।

ननूक्तपक्षे मूलाविद्याया एव उपादानत्वस्वीकारे तस्या एव स्वप्नपदार्थाकारेण परिणामे सति तदानीं स्वप्नावस्थायां मनसः स्वाप्निकपदार्थाकारेण परिणामानङ्गीकारे तस्य द्रष्टृत्वं संभवत्येव। तथा सति 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' इति[3] श्रुतिव्याकोपात्। अन्यथा अयमर्थः—अत्र स्वप्नेऽयं पुरुषो जीवः आदित्यादिमनोवृत्तिपर्यन्तानां ज्योतिषामभावेन स्वयमेव स्वीयव्यवहारसाधनरूपं ज्योतिर्भवति इति चेन्न, स्वप्ने वहिरिन्द्रियसंप्रयोगाभावात्, बहिरिन्द्रियजन्यवृत्त्यभावेन तदानीं मनसो ज्ञानजनकत्वाभावात्। अतस्तस्य द्रष्टृत्वं विपद्यत एव। यतो हि—प्रत्यक्षादिप्रमाणसहकारेणैव तस्यार्थग्राहकता, नान्यथा। न हि कुत्रचिद् बाह्येन्द्रियसहकारं विना केवलयोरात्ममनसोः संयोगेन 'ज्ञानं वृत्ति र्वा जायते' इति स्वीकृतमन्यान्यतन्त्रेषु।

न च तथापि स्वप्ने मनसः सत्त्वे मनोविशिष्टचिद्रूपप्रमातृसत्त्वापत्तिरिति वाच्यम्, सवृत्तिकान्तःकरणावच्छिन्नस्यैव चैतन्यस्य प्रमातृत्वनियमात् स्वप्नेऽन्तःकरणसत्त्वेऽपि प्रमानुकूलव्यापारवत्त्वं प्रमातृत्वं वृत्तिं विना न संभवति। जाग्रत्यपि साक्षिण एव द्रष्टृत्वेऽपि प्रमाणजन्यवृत्त्यारोहे विषयीकरणात् प्रमात्रादिभावोप्यस्ति, स्वप्ने तु न तथा। एवं विचार्यमाणे एष पक्षः साधीयान् प्रतिभाति द्वितीयपक्षतः।

अथ द्वितीयपक्षो व्यवस्थाप्यते। अत्र केचित्—स्वप्ने मन एव मनोगतवासनानिमित्तेन गजतुरगाद्यर्थाकारेण परिणमते, अविद्यावृत्त्या च ज्ञायते। अतो मन एव स्वाप्निकपदार्थस्योपादानमिति भणन्ति। अन्तःकरणाभिन्नपरिणामवत्या मायाया गजाद्याः परिणामा इति। तथा च श्रुतिः—'सधीः स्वप्नो भूत्वेवं लोकमतिक्रामति' इति। मा शङ्कीयंदस्मिन् पक्षे प्रमाणाभाव इति, यतो हि स्वाप्निकगजाद्युत्पत्त्यन्यथानुपपत्तेरेव प्रमाणत्वात्।

अन्यथा स्वाप्नगजादेरन्तःकरणं विनैव साक्षादविद्योपादानकत्वे सुषुप्तावपि केवलाविद्यायाः सत्त्वेन स्वाप्नगजादिज्ञानापत्तिः स्यात्। अतः सुषुप्तौ मनसोऽभावेन स्वाप्निकपदार्थाभावे सति मनसः स्वाप्नपदार्थोपादानत्वं सिद्ध्यति।

---

१. प्र० प० ६७ पृ०। २. प्र० प० ६८ पृ०। ३. बृ० उ० ४।३।९।

अपि च—यदि केनापि न मन्यतेऽस्योपादानत्वं तर्हि मा भूदन्तःकरणमुपादानकारणम्। किन्तु यथा प्रवृत्तौ रागद्वेषादीनां निमित्तकारणताऽस्ति तद्वत् निमित्तकारणीभूतस्य अन्तःकरणस्याभावेन प्रतिभासानुपपत्ती सिद्धायां तस्य द्वारत्वं त्वक्षतमेव। वस्तुतस्तु नैष पक्षः श्रेयान्, यतो हि मनसो निमित्तत्वे चोपादानत्वेऽपि स्वप्ने गजाद्यवयवाभावेन न गजाद्युत्पत्तिः। यदि च प्रातिभासिकत्वेन न तदवयवापेक्षा स्वीक्रियते, तदा मूलाविद्याया एव साक्षात् प्रातिभासिकगजाद्युत्पत्तौ सिद्धायां किमन्तर्गडुना अन्तः करणेनेति।

## स्वप्नपदार्थस्य किमधिष्ठानम् ?

स्वाप्नपदार्थस्य प्रातिभासिकत्वेऽङ्गीकृते बहिः शुक्तिरूप्यस्य शुक्तिरधिष्ठानं रज्जुसर्पस्य च रज्जुः एवं विवर्तस्य जगतो ब्रह्म अधिष्ठानम्, तथैव स्वाप्निकस्य किमधिष्ठानमिति चेद् ? उच्यते—ननु 'त्रिविष्टपान्तिके विमानारूढोऽयं चोनानाक्रमते, इति स्वप्ने एतदधिष्ठानभूतत्रिविष्टपदेशविशेषस्य चैतन्येऽनुपलम्भात् न चैतन्यं स्वाप्निकाधिष्ठानम्। नापि चैतन्यातिरिक्तस्तत्प्रदेशोऽपि, यतो हि स्वाप्निकप्रदेशस्य व्यावहारिकदेशत्वस्वीकारे स्वप्नकाले व्यावहारिकदेशस्य दूरत्वात् तस्य स्वप्नपदार्थाधिष्ठानयोग्यत्वाभावात्। तस्य प्रातिभासिकत्वाङ्गीकारे तु यथा शुक्तिरूप्ये प्रातिभासिकस्थले प्रातिभासिकरजतापेक्षया शुक्तिरूपमधिष्ठानं प्रातिभासिककालात् पूर्वं विद्यमानं सद् अध्यस्यमानस्य रजतस्याधिष्ठानतां धत्ते, तथैवात्र स्वाप्निकप्रतिभासस्थलेऽपि अधिष्ठानस्य अध्यस्यमानात् पूर्वं विद्यमानता समुचिता स्यात्। किन्तु स्वप्नकालिकदेशस्य तत्क्षणे जायमानत्वात् तत्पूर्वमविद्यमानत्वाच्च प्रातिभासिकदेशोऽधिष्ठानत्वेन नोपयुज्यते। अतोऽत्र न किमप्यधिष्ठानम्, इष्टापत्तिश्चेति चेन्न। निरधिष्ठानस्य भ्रमत्वायोगात्, चैतन्यस्यैवाधिष्ठानत्वात्।

न चात्र शङ्का कार्या यज्ज्ञातमेवाधिष्ठानं ज्ञानविषयो भवति' यथा शुक्तिः। न तथा चैतन्यं तस्य स्वयं प्रकाशत्वात्। तत्रापि चैतन्यं चित्त्वादिना ज्ञायमानं नाधिष्ठानम्, असाधारणशुक्तित्वादिधर्मेण ज्ञायमानशुक्तिकादि यथा अनधिष्ठानम्, किन्तु इदन्त्वेन। प्रकृते सत्त्वेन ज्ञायमानमेव चैतन्यं तदधिष्ठानम्। तदा चिदानन्दादिरूपस्य तस्य मूलाविद्ययाऽऽवृतत्वात् 'घटः सन्नि' तिवत् 'स्वाप्निको गजः सन्निति' प्रतीतिः प्रतीयते। अतस्तेन रूपेण चैतन्याधिष्ठानत्वस्वीकारे न काचन विप्रतिपत्तिः। एवं सति सर्वेषां स्वाप्निकपदार्थदेशदर्शनादीनां तदेवाधिष्ठानम्।

एवं स्वीकृतेऽपि कीदृक् चैतन्यमधिष्ठानम् ? इति प्रश्नो जागर्त्येव। तत्र केचिदन्तःकरणावच्छिन्नं जीवचैतन्यमेव अधिष्ठानमामनन्ति। केचिच्च मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमेव।

ननु स्वप्नावस्थायां स्वाप्नस्य ब्रह्मचैतन्यमेवाधिष्ठानमिति पक्षे **'अधिष्ठान-तत्त्वसाक्षात्कारेण भ्रमज्ञानस्य निवृत्तिः'** इति सर्वसम्मतसिद्धान्तासंगतिः। यतो हि जाग्रद्बोधेन स्वप्नभ्रमनिवृत्तिः, इति लोकानुभवो बाध्येत। अपि च संसारदशायां ब्रह्मसाक्षात्कारो न भवति येन स्वप्ननिवृत्तिः स्यात्। यदि मन्यसे साक्षात्कारं तदा संसारनिवृत्तिरपि प्रसज्येत। तथा च जाग्रत्स्वप्नव्यवस्था उच्छिद्येत। एवं 'स हि कर्ता' इति जीवकर्तृत्वप्रतिपादिका श्रुतिरपि व्याकुप्येत। यतो हि सिद्धान्ते-यस्मिन् कार्ये यः कर्ता स एवाधिष्ठानम्। घटादावपि कपालाकारनिर्गतमनोवृत्त्या कुलालादेः कपालावच्छिन्नचिद्रूपत्वसम्पत्त्या तदेवास्ति। अतो मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यं नाधिष्ठानं भवितुमर्हति।

ननु अधिष्ठानावरणं विना अध्यासो न भवति आवरणं च जीवे न संभवति, 'अहमस्मि' इति प्रत्यक्षत्वात्। अत आवृतं ब्रह्मैवाधिष्ठानमिति चेन्न। स्वप्ने-ऽज्ञानावस्थारूपनिद्रावरकाभ्युपगमात्। जीवस्य स्वतोऽनावृतत्वेपि शरीरादिपुरस्कारेण आवृतत्वमस्त्येव 'व्याघ्रोऽहम्' शूद्रोऽहम्' इत्यादिभ्रमस्य स्वप्ने दर्शनात्। अत एवोक्तम् **'संशयस्वप्नौ न प्रमे,** इति। तस्मादन्तःकरणावच्छिन्नं जीवचैतन्यम-धिष्ठानं भवितुमर्हति।

तत्रापि अन्तः करणावच्छिन्नचैतन्यस्य अधिष्ठानत्वे 'अहं सुखी' इतिवत् 'अहं गजः' इत्यादिप्रतीतिर्न भवति तादृशाकारानुभवाहितसंस्काराभावात्। यथा 'इदं रजतम्' इति स्थले इदमाकारानुभवाहितसंस्कारजन्यत्वात् यथा इदं रजतमिति स्थले इदमाकारानुभवाहितसंस्कारजन्यत्वात् नाहं रजतमिति, तद्वत्। अथवा—तत्रापि अहङ्काररूपान्तःकरणस्य अधिष्ठानकोटौ विशेषणता नाभ्युपेयते, किन्तु अहङ्का-रोपहितं तत्प्रतिबिम्बितं चैतन्यमेवाधिष्ठानम्। तस्मादेव 'अहं गजः' इत्यादिप्रतीतिर्न भवति, अपि तु 'अयं गजः' इत्येव भवति। उक्तञ्च सूत्रमञ्जर्याम् –

आद्येऽहङ्कृत्युपहितचिदाभासास्पदं परे।
अहन्ताधीप्रसक्तिस्तु नाहङ्काराविशेषणात्॥

इदंवृत्तिचिदाभासे इत्थं रजतकल्पनात्।
नाहं रजतधीस्तद्वदनन्य नरवेद्यता॥

एवं सर्वेषामध्यस्यमानप्रातिभासिकदेशविशेषेन्द्रियग्राह्यत्वादीनां चैतन्य-मेवाधिष्ठानम्।

ब्रह्मचैतन्यस्याधिष्ठानत्वेऽपि न कोपि दोषः। अस्मिन् पक्षेऽपि ब्रह्मचैतन्य-रूपाधिष्ठानतत्त्वसाक्षात्काराभावेऽपि स्वप्नभ्रमनिवृत्तिर्भवति अधिष्ठानज्ञानाभावेऽपि जाग्रद्रूपभ्रमेण स्वप्नभ्रमतिरोभाव एव रज्ज्वां दण्डभ्रमेण सर्पभ्रमतिरोभाववत्।

तेन स्वाप्नस्य जाग्रतो वा भ्रमस्य निवृत्तिरेव, न तु बाधः। यावत् ब्रह्मसाक्षात्कारं पुनः पुनः स्वप्नस्य रजतादेर्भ्रमस्य चोत्पत्तिस्वीकारात्।

ब्रह्मचैतन्येऽधिष्ठाने भारतीतीर्थादयस्तु[१]—"देहाभ्यन्तरे अन्तःकरणवृत्त्यभिव्यक्तमनवच्छिन्नचैतन्यमेवाधिष्ठानम्' इति। प्रकाशात्मयतयस्तु—वृत्त्यनभिव्यक्तमनवच्छिन्नचैतन्यमेवाधिष्ठानम् इति। तदुक्तं संक्षेपशारीरके—

> अपरोक्षरूपविषयभ्रमधीः परोक्षमास्पदमपेक्ष्य भवेत्।
> मनसा स्वतो नयनतो यदि वा स्वपनभ्रमादिषु तथा प्रथितेः॥

तस्माद् यदवच्छेदेन यद् भासते स आधारः, यज् ज्ञानात् भ्रमो निवर्तते तदधिष्ठानमिति विवेकः।

---

१. सं० शा० १।४१

# काव्येषु स्वप्ननिरूपणम्

प्रायः सर्वेषु बौद्धजैनप्रभृतिकाव्येषु नाटकेषु च स्वप्नस्य विषयस्तत्फलञ्च यथावसरं वर्णितमुपलभ्यते। मन्ये यत्तेऽपि भारतीयपरम्परानुसारेण तस्य सूचकत्वं तत्फलस्य सत्यत्वमङ्गीकुर्वन्ति। अतस्तत्रत्यमपि किञ्चिदुल्लेखनीयमिति कृत्वा प्रदर्श्यते।

जैनसाहित्ये विशेषेण स्वप्नोपवर्णनमुपलभ्यते तत्र द्वासप्ततिस्वप्नाः प्रशस्तास्तत्रापि त्रिंशत् प्रशस्ततरास्तत्रापि चतुर्दश स्वप्नाः महास्वप्नपदेनाभिधीयन्ते स्वप्नचतुष्टयस्य स्वप्नसप्तकस्यापि चर्चा वर्तते।

तद् यथा विनयचन्द्रविरचिते मल्लिनाथचरितकाव्ये ४ सर्गे—

स्वप्नान् द्वासप्ततिं राजन् प्रशस्तान् कोविदा विदुः।
तन्मध्यात् त्रिंशतं तेषु महास्वप्नांश्चतुर्दश ॥५०॥

अर्हतां चक्रिणां माता चतुर्दशैव पश्यति।
हरेर्माता तथा सप्त चतुरः सीरिणोपि च ॥५१॥

तत्र वृषगजसिंहलक्ष्मीमालाचन्द्रसूर्यध्वजघटसरोवरसमुद्रविमानरत्नसमूहनिधूं-ाग्नीनां दर्शनानि चतुर्दशमहास्वप्ननाम्ना प्रसिद्धानि, एतेषां वर्णनं फलञ्च निरूपिते यथा—

निशि तस्यामदृश्यन्त देव्या गर्भागते विभौ।
चतुर्दश महास्वप्नाः सुप्तया वासवेश्मनि ॥२५३॥

शरदभ्रप्रभाशोभी मणिश्रेणी विभूषणः।
चंगशृंगः समुत्तुंगः प्राग्रपादाग्रवल्गितः ॥२५४॥

उपागतो जंगमतां किल राजतपर्वतः।
स्वप्नेषु "वृषभः" पूर्वं महदेव्या न्यरूप्यत ॥२५५॥

गुरुक्रमः सितो 'दन्ती' धर्मो मूर्तिमिवाश्रितः।
चतुर्भिः करगैर्दन्तैः स्वभेदान् दर्शयन्निव ॥२५६॥

'हर्यक्षः' शौर्यवर्येषु जितकाशी प्रकाशयन् ।
जयस्तम्भमिवोत्क्षिप्त–पुच्छदण्डच्छलादलम् ॥२५७॥

ककुप्कुम्भिकरोज्जृम्भिकुम्भाम्भोभिषवादिव ।
'देवी' स्मेरास्यहस्ताह्लिपद्मा पद्माधिवासिनी ॥२५८॥

'दाम' स्वर्धामविविधप्रसूनपरिगुम्फितम् ।
भ्रमद्भ्रमरझंकारैः किल क्लृप्तार्हतस्तुति ॥२५९॥

श्रितः स्वक्षयशान्त्यर्थमिवाराद्धुं जिनाधिपम् ।
किरणापूर्णदिक्श्रेणिः पार्वणो 'रोहिणीश्वरः' ॥२६०॥

प्रकाशः शाश्वतो मेऽस्तु लोकालोकविलोककृत् ।
देवेशसेवयेतीव 'तीव्ररश्मि' रुपास्थितः ॥२६१॥

भाव्यसौ विश्वविश्वेशो विश्वविश्वोपकारकः ।
जिनेन्द्रः किंकिणीक्वाणैरिति जल्पन्निव 'ध्वजः' ॥२६२॥

शातकुम्भमयः 'कुम्भो' ऽम्भः पूर्णः पल्लवैर्नवैः ।
लोकत्रितयकल्याणकन्दः कन्दलितः किल ॥२६३॥

स्मेरपद्माकरैः शुद्धैरापत्तापमलापहैः ।
'सर' स्तरंगितं तोयैस्त्रैलोक्यसुकृतैरिव ॥२६४॥

प्रभुस्नात्रैः पवित्रं मे वारि वन्द्यं सुरासुरैः ।
भावीति हर्षाल्लहरीहस्तैर्नृत्यन्निव "वार्णवः" ॥२६५॥

सर्वार्थसिद्धिं मां मुक्त्वा सिद्धिमाप्तुं किमु प्रभो ।
रक्तोऽसीति विभुं वक्तुं तव "विमान" मिवागतम् ॥२६६॥

दारिद्र्यादीनि कष्टानि निपेष्टुमिव कष्टिनाम् ।
उन्मुद्रितेन्द्रकोदण्डयत्नो 'रत्नोच्चयो' महान् ॥२६७॥

प्रभोरिव तपस्तेजोराशिः प्राग्जन्मलासितः ।
कृतत्रैलोक्यपावित्र्यमंगलो "ज्वलनो" ज्वलन् ॥२६८॥

देवी चतुर्दशरज्जुलोकेशोत्पत्तिसूचकान् ।
वदने विशतोऽपश्यद्विमान् स्वप्नांश्चतुर्दश ॥२६९॥

अनन्तरम् एतेषां चतुर्दश महास्वप्नानां फलान्यपि तत्रैव वर्ण्यन्ते—

अथो यथार्थस्वप्नार्थकथनार्थं पुरन्दराः ॥
मित्रवन्मिलिताः स्वामिमातुरन्तिकमाश्रयन् ॥२७५॥

किरीटघटिताऽजर्यवर्यपाणिपुटाः स्फुटम् ।
स्वप्नार्थं सार्थं (तेऽथ) स्वर्नाथा मरुदेव्याः पुरोऽवदन् ॥२७६॥

भावि स्वामिनि ! सूनुस्ते स्वप्ने वृषभवीक्षणात् ।
साधून् संसारकान्तारपारं प्रापयितुं क्षमः ॥२७७॥

भविष्यति भवारण्यकर्मद्रुमविमूलनात् ।
दानस्थानकरः स्थामधाम सामजदर्शनात् ॥२७८॥

विभिद्याशुभकुम्भीन्द्रान् यशोभिर्मौक्तिकैरिव ।
अलंकरिष्यते विश्वसंहतिं सिंहदर्शनात् ॥२७९॥

द्रुतं विद्राव्य दारिद्र्यं क्षितौ लक्ष्मीनिरीक्षणात् ।
पोषयिष्यति सौख्यानि निःशेषाणि वपुष्मताम् ॥२८०॥

मालाविलोकनाल्लोकहृदावासनिवासकृत् ।
स्वयशः सौरभैर्विश्वत्रयीं सुरभिष्यति ॥२८१॥

पूर्णेन्दुदर्शनात् पुण्यदर्शने ! दर्शनप्रियः ।
सोमः स्फुरत्कलास्तोमः कुमुदं मदयिष्यति ॥२८२॥

जगज्जागरकृद्गोभिर्गतदोषो महामहाः ।
ततमोहतमोहर्ता भावी भानुनिभालनात् ॥२८३॥

वर्धमानासमाखर्वपर्वरुद्वंशशंश्रयः ।
परिष्करिष्यते विश्वसौधाग्रं ध्वजवीक्षणात् ॥२८४॥

त्रैलोक्यमपि कल्याणैरनल्पं कल्पयिष्यति ।
सद्वृत्तशोभितः शातकुम्भकुम्भनिभालयात् ॥२८५॥

भवाटवीभ्रमार्त्तानां पापतापं हरिष्यति ।
विलासिकमलाश्लिष्टः सरोवरनिरीक्षणात् ॥२८६॥

निर्मलो कलितोऽत्यक्तसीमा सद्गुणरत्नभूः ।
अधर्षणीयो भविता क्षीरनीरधिवीक्षणात् ॥२८७॥

सेविष्यते सदैवाऽसौ सर्वत्रास्खलितोदयः ।
विमानदर्शनाद् देवि ? देवैर्वैमानिकादिभिः ॥२८८॥

रत्नाधिकोऽधिकं ज्ञानादीनि रत्नानि देहिनाम् ।
कृतदास्यः सुरैर्दास्यत्ययं रत्नोच्चयेक्षणात् ॥२८९॥

जगज्जननि निर्धूमधूमध्वजनिरीक्षणात् ।
महामहस्वी दुष्कर्मगहनं भस्मयिष्यति ॥२९०॥

जगन्मातर्जगत्त्राता जगन्नाथो जिनेश्वरः ।
भाव्यत्र भरतक्षेत्रे स्वप्नैरेभिस्तवात्मभूः ॥२९१॥

अमरचन्द्रसूरिकृते पद्मानन्दमहाकाव्ये ७ सर्गे ।

अपि च—

स्वप्नांश्चतुर्दश विलोक्य सुमंगलाख्यद् भर्त्रेऽथ गर्भमहिमाद्भुततानिदानम् ।
भावी भवत्तनुभुवो भुवि चक्रवर्तीत्यस्यै शशंस भुवनत्रितयावतंसः ॥११०॥

पद्मानन्दमहाकाव्ये ९ सर्गे ।

अन्यत्राप्येतेषां चतुर्दशमहास्वप्नानां सफलं वर्णनम्—

तदावतारयामिन्यां सुखसुप्ता महासती ।
वीक्षांचक्रे क्रमादेतान् महास्वप्नान् प्रभावती ॥२२॥

गोक्षीरधारा गौरांगः ककुद्मान् मदमेदुरः ।
उन्नदन् मधुरध्वानमानन्दं प्रोद्गिरन्निव ॥२३॥

चतुर्भिर्दशनैः शुभ्रैरुपायैरिव भूपतिः ।
करी मदरुचिः प्रेंखद्रोलम्बरवडम्बरी ॥२४॥

रज्यद्भिरिव काश्मीरैः राजितं स्कन्धकेशरैः ।
केशरी सौम्यकामास्यः शरलीकृतवालधीः ॥२५॥

करीश्वरकरक्रोडस्वर्णकुम्भजलोर्मिभिः ।
संसिच्यमानपुण्यद्रुरिव लक्ष्मीः पुरःस्थिता ॥२६॥

कल्पद्रुपारिजातादिप्रसूनस्तोमगुम्फितम् ।
दामं दामाच्छिन्नमिव चंचलायाः सदा श्रियाः ॥२७॥

तन्वन् कुवलयोल्लासं दृक्चकोरमुदं दिशन् ।
राजमानः करे राजा पुण्यपादपदोहदः ॥२८॥

भाभिरुद्योतिताशेषदिक्चक्रश्चक्रबान्धवः ।
पूर्वाद्रिमौलिमाणिक्यपद्मिनीवनवल्लभः ॥२९॥

सुवर्णकिंकिणीक्वाणैर्जगतोऽशेषसम्पदः ।
व्याहरन्निव सद्वंशभ्राजिष्णुश्चपलो ध्वजः ॥३०॥

नीलाम्बरोऽम्बरेणेव रोचिष्णुः प्रबलैर्दलैः ।
कामकुम्भः श्रियो देव्याश्चित्रं लीलाविलासभूः ॥३१॥

आकण्ठं पूर्णमम्भोभिः सुधाकुण्डमिवापरम् ।
तापोपतापविध्वंसि पद्मरम्यं सरोवरम् ॥३२॥

मर्यादोदयरोचिष्णुर्भ्राजिष्णुर्माहिनीशतैः ।
सार्वभौममसमं चिन्वन् गम्भीरः सरितां पतिः ॥३३॥

गर्भजीवस्फुरत्प्राज्यहर्षव्यतिकरादिव ।
विमानमनुगं स्फूर्जत्किंकिणीक्वाणभासुरम् ॥३४॥

किं रोहणं करे कृत्वा किं वा रत्नाकरं पुनः ।
रत्नोच्चयः पुरः पुण्यसंपदा प्राभृतीकृतः ॥३५॥

दधानो वैद्रुमीं भ्रान्ति ज्वालामालाकरालितः ।
उद्यद्दिनेशसदृशो निर्धूमश्च विभावसुः ॥३६॥

इत्येतान् हर्षकल्पद्रोः सुमेरुगिरिकन्दरान् ।
प्रभावती महादेवी दृष्ट्वा स्वप्नान् व्यबुध्यत ॥३७॥

स्वप्नाम्तादपि जाग्रत्या प्रभावत्या महीपतेः ।
कथयामासिरे प्रातर्यथादृष्टान्यमून्यथ ॥४४॥

ऋजुना मनसा स्वप्नान् विचार्य क्षोणिनायकः ।
आचख्याविति ते देव्यपत्यरत्नं भविष्यति ॥४५॥

विनयचन्द्रसूरिकृते मल्लिनाथचरितमहाकाव्ये ४ सर्गे ।

अन्यत्र—

वृषेभसिंहश्रीदामचन्द्रादित्यान् ध्वजं घटम् ।
सरोवार्द्धिविमानानि रत्नौघज्वलितानलौ ॥५३॥

एतान् लोकोत्तरस्फूर्तिप्रभावाद्भुतसूचकान् ।
तदा चतुर्दश स्वप्नान् मरुदेवी व्यलोकयत् ॥५४॥

अथ प्रातः प्रबुद्धासौ नाभेः स्वप्नानचीकथत् ।
सोऽप्युवाचेति पुत्रस्ते भावी कुलकरोत्तमः ॥५५॥

उदयप्रभसूरिकृते धर्माभ्युदयकाव्ये ३ सर्गे ।

अन्यत्र—

चैत्रकृष्णचतुर्थ्यां स विशाखायां ततश्च्युतः ।
निशीथेऽवातरद् वामा कुक्षौ भाग्यैर्भुवोऽद्भुतैः ॥३०॥

वामादेव्या तदा दृष्टाः प्रविशन्त इमे मुखे ।
चतुर्दश महास्वप्नास्तीर्थकृज्जन्मसूचकाः ॥३१॥

गजेन्द्रो वृषभः सिंहो लक्ष्मीर्माल्यं शशी रविः ।
ध्वजः कुम्भः सरो वार्धिविमानं वसवोऽनलः ॥३२॥

अथेन्द्रास्तुष्टुवुर्देवीं तत्रैत्य चलितासनाः ।
हृष्टाश्च कथयामासुरित्थं स्वप्नविचारणम् ॥३३॥

गजेन विश्वशौण्डीरो धर्मधुर्यो वृषेण तु ।
सिंहेन निर्भयः शूरः श्रिया विश्वश्रियांचितः ॥३४॥

स्रजा मूर्धोपरि सतां शशिना नयनामृतम् ।
सूर्येण तमसां हर्ता कुलोत्तंसो ध्वजेन तु ॥३५॥

कुम्भेन गुणसम्पूर्णः सरसा विश्वतापहृत् ।
वार्धिना गुरुगम्भीरो विमानेनामराश्रयः ॥३६॥

महार्घ्यो रत्नपुंजेन दीप्तो निर्धूमवह्निना ।
इमैः स्वप्नैर्जिनः पुत्रो भावी ते स्वामिनीवृशः ॥३७॥

तथैव कथिते प्रातः पत्या तज्ज्ञैश्च साऽधिकम् ।
हृष्टा गर्भं दधौ कल्पद्रुमं नन्दनभूरिव ॥३८॥

भावदेवसूरिकृते पार्श्वनाथचरितकाव्ये ५ सर्गे ।

हिमगिरिशिलाकायच्छायं यशः किल मूर्तिमत्
शुभशुभमयैरंशैर्दन्तैश्चतुर्भिरलंकृतम् ।

सुरभितदिशं श्च्योतद्दानाम्भसा शुचिसाविशो
वदनकमले सा शक्रेभं विशन्तमवैक्षत ॥ (सर्गः १४।३०)

शरदिजशशिज्योत्स्नागौरं शुभं तनुतां गतं
कि.ल वसुमतीं शृंगाग्राभ्यामुदंच्य वहन्तमम् ।

ध्रुवमुपहृतं यानं स्वीयं द्वितीयमरुत्वता
तदनु वृषभं देव्यद्राक्षीद् दिवोऽप्यवतारिणम् ।। ( सर्गः १४।३१ )

वपुषि सितिमाऽद्वैतं स्फीतं वहन्तमकल्पितं,
नयनकपिलज्योतिःपुंजैर्विधूततडित्प्रभम् ।
बलमदभृतो न्यक्कुर्वाणं रवैरपि दिग्गजान्,
नयनपदवीमेणाधीशं ततो नयतिस्म सा ।।३२।।

निरवधिमहासौन्दर्यैकक्रयाणकहट्टिका,
सुमशरनृपस्वाम्योद्बोधाक्षराजुंनपट्टिका ।
समुदितजगत्सुभ्रूरूपाभिमानविजित्वरी,
प्रथमवदसौ देवी लक्ष्मीमवैक्षत विक्षताम् ।।३३।।

व्यजयत पुरा माऽस्याः श्वासो मृदुत्वमिदं ततो,
दधदतिशयं सर्वोत्कृष्टं पदौ शरणश्रिये ।
विविधकुसुमामोदाकृष्टप्रभूतमधुव्रता,
सरससुमनोमाला तस्या इतीव मुखेऽविशत् ।।३४।।

वदनमलेनैतस्याः प्राग् जितोऽस्मि यतो नभे,
दिवससमये किंचिद् नैन प्रभा प्रभवत्यपि ।
अविकलकलामद्विभ्रत्याः कलाश्च चतुर्गुणाः,
इति शशधरस्तस्या वक्त्रे विवेश सिसेविषुः ।।३५।।

अयमपि विभुर्भव्यान् पद्माकरानिव भोत्स्यते,
निजकमहसा सर्वानन्यान् प्रसह्य विजेष्यते ।
अहमिव जगच्चक्षुर्भावी भजाम्यमुमेव तद्,
प्रथममिव तद्वक्त्रे भास्वानविक्षदवेक्षितुम् ।।३६।।

गिरिपदजुषो वंशस्याग्रेसरोऽहमिव प्रभुः,
समधिकतरस्फूर्जत्प्रौढ्या सुपर्वकृतश्रियः ।
जगति भविता नानाकोटीस्वरालयभूषणं,
स्वयमिति कृतस्वान्तस्तस्या विवेश मुखे ध्वजः ।।३७।।

जलनिधिवदाकण्ठं पूर्णजलैर्मधुरैः परम्,
विकचसुमनोमालाकीर्णजिनेश्वरबिम्बवत् ।
उपहृतमिव स्वर्नाथेनाप्रतोपि निधिं नवं,
कनककलसं कल्याणाप्तौ विलोकयतिस्म सा ।।३८।।

प्रतिनिधिमिव क्षीरोदस्यामृतैरमृतप्रभै -
र्विशदविशदैराप्लायन्तं गतैः परिपूरितम् ।
पतगमिथुनैर्नानारूपासितमाचितं,
विकसिततरैः पद्मैः पद्माकरं च समैक्षत ॥३९॥

प्रियतमया क्रोडक्रीडच्च्युतोपलसंविदा -
ऽवगणितमहारत्नज्योतिर्विभासितसैकतम् ।
पवनचलनोत्थास्नूर्मीणां सहस्रसमाकुलम्,
प्रमुदितमनाः पारावारं निभालयति स्म सा ॥४०॥

प्रविशति तमो यस्मिन्नेव प्रभाकरमण्डलम्,
प्रतिरजनि चाऽऽदायाऽऽदायाऽऽहितं च विरंचिना ।
सुखसमुदयान्मुक्तैः संवावदूकमलं सुखं,
नृपतिदयिता वीक्षांचक्रे विमानमनुत्तरम् ॥४१॥

इतरभवने जानात्यर्घं न कश्चन मामकं,
कथमपि विदन् न स्वीकर्तुं दधाति समर्थताम् ।
इति जिनपतेः कर्तुं सेवामिव प्रगुणीभवन् -
महिमविधृतौ रत्नस्तोमं तदाननमाविशत् ॥४२॥

ममतनुभुवा धूमेनेदं जगन्मलिनीकृतं
त्रिभुवनगुरो ! त्वं तत्सर्वं परित्रय चित्रवाक् ।
इति जिनपतिं विज्ञाप्सुः किं जनेश्वरवल्लभा -
मुखविधुमयं निर्धूमोऽग्निर्विवेश विभास्वरः ॥४३॥

यो ज्ञास्यते किल चतुर्दश रज्जुलोकं,
विद्याश्चतुर्दश ददर्श तथा च सुतस्तदीयः ।
रत्नानि पास्यति चतुर्दश दर्शनीयः,
स्वप्नांश्चतुर्दश ददर्श च सा ततोऽपि ॥४४॥

देवी सोत्थाय तल्पात् प्रमुदितहृदया मन्दमन्दं चलन्ती,
गत्वा राज्ञः समीपं धृतकुसुमफला स्वप्नजातं जगाद ।

सोऽप्यूचे देवि पुत्रस्तव किल भविता साम्यरूपः प्रकृत्या,
श्रुत्वैवं तोषपूर्णा समुचितशकुनग्रन्थिमेषा बबन्ध ॥४७॥

श्रीमुनिभद्रसूरिः—श्रीशान्तिनाथे, पृ० २५०।२५२

निशान्ते चतुर्दशमहास्वप्नवर्णनम्—

सा निशान्ते महास्वप्नांश्चतुर्दश ददर्श च ॥९३॥

गजौक्षसिंहलक्ष्मीस्रक्चन्द्रार्ककलशध्वजाः ।
पद्माकरविमानाब्धिरत्नपुंजाग्नयस्तु ते ॥९४॥

पत्युरत्युत्सुका स्वप्नानाख्यद् देवि प्रबुध्य तान् ।
राजा तदैव दैवज्ञमपृच्छत् क्रोष्टुकिः स्वयम् ॥९६॥

स व्याचख्यौ सुतो भावी जिनो वा त्रिजगत्पतिः ।
श्रुत्वेति तावपि प्रीतौ पीयूषस्नापिताविव ॥९७॥

उदयप्रभसूरिकृते धर्माभ्युदयकाव्ये १२ सर्गे ।

ततो ददर्श सा राज्ञी निशान्ते शयनस्थिता ।
चतुर्दश महास्वप्नांश्चक्रभृज्जन्मसूचकान् ॥१३॥

भावदेवसूरिकृते पार्श्वनाथचरितकाव्ये ४ सर्गे ।

## काव्येषु दुःस्वप्नशान्तिः

दुःस्वप्नोपशमाय दुर्जनसमालोकागतैनश्छिदे
दुश्चिन्ताहतये दुरीहितभवद्विघ्नव्युदासाय च ।
भूपः कल्पितदक्षिणैः कृतजयाघोषोत्सवं ब्राह्मणै-
राज्यावीक्षणमेतदस्तु भवतः सर्वेप्सितावाप्तये ॥

सोमदेवविरचिते यशस्तिलकचम्पूकाव्ये १३८ पृ० ।

मया वृष्टोऽद्य दुःस्वप्नः किल शृंखलमण्डलैः ।
बद्ध्वाऽऽकृष्य तटाद् भूपाः कूपान्तर्मामपातयन् ॥३३९॥

अशिवस्य विभेदाय स्वप्नार्थोऽयं ततोऽधुना ।
अवश्यं सत्यतां नेयो भवद्भिर्बलशालिभिः ॥३४०॥

अनिच्छताऽपीदं राज्ञां प्रभोर्व्यसनसाहसम् ।
आज्ञां दत्वा स राजेन्दुः कूपमेकमकारयत् ॥३४१॥

उदयप्रभसूरिकृते धर्माभ्युदयकाव्ये ४ सर्गे ।

दुःस्वप्नमापतति भाविविशेषयोगात्
पुंसां सुषुप्तिसमये नियतेर्नियोगात् ।

दुःखं न तत्र विमृशन्ति विवेकभाज-
स्तन्वन्ति शान्तिकविधिं खलु तस्य शान्त्यै ॥८३॥

मुनिभद्रसूरिकृते श्रीशान्तिनाथमहाकाव्ये ३ सर्गे।

शान्तेः स्वस्त्ययनात् दानात् विप्राणां स्वस्तिवाचनात्।
दुःस्वप्नोत्पातशमनं सतां चैवानुकीर्तनात् ॥२४॥

क्षेमीश्वरकृते चण्डकौशिकनाटके १ अङ्के।

सखि सर्वमेवैतद् शुभनिवेदनम्।
तद्देवतानां प्रणामेन द्विजजातिगणप्रतिग्रहेण चान्तर्यताम्।
न खलु द्रंष्ट्रिणो नकुलस्य वा दर्शनमहि-
शतवधं च स्वप्ने प्रशंसन्ति विचक्षणाः।

वेणीसंहार नाटके २ अङ्के।

# प्रकीर्णप्रकरणम्

ब्रह्मवैवर्ते गणेशखण्डे ३३ अध्याये—

परशुरामदृष्टस्वप्नाः—

निशातिशेषे स भृगुश्चारु स्वप्नं ददर्श ह।
न चिन्तितं यन्मनसा वायुपित्तकफं विना।।३४।।

गजाश्वशैलप्रासादगोवृक्षफलितेषु च।
आरुह्यमाणमात्मानं रुदन्तं कृमिभक्षितम्।।३५।।

आरुह्यमाणमात्मानं नौकायां चन्दनोक्षितम्।
धृतवन्तं पुष्पमालां शोभितं पीतवाससा।।३६।।

विण्मूत्रोक्षितसर्वांगं वसापूयसमन्वितम्।
वीणां वरां वादयन्तमात्मानञ्च ददर्श ह।।३७।।

विस्तीर्णपद्मपत्रैश्च स्वं ददर्श सरित्तटे।
दध्याज्यमधुसंयुक्तं भुक्तवन्तञ्च पायसम्।।३८।।

भुक्तवन्तञ्च ताम्बूलं लभन्तं ब्राह्मणाशिषम्।
फलपुष्पप्रदीपञ्च पश्यन्तं स्वं ददर्श ह।।३९।।

परिपक्वफलं क्षीरमुष्णान्नं शर्करान्वितम्।
स्वस्तिकं भुक्तवन्तं स्वं ददर्श च पुनः पुनः।।४०।।

जलौकसा वृश्चिकेन मीनेन भुजगेन च।
भक्षितं भीतमात्मानं पलायन्तं ददर्श सः।।४१।।

ततो ददर्श चात्मानं मण्डलं चन्द्रसूर्ययोः।
पतिपुत्रवतीं नारीं पश्यन्तं सस्मितं द्विजम्।।४२।।

सुवेशया कन्यकया सस्मितेन द्विजेन च।
ददर्श श्लिष्टमात्मानं तुष्टेन परितुष्टया।।४३।।

फलितं पुष्पितं वृक्षं देवताप्रतिमां नृपम्।
गजस्थञ्च रथस्थञ्च पश्यन्तं स्वं ददर्श ह।।४४।।

पीतवस्त्रपरीधानां रत्नालङ्कारभूषिताम् ।
विशन्तीं ब्राह्मणीं गेहं पश्यन्तं स्वं ददर्श ह ॥४५॥

शंखं च स्फाटिकं श्वेतमालां मुक्ताञ्च चन्दनम् ।
सुवर्णं रजतं रत्नं पश्यन्तं स्वं ददर्श ह ॥४६॥

गजं वृषं च सर्पं च श्वेतं च श्वेतचामरम् ।
नीलोत्पलं दर्पणञ्च भार्गवः स्वं ददर्श ह ॥४७॥

रथस्थं नवरत्नस्थं मालतीमाल्यभूषितम् ।
रत्नसिंहासनस्थं स्वं भृगुः स्वप्ने ददर्श ह ॥४८॥

पद्मश्रेणीं पूर्णकुम्भं दधि लाजं घृतं मधु ।
पर्णच्छत्रं छत्रिणं च भृगुः स्वप्ने ददर्श ह ॥४९॥

वकपंक्तिं हंसपंक्तिं कन्यापंक्तिं व्रतान्विताम् ।
पूजयन्तीं घटशुभं भृगुः स्वप्ने ददर्श ह ॥५०॥

मण्डपस्थं द्विजगणं पूजयन्तं हरं हरिम् ।
जयोऽस्त्वित्युक्तवन्तं तं भृगुः स्वप्ने ददर्श ह ॥५१॥

सुधावृष्टिं पर्णवृष्टिं फलवृष्टिं च शाश्वतीम् ।
पुष्पचन्दनवृष्टिञ्च भृगुः स्वप्ने ददर्श ह ॥५२॥

सद्योमांसं जीवमत्स्यं मयूरं श्वेतखञ्जनम् ।
सरोवरञ्च तीर्थानि भृगुः स्वप्ने ददर्श ह ॥५३॥

पारावतं शुकं चाषं शंखचिल्लं च चातकम् ।
व्याघ्रं सिंहं च सुरभिं भृगुः स्वप्ने ददर्श ह ॥५४॥

गोरोचनं हरिद्रां च शुल्कधान्याचलं वरम् ।
ज्वलदग्निं तथा दूर्वां भृगुः स्वप्ने ददर्श ह ॥५५॥

देवालयसमूहञ्च शिवलिङ्गञ्च पूजितम् ।
अर्चितां मृण्मयीं शैवां भृगुः स्वप्ने ददर्श ह ॥५६॥

यवगोधूमचूर्णानां पिष्टानि लड्डुकानि च ।
भृगुर्ददर्श स्वप्ने च बुभुजे च पुनः पुनः ॥५७॥

दिव्यवस्त्रपरीधानो रत्नभूषणभूषितः ।
अगम्यागमनं स्वप्ने चकार भृगुनन्दनः ॥५८॥

ददर्श नर्तकीं वेश्यां रुधिरं च सुरां पपौ।
रुधिरोक्षि सर्वाङ्गः स्वप्ने च भृगुनन्दनः ॥५९॥

पक्षिणां पीतवर्णानां मानुषाणां च नारद।
मांसानि बुभुजे रामो हृष्टः स्वप्नेऽरुणोदये ॥६०॥

अकस्मान्निगडैर्बद्धं क्षतं शस्त्रेण स्वं भृगुम्।
दृष्ट्वा च बुबुधे प्रातः समुत्तस्थौ हरिं स्मरन् ॥६१॥

अतीवहृष्टः स्वप्नेन प्रातः कृत्यं चकार सः।
मनसा बुबुधे सर्वं विजेष्यामि रिपुं ध्रुवम् ॥६२॥

कार्यवीर्यार्जुन दृष्टस्वप्नाः[1]—

आन्दोलयति मे प्राणान् मनः संक्षुभितं मुहुः।
शश्वत् स्फुरति वामाङ्गं दृष्टं स्वप्नं शृणु प्रिये ॥१०॥

तैलाभ्यङ्गितमात्मानमदर्शं गर्दभोपरि।
बिभ्रन्तमोड्रपुष्पस्य माल्यञ्च रक्तचन्दनम् ॥११॥

रक्तवस्त्रपरीधानं लौहालङ्कारभूषितम्।
हसन्तञ्चैव क्रीडन्तं निर्वाणाङ्गारराशिना ॥१२॥

भस्माच्छन्नाञ्च पृथिवीं जवापुष्पान्वितां सति।
रहितं चन्द्रसूर्याभ्यां रक्तसंध्यान्वितं नभः ॥१३॥

मुक्तकेशां च नृत्यन्तीं विधवां छिन्ननासिकाम्।
रक्तवस्त्रपरीधानामदर्शमट्टहासिनीम् ॥१४॥

सशवामग्निरहितां चितां भस्मसमन्विताम्।
भस्मवृष्टिमसृग्वृष्टिमङ्गारवृष्टिमीश्वरि ॥१५॥

पक्वतालफलाकर्णां पृथिवीमस्थिसंयुताम्।
अदर्शं खर्पराशिञ्च छिन्नकेशनखान्वितम् ॥१६॥

पर्वतं लवणानाञ्च राशीभूतं कपर्दकम्।
चूर्णानाञ्चैव तैलानामदर्शं कन्दरं निशि ॥१७॥

अदर्शं पुष्पितं वृक्षमशोककरवीरयोः।
तालवृक्षं च फलितं तत्र तत्र पततु फलम् ॥१८॥

---

१. ब्रह्मवैवर्ते गणेशखण्डे ३४ अध्याये।

स्वकरात् पूर्णकलसः पपात च बभञ्ज च।
इत्यदर्शञ्च गगनात् सम्पतच्चन्द्रमण्डलम् ॥१९॥

अदर्शमम्बरात् सूर्यमण्डलं सम्पतद् भुवि।
उल्कापातं धूमकेतुं ग्रहणं चन्द्रसूर्ययोः ॥२०॥

विकृताकारपुरुषं विकटास्यं दिगम्बरम्।
आगच्छन्तञ्चाग्रतस्तु अदर्शञ्च भयानकम् ॥२१॥

बाला द्वादशवर्षीया वस्त्रभूषणभूषिता।
संरुष्टा याति मद्गेहादित्यदर्शमहं निशि ॥२२॥

विदायं देहि राजेन्द्र त्वद्गेहाद् यामि काननम्।
वदसि त्वं लागिति च निश्यदर्शमहं शुचा ॥२३॥

रुष्टो विप्रो मां शपति संन्यासी च तथा गुरुः।
भित्तौ पुत्तलिकाश्चित्रा नृत्यन्तीत्यदर्शं परम् ॥२४॥

चञ्चलानां च गृध्राणां काकानां निकरैः सदा।
पीडितं महिषाणां च स्वमदर्शमहं निशि ॥२५॥

तैलपीडितयन्त्रञ्च तैलकारेण भ्रामितम्।
दिगम्बरान् पाशहस्तानदर्शमहमीश्वरि ॥२६॥

नृत्यन्ति गायनाः सर्वे गानं गायन्ति मे गृहे।
विवाहं परमानन्दमित्यदर्शमहं निशि ॥२७॥

रमणं कुर्वतो लोकान् केशाकेशीति कुर्वतः।
अदर्शं समरं रात्रौ काकानाञ्च शुनामिति ॥२८॥

मोदकानि च पिण्डानि श्मशानशवसंयुतम्।
रक्तवस्त्रं शुक्लवस्त्रमदर्शं निशि कामिनि ॥२९॥

कृष्णाम्बरा कृष्णवर्णा नग्ना च मुक्तकेशिनी।
विधवा श्लिष्यति च मामदर्शं निशि शोभने ॥३०॥

नापितो मुण्डितो मुण्डं श्मश्रुश्रेणीं मम प्रिये।
वक्षःस्थलं च नखरमित्यदर्शमहं निशि ॥३१॥

पादुकाचर्मरज्जूमदर्शं राशिमुल्वणम्।
चक्रं भ्रमन्तं भूमौ च कुलालस्येति सुन्दरि ॥३२॥

वात्यया घूर्ण्यमानं शुष्कवृक्षं समुत्थितम् ।
घूर्ण्यमानं कबन्धं च ददर्श निशि सुव्रते ॥३३॥

ग्रथितां मुण्डमालां च घूर्ण्यमानां च वात्यया ।
अतीव घोरदशनामित्यदर्शमहं परे ॥३४॥

भूतप्रेता मुक्तकेशा वमन्तश्च हुताशनम् ।
मां भीषयन्ति सततमित्यदर्शमहं निशि ॥३५॥

दग्धजीवं दग्धवृक्षं व्याधिग्रस्तं नरं परम् ।
अंगहीनञ्च वृषलमित्यदर्शमहं निशि ॥३६॥

गेहपर्वतवृक्षाणां सहसा पतनं परं ।
मुहुर्मुहुर्वज्रपातमित्यदर्शमहं निशि ॥३७॥

कुक्कुराणां शृगालानां रोदनं च मुहुर्मुहुः ।
गृहे गृहे च नियतमित्यदर्शमहं निशि ॥३८॥

अधोमस्तमूर्ध्वपादं मुक्तकेशं दिगम्बरम् ।
भूमौ भ्रमन्तं गच्छन्तमित्यदर्शमहं नरम् ॥३९॥

विकृताकारशब्दश्च ग्रामाधि देवरोदनम् ।
प्रातः श्रुत्वाववोधं च कमुपायं वदाधुना ॥४०॥

**नारायण उवाच[1]—**

अथ कंसो विचिन्त्यैवं दृष्ट्वा दुःस्वप्नमेव च ।
समुद्विग्नो महाभीतो निराहारो निरुत्सवः ॥१॥

पात्रमित्रं बन्धुगणं बान्धवञ्च पुरोहितम् ।
समानीय सभामध्ये तानुवाच सुदुःखितः ॥२॥

कंस उवाच—

मया दृष्टो निशाशेषे यो दुःस्वप्नो भयप्रदः ।
निबोधत बुधाः सर्वे बान्धवाश्च पुरोहिताः ॥३॥

बिभ्रती चोड्रपुष्पाणां मालां सा रक्तचन्दनम् ।
रक्ताम्बरं तीक्ष्णखड्गं खर्परञ्च भयानकम् ॥४॥

---

१. ब्रह्मवैवर्ते—श्रीकृष्णजन्मखण्डे ६२ अध्याये ।

प्रकृत्याट्टाट्टहासञ्च लोलजिह्वा भयङ्करी।
अतीव वृद्धा कृष्णाङ्गी नगरे मम नृत्यति ॥५॥

मुक्तकेशी छिन्ननासा कृष्णा कृष्णाम्बरापि वा।
विधवा सा महाशूद्री मामालिंगितुमिच्छति ॥६॥

मलिनं चेलखण्डं च बिभ्रती रूक्षमूर्धजान्।
ददाति चूर्णतिलकं कपाले मम वक्षसि ॥७॥

कृष्णवर्णानि पक्वानि छिन्नभग्नानि सत्यक।
पतन्ति कृत्वा शब्दांश्च शश्वत् तालफलानि च ॥८॥

कुचेलो विकृताकारो म्लेच्छो हि रूक्षमूर्धजः।
ददाति मह्यमूषायां छिन्नभग्नकपर्दकान् ॥९॥

महारुष्टा च दिव्या स्त्री पतिपुत्रवती सती।
बभञ्च पूर्णकुम्भञ्च माभिशप्य पुनः पुनः ॥१०॥

अम्लानामोड्रमालाञ्च रक्तचन्दनचर्चिताम्।
ददाति मह्यं विप्रश्च महारुष्टोऽभिशप्य च ॥११॥

क्षणमङ्गारवृष्टिश्च भस्मवृष्टिः क्षणं क्षणम्।
क्षणं-क्षणं रक्तवृष्टिर्भवेच्च नगरे मम ॥१२॥

वानरं वायसं श्वानं भल्लूकं शूकरं खरम्।
पश्यामि विकृताकारं शब्दं कुर्वन्तमुल्वणम् ॥१३॥

पश्यामि शुष्ककाष्ठानां राशिमङ्गारकज्जलम्।
अरुणोदयवेलायां कर्पछिन्ननखानि च ॥१४॥

पीतवस्त्रपरीधाना शुक्लचन्दनचर्चिता।
बिभ्रती मालतीमालां रत्नभूषणभूषिता ॥१५॥

क्रीडाकमलहस्ता सा सिन्दूरबिन्दुशोभिता।
कृत्वाभिशापं मां रुष्टा याति मन्मन्दिरात् सती ॥१६॥

पाशहस्तांश्च पुरुषान् मुक्तकेशान् भयङ्करान्।
अतिरूक्षांश्च पश्यामि विशतो नगरं मम ॥१७॥

नग्ना नारीर्मुक्तकेशीर्नृत्यन्तीश्च गृहे गृहे।
अतीवविकृताकाराः पश्यामि सस्मिताः सदा ॥१८॥

छिन्ननासा च विधवा महाशूद्री दिगम्बरी ।
सा तैलाभ्यञ्जितं माञ्च करोत्यतिभयङ्करी ॥१९॥

निर्वाणाङ्गारयुक्ताश्च भस्मपूर्णा भयङ्कराः ।
अति प्रभातसमये चिताः पश्यामि सस्मितः ॥२०॥

पश्यामि च विवाहञ्च नृत्यगीतमहोत्सवम् ।
रक्तवस्त्रपरीधानान् पुरुषान् मुक्तमूर्धजान् ॥२१॥

रक्तं वमन्तं पुरुषं नृत्यन्तं नग्नमुल्बणम् ।
धावन्तं च शयानं च पश्यामि सस्मितं सदा ॥२२॥

राहुग्रस्तं च गगने मण्डलं चन्द्रसूर्ययोः ।
एककाले च पश्यामि सर्वग्रासं च बान्धवाः ॥२३॥

उल्कापातं धूमकेतुं भूकम्पं राष्ट्रविप्लवम् ।
झञ्झावातं महोत्पातं पश्यामि च पुरोहित ॥२४॥

वायुना घूर्ण्यमानांश्च छिन्नस्कन्धान् महीरुहान् ।
पतितान् पर्वतांश्चैव पश्यामि पृथिवीतले ॥२५॥

पुरुषं छिन्नशिरसं नृत्यन्तं नग्नमुत्सृतम् ।
मुण्डमालाकरं घोरं पश्यामि च गृहे गृहे ॥२६॥

दग्धं सर्वाश्रमं भस्मपूर्णमङ्गारसंकुलम् ।
हाहाकारं च कुर्वन्तं सर्वं पश्यामि सर्वत. ॥२७॥

इत्येवमुक्त्वा राजा स विरराम सभातले ।
श्रुत्वा स्वप्नं बान्धवाश्च नतवक्त्रा निशश्वसुः ॥२८॥

जहार चेतनां सद्यः सत्यकश्च पुरोहितः ।
मत्वा विनाशं कंसस्य यजमानस्य नारद ॥२९॥

रुरोद नारीवर्गश्च पिता माता च शोकतः ।
मेने विनाशकालं च सद्यः स्वयमुपस्थितम् ॥३०॥

**मार्कण्डेय उवाच**[1] —

एवमुक्त्वा गते शुक्रे गविष्ठो वाक्यमब्रवीत् ।
राजञ्छुक्रस्य वचनं क्रियतामविचारयन् ॥१॥

---

१. विष्णुधर्मोत्तरे ३६ अध्याये

स्वप्नः हि सुमहाघोरा दृश्यन्ते भयवर्धनाः।
भवतां हि विनाशाय राज्यन्ते सततं विभो ॥२॥

भवान् स्वप्ने मया दृष्टो रक्तस्रगनुलेपनः।
उष्ट्रेण शिशुमारेण वराहेण तथा व्रजन् ॥३॥

तैलाक्ताश्चापरे दैत्याः खरयानमुपाश्रिताः।
पतन्तः पर्वता दृष्टा राजंस्ते भयकारणम् ॥४॥

केचित्कृष्णाम्बरधराः केचित् कृसरभोजिनः।
केचित् पङ्कगता दृष्टाः केचिद् भस्मशया गताः ॥५॥

केचिद् विवस्त्रया नार्या कृष्यन्ते दक्षिणां दिशम्।
काचिद् रक्ताम्बरा नारी नीयते दक्षिणां दिशम् ॥६॥

केचिन्नृत्यन्ति भूपाला हसन्ति च तथाऽपरे।
केचिन्मुण्डा मया दृष्टाः केचित् काषायवाससः ॥७॥

चण्डालस्कन्धगाः केचित् केचित् किंशुकसंस्थिताः।
गजाश्व पत्तिसैन्येन सर्वेण च भवान् युतः ॥८॥

वापीं सुकलुषां प्राप्य निमग्नो गोमये ह्रदे।
राजश्रीश्च मया दृष्टा शक्रालिंगनतत्परा ॥९॥

इतः परं अध्यायसमाप्तिपर्यन्तं न स्वप्नस्य वर्णनम्।
...... ... .. ... .... .... . .... ... ॥१४॥

इतिश्रीविष्णुधर्मोत्तरे प्रथमखण्डे मार्कण्डेयवज्रसंवादे स्वप्नाध्यायो नामैकोनचत्वारिंशत्तमोऽध्यायः।

वाल्मीकीये रामायणे सुन्दरकाण्डे त्रिजटादृष्टाः शुभाशुभस्वप्नाः। तत्र—
शुभस्वप्ना यथा—[१]

गजदन्तमयीं दिव्यां शिबिकामन्तरिक्षगाम्।
युक्तां हंससहस्रेण स्वयमास्थाय राघवः ॥९॥

शुक्लमाल्याम्बरधरो लक्ष्मणेन सहागतः।
स्वप्ने चाद्य मया दृष्टा सीता शुक्लाम्बरावृता ॥१०॥

---

१. समग्रभवनां कृत्स्नां ग्रसमानः पुरीमिमाम्।
स्वप्ने रामो मया दृष्टो रुधिरं पीतवान् बहु ॥
इत्येष श्लोकोऽधिकः—वीरमित्रोदये राजनीतिप्रकाशे ३३३ पृ०

सागरेण परिक्षिप्तं श्वेतपर्वतमास्थिता ।
रामेण संगता सीता भास्करेण प्रभा यथा ॥११॥

राघवश्च पुनर्दृष्टश्चतुर्दन्तं महागजम् ।
आरूढः शैलसंकाशं चकास सहलक्ष्मणः ॥१२॥

ततस्तौ नरशार्दूलौ दीप्यमानौ स्वतेजसा ।
शुक्लमाल्याम्बरधरौ जानकीं पर्युपस्थितौ ॥१३॥

ततस्तस्य नगस्याग्रे ह्याकाशस्थस्य दन्तिनः ।
भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता ॥१४॥

भर्तुरङ्कात् समुत्पत्य ततः कमललोचना ।
चन्द्रसूर्यौ मया दृष्टौ पाणिभ्यां परिमार्जती ॥१५॥

ततस्ताभ्यां कुमाराभ्यामास्थितः स गजोत्तमः ।
सीतया च विशालाक्ष्या लङ्काया उपरिस्थितः ॥१६॥

पाण्डुरर्षभयुक्तेन रथेनाष्टयुजा[1] स्वयम् ।
इहोपपातः काकुत्स्थः सीतया सह भार्यया ॥१७॥

लक्ष्मणेन सह भ्राता विमाने पुष्पके स्थितः ।
साण्डं त्रिभुवनं भौमं सर्वतः सचराचरम् ॥१८॥

सर्वं ग्रस्तं मया दृष्टं रामेणाक्लिष्टकर्मणा ।
क्षीरोदधिजले मध्ये श्वेतः शैलसमुत्थितः ॥१९॥

तस्य मूर्ध्नि ततः श्वेतश्चतुर्दन्तो महागजः ।
तस्य पृष्ठे स्थतः श्रीमान् रामो राजीवलोचनः
लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया ॥२०॥

ततोऽन्यत्र मया दृष्टो रामो रक्तान्तलोचनः ।
आसीनः प्राङ्मुखः श्रीमानासने परमे शुभे ॥२१॥

अभिषिक्तः स काकुत्स्थः सर्वदेवैर्नमस्कृतः ।
ब्रह्मर्षीणां गणैः सर्वैः सर्वतीर्थजलेन च ॥२२॥

शुक्लमाल्याम्बरधरा शुक्लगन्धानुलेपना ।
सीता तत्र पृथुश्रोणी रराज जनकात्मजा ॥२३॥

---

[1]. अष्टयुजा अष्टवृषभयुक्तेन ।

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
ब्रह्माणमग्रतः कृत्वा रामं तत्र ववन्दिरे ॥२४॥

पुनरेव मया दृष्टो रामो रमयतांवरः ।
विष्णुरेव स्वयं भूत्वा तस्मिन्नास्ते वरासने ॥२५॥

परं ब्रह्म परं सत्यं परं ज्ञानं परं तपः ।
परं बीजं परं क्षेत्रं परं कारणकारणम् ॥२६॥

शङ्खचक्रधरः श्रीमान् पुण्डरीकायतेक्षणः ।
श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः ॥२७॥

एवम्भूतो महातेजा रामः कमललोचनः ।
सर्वलोकेश्वरः श्रीमान् रराज रघुनन्दनः ॥२८॥

ततो नरेन्द्राः पितरो मुनीन्द्रा गन्धर्वविद्याधरपन्नगेन्द्राः ।
कृताभिषेकं परिवार्य रामं प्रतुष्टुवुः प्राञ्जलयः प्रहृष्टाः ॥२९॥

ततस्तु सर्वाप्सरसः प्रहृष्टा नृत्यन्ति गायन्ति समेत्य तत्र ।
वाद्यं प्रकुर्वन्ति नदन्ति शङ्खा वंशाश्च वीणामुरवश्च भेर्यः ॥३०॥

ततोऽन्यत्र मया दृष्टो रामः सत्यपराक्रमः ।
शुक्लमाल्याम्बरधरो लक्ष्मणेन सहागतः ॥३१॥

आरुह्य पुष्पकं दिव्यं विमानं सूर्यसन्निभम् ।
उत्तरां दिशमालोच्य जगाम पुरुषोत्तमः ॥३२॥

एवं स्वप्ने मया दृष्टो रामो विष्णुपराक्रमः ।
लक्ष्मणेन सह भ्रात्रा सीतया सह वीर्यवान् ॥३३॥

एकस्तत्र मया दृष्टः श्वेतच्छत्रो विभीषणः ।
शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ।
शङ्खदुन्दुभिनिर्घोषैर्नृत्यगीतैरलङ्कृतः ॥४४॥

आरुह्य शैलसंकाशं मेघस्तनितनिःस्वनम् ।
चतुर्दन्तं गजं दिव्यमास्ते तत्र विभीषणः ।
चतुर्भिः सचिवैः सार्धं वैहायसमुपस्थितम् ॥४५॥

अशुभस्वप्नाः—

[1]रावणश्च मया दृष्टो मुण्डस्तैलसमुक्षितः।
रक्तवासाः पिबन्मत्तः करवीरकृतस्रजः ॥३५॥

विमानात् पुष्पकादद्य रावणः पतितः क्षितौ।
कृष्यमाणः स्त्रिया दृष्टो मुण्डः कृष्णाम्बरः पुनः ॥३६॥

रथेन खरयुक्तेन रक्तमाल्यानुलेपनः।
पिबंस्तैलं हसन्नृत्यन् भ्रान्तचित्ताकुलेन्द्रियः।
गर्दभेन ययौ शीघ्रं दक्षिणां दिशमाश्रितः ॥३७॥

पुनरेव मया दृष्टो रावणो राक्षसेश्वरः।
पतितोऽवाक्शिरा भूमौ गर्दभाद् भयमोहितः ॥३८॥

सहसोत्थाय सम्भ्रान्तो भयार्तो मदविह्वलः।
उन्मत्तरूपो दिग्वासा दुर्वाक्यं प्रलपन् बहु ॥३९॥

दुर्गन्धं दुस्सहं घोरं तिमिरं नरकोपमम्।
मलपङ्कं प्रविश्याशु मग्नस्तत्र स रावणः।
प्रस्थितो दक्षिणामाशां प्रविष्टोऽकर्दमं ह्रदम् ॥४०॥

कण्ठे बद्ध्वा दशग्रीवं प्रमदा रक्तवासिनी।
काली कर्दमलिप्ताङ्गी दिशं याम्यां प्रकर्षति ॥४१॥

एवं तत्र मया दृष्टः कुम्भकर्णो महाबलः।
रावणस्य सुताः सर्वे मुण्डास्तैलसमुक्षिताः ॥४२॥

वराहेण दशग्रीवः शिशुमारेण चेन्द्रजित्।
उष्ट्रेण कुम्भकर्णश्च प्रयातो दक्षिणां दिशम् ॥४३॥

समाजश्च मया दृष्टो गीतवादित्रनिःस्वनः।
पिबतां रक्तमाल्यानां रक्षसां रक्तवाससाम् ॥४६॥

लङ्का चेयं पुरी रम्या सवाजिरथकुञ्जरा।
सागरे पतिता दृष्टा भग्नगोपुरतोरणा ॥४७॥

लङ्का दृष्टा मया स्वप्ने रावणेनाभिरक्षिता।
दग्धा रामस्य दूतेन वानरेण तरस्विना ॥४८॥

---

१. वीरमित्रोदयस्य राजनीति प्रकाशे ३३६ पृष्ठे एतेषु श्लोकेषु बहुपाठभेदोऽवलोक्यते।

पीत्वा तैलं प्रमत्ताश्च प्रहसन्त्यो महास्वनाः ।
लङ्कायां भस्मरूक्षायां सर्वा राक्षसयोषितः ॥४९॥

कुम्भकर्णादयश्चेमे सर्वे राक्षसपुङ्गवाः ।
रक्तं निवसनं गृह्य प्रविष्टा गोमयं ह्रदम् ॥५०॥

पाद्मे उत्तरखण्डे १५ अध्याये वैधव्यकारकं दुःस्वप्नदर्शनं वृन्दायाः—

तुर्ययामे विभावर्याश्चतुर्दश्यां नृपाङ्गना ।
स्वप्नं ददर्श भयदं वैधव्यभयसूचकम् ॥३५॥

जालन्धरशिरः शुष्कं मर्दितं पाण्डुभस्मना ।
गृध्रेणाकृष्टनयनं छिन्नकर्णाग्रनासिकम् ॥३६॥

मुक्तकेशी करालास्या कृष्णवर्णारुणाम्बरा ।
चखाद काली रक्तास्या हस्ते विधृतखर्परा ॥३७॥

ईदृशं ददृशे स्वप्नं तथात्मानं विडम्बितम् ।
दैत्यक्षयगुणोपेतं सा ददर्श नृपाङ्गना ॥३८॥

पाद्मे उत्तरखण्डे १०३ अध्याये—

अथ वृन्दारका देवी स्वप्नमध्ये ददर्श ह ।
भर्तारं महिषारूढं तैलाभ्यक्तं दिगम्बरम् ॥२॥

कृष्णप्रसूनभूषाढ्यं क्रव्यादगणसेवितम् ।
दक्षिणाशां गतं मुण्डं तमसा व्यावृतं तदा ॥३॥

स्वपुरं सागरे मग्नं सहसैवात्मना सह ।
ततः प्रबुद्धा सा बाला स्वस्वप्नं प्रविचिन्वती ॥४॥

ददर्शोदितमादित्यं सच्छिद्रं निश्चलं मुहुः ।
तदनिष्टमितिज्ञात्वा रुदती भयविह्वला ॥५॥

महाभारते उद्योगपर्वणि १४३ अध्याये कर्णः श्रीकृष्णं प्रति पराभवसूचकमनिष्टं प्राह। तत्रैव कर्णदृष्टं स्वप्ननिरूपणमपि वर्तते । तद् यथा—

स्वप्ना हि बहवो घोरा दृश्यन्ते मधुसूदन ।
निमित्तानि च घोराणि तथोत्पाताः सुदारुणाः ॥६॥

प्रत्यक्षदृष्टानिष्टमुक्त्वा स्वदृष्टस्वप्नानाह—

सहस्रपादं प्रासादं स्वप्नान्ते स्म युधिष्ठिरः ।
अधिरोहन् मया दृष्टः सह भ्रातृभिरच्युत ॥३०॥

श्वेतोष्णीषाश्च दृश्यन्ते सर्वे वै शुक्लवाससः।
आसनानि च शुभ्राणि सर्वेषामुपलक्षये ॥३१॥

तव चापि मया कृष्ण स्वप्नान्ते रुधिराविला।
अन्त्रेण पृथिवी दृष्टा परिक्षिप्ता जनार्दन ॥३२॥

अस्थिसंचयमारूढश्चामितौजा युधिष्ठिरः।
सुवर्णपात्र्यां संहृष्टो भुक्तवान् घृतपायसम् ॥३३॥

युधिष्ठिरो मया दृष्टो ग्रसमानो वसुन्धराम्।
त्वया दत्तामिमां व्यक्तं भोक्ष्यते स वसुन्धराम् ॥३४॥

उच्चं पर्वतमारूढो भीमकर्मा वृकोदरः।
गदापाणिर्नरव्याघ्रो ग्रसन्निव महीमिमाम् ॥३५॥

क्षपयिष्यति नः सर्वान् स सुव्यक्तं महारणे।
विदितं मे हृषीकेश यतो धर्मस्ततो जयः ॥३६॥

पाण्डुरं गजमारूढो गाण्डीवी स धनंजयः।
त्वया सार्धं हृषीकेश श्रिया परमया ज्वलन् ॥३७॥

यूयं सर्वे वधिष्यध्वं तत्र मे नास्ति संशयः।
पार्थिवान् समरे कृष्ण दुर्योधन पुरोगमान् ॥३८॥

नकुलः सहदेवश्च सात्यकिश्च महारथः।
शुक्लकेयूरकण्ठत्राः दृष्टाः शुक्लाम्बरावृताः ॥३९॥

अधिरूढा नरव्याघ्रा नरवाहनमुत्तमम्।
त्रय एते मया दृष्टाः पाण्डुरच्छत्रवाससः ॥४०॥

श्वेतोष्णीषाश्च दृश्यन्ते त्रय एते जनार्दन।
धार्तराष्ट्रेषु सैन्येषु तान् विजानीह केशव ॥४१॥

अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः।
रक्तोष्णीषाश्च दृश्यन्ते सर्वे माधव पार्थिवाः ॥४२॥

उष्ट्रप्रयुक्तमारूढौ भीष्मद्रोणौ महारथौ।
मया सार्धं महाबाहो धार्तराष्ट्रेण वा विभो ॥४३॥

अगस्त्यशास्तां च दिशं प्रयाताः स्म जनार्दन।
अचिरेणैव कालेन प्राप्स्यामो यमसादनम् ॥४४॥

अहं चान्ये च राजानो यच्च तत् क्षत्रमण्डलम् ।
गाण्डीवाग्निं प्रवेक्ष्याम इति मे नास्ति संशयः ॥४॥

## देवताद्वारा प्रदर्शितस्वप्नानां विवरणम्—

अत्र स्वप्ने देवा आत्मना प्रकटीभूय भक्तानां कृते स्वप्नेऽभिलषितं कथयन्ति—

फाल्गुनामस्तपक्षान्ते राजा स्वप्ने पुरूरवाः ।
तस्यैव देवदेवस्य शुश्राव गदितं शुभम् ॥१॥

रात्र्यामस्यां व्यतीतायां मन्त्रिणा त्वं समेष्यसि ।
तेन राजन् समागम्य कृतकृत्यो भविष्यसि ॥२।

स्वप्नमेवं स राजर्षिर्दृष्ट्वा विपुलविक्रम ॥३॥
( वि० ध० १ खं० १५४ अ० )

राज्ञस्तस्य व्रतस्यान्ते स्वप्ने प्राह जनार्दनः ।
भार्गवं च्यवनं गच्छ ततः पुत्रमवाप्यसि ॥१४॥

युवनाश्वस्तथोक्तस्तु स्वप्ने देवेन चक्रिणा ।
प्रातः पद्भ्यां ययौ तस्य च्यवनस्याश्रमं शुभम् ॥१५॥
( वि० ध० १ खं० १७० अ० )

ब्रह्म० वै० कृ० ज० खण्डे १४४ अध्याये उषां प्रति—

स्वप्नं च दर्शयामास सानिरुद्धञ्च पार्वती ॥३६॥

स्वप्नं च दर्शयामास बाणपुत्रीञ्च कामुकीम् ॥४२॥

इतः परं तया हि याद्दशः स्वप्नो दृष्टस्तस्योल्लेखो वर्तते ।

महाभारते वनपर्वणि ३० अध्याये भगवान् भास्करः कर्णस्य स्वप्ने दर्शनं दत्त्वा इन्द्राय कुण्डलकवचप्रदानं न्यषेधीत्, इति कथाऽऽस्ते—

स्वप्नान्ते निशि राजेन्द्र दर्शयामास रश्मिवान् ।
कृपया परयाविष्टः पुत्रस्नेहाच्च भारत ॥८॥

महाभारते हरिवंशविष्णुपर्वणि ११८ अध्याये उषायाः स्वप्ने प्रियसमागमः—

यथोक्तः पुरुषः स्वप्ने रमयामास तां शुभाम् ॥२॥

विचेष्टमाना रुदती देव्या वचनचोदिता ।
सा स्वप्ने रमिता तेन स्त्रीभावं चापि लम्भिता ॥३॥

स्वप्नभोग्येन कल्याणि व्रतलोपो न विद्यते ॥१९॥
न च स्वप्नकृतो दोषो मर्त्यलोकेऽस्ति सुन्दरि ॥२०॥

महाभारते अनु० प० १४५ अध्याये उमामहेश्वरसवादे स्वप्नस्य कारणतायामुमोवाच—

भगवन् सुप्तिमात्रेण प्राणिना स्वप्नदर्शनम् ।
किं तत् स्वभावमन्यद् वा तन्मे शंसितुमर्हति ॥

महेश्वर उवाच--

सुप्तानां तु मनश्चेष्टा स्वप्न इत्यभिधीयते ।
अनागतमतिक्रान्तं पश्यते संचरन् मनः ॥

निमित्तं च भवेत् तस्मात् प्राणिनां स्वप्नदर्शनम् ।
एतत् ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥ ५, ६, ७ ।

उरगो वा जलौका वा भ्रमरो वापि यं दशेत् ।
आरोग्यं निर्दिशेत्तस्य धनलाभं च बुद्धिमान् ॥

यस्य श्वेतेन सर्पेण ग्रस्तश्चेद् दक्षिणः करः ।
सहस्तलाभस्तस्य स्यादपूर्णे दशमे दिने ॥

उरगो वृश्चिको वापि जले ग्रसति यं नरम् ।
विजयं चार्थसिद्धिं च पुत्रस्य विनिर्दिशेत् ॥

स्वप्नानतः प्रवक्ष्यामि शुभाय मरणाय च ।
सुहृदो यांश्च पश्यन्ति व्याधितो वा स्वयं तथा ॥[१]

यद् वाञ्छति दिवा मर्त्यो वीक्षते वा करोति वा ।
तत्स्वप्ने तदभ्यासाद् ब्रूते वाथ करोति वा ॥

शुभं वा यदि वा पापं यन्नृणां हृदि संस्थितम् ।
सुगूढमपि तज्ज्ञेयं स्वप्नवाक्यात्तथा मदात् ॥[२]

---

१. राजारामशास्त्रिकृते स्वप्नदर्शने समुद्धृतमिदम् २०३ पृष्ठादिषु ।
२. पञ्चतन्त्रे मित्रभेदे १४४, १४५ श्लोकौ ।

## स्वप्नविषये पाश्चात्यविचारसरणिः

[१]स्वप्नविषये मतानि कोटिद्वयमध्ये दोलायमानानि सन्ति। प्रथमायां कोटौ स्वप्नानां स्वरूपं मनुष्यगुणानामुदात्तीकरणरूपेण निर्धार्यते, यत्र बहुधा भावनानामुत्कृष्टतमं रूपं स्फुरति। द्वितीयस्यां कोटौ स्वप्न अध्यात्मिकशक्तीनां निश्चितो ह्रासो मन्यते यो ह्रासः प्रायो मानवतामधोऽधः प्रवर्तते।

'असुर वेनीपाल' महोदयस्योत्तराधिकारं गृहीत्वा यदा 'चाल्डीय' जनाः असीरिया' जनान् पराजित्य 'नववैबिलोनियनचाल्डीयन' राज्यं स्थापितवन्तः, तदनन्तरं ते विशेषरूपेण स्वप्नव्याख्यानकलायां निपुणा अभूवन्।

प्राचीनेतिहासस्य तस्मिन्नेव समये 'जैकोब' महोदस्य पुत्रः 'जोजेफ' नामाऽभूत्। यो न केवलं स्वेषां स्वप्नानां व्याख्यानं कर्त्तुं समर्थोऽभूत्, अपितु स्वसुहृदां कारावासिनामपि स्वप्नान् व्याचख्यौ, तदनन्तरं 'फराहो' नामकानां मिश्रदेशीयजातिविशेषजनानाञ्च स्वप्नस्य व्याख्यां कृतवान्। मानवेतिहासस्य तस्मिन् प्राचीनसमये स्वप्नस्य व्याख्या 'एका दैवीकला' कथ्यते स्म। यतो हि तदानीं धार्मिकदर्शने स्वप्ना ईश्वरस्य देवानां देवीनाञ्च साक्षादभिव्यक्तेर्द्वाराणीत्यमानिषत।

देवताऽऽवेशरूपत्वात् स्वप्ना न हि केवलं स्वप्नद्रष्टुर्भाग्यनिर्णायका मताः, अपितु प्रायः समग्रसेनायाः सम्पूर्णस्य च लोकस्य भाग्यविषये कदाचिन्निर्णायकाः, इत्युरीकृत मवर्तत। इत्थं देशभक्तः स 'जैकोब' महोदयः स्वर्गसोपानमयस्य स्वकीयस्वप्नस्य विषये महद् ध्यानमकृत यत्र च स्वप्ने ईश्वरीयः शब्दस्तस्मै स्वां मातृभूमिं प्रत्यावर्तितुमाज्ञां प्रादात्। सम्प्रत्युपलब्धाभ्यः प्राचीनमृत्तिकामुद्राभ्य इदं ज्ञातुं शक्यते यत् 'असीरिया' राज्यस्य शासकः 'असुर वनीपाल' नामा 'इलेमाइट' जनानां राज्ञो 'ते-उमान' नामकस्य विरोधे युद्धाभियानमेतदर्थमकरोद्, यत् तदीय एको दार्शनिकः स्वप्नमदर्शत्। यस्मिन् स्वप्ने 'इस्तर' नाम्नी देवी स्वयमेवास्याभियानस्य प्रेरणामकृत तथा तस्य च कृते सौभाग्यस्य सुरक्षाया यशसश्च वरमप्यदात्। अभिलेखेर्ज्ञायते यद् देव्या प्रदत्तं स्वप्ने सर्वं वचनं साधु पूरितम्, तथा 'असुर वनीपाल' नामा राजा 'इलेवस' तटे 'इलेमाइट' सेना विजितवान् 'ते-उमान' राजानं बन्दीकृत्य तस्य शिरश्चिच्छेद।

प्राचीना जना नहि केवलं स्वप्नानेव देवकार्याणि अमन्यन्त, अपितु तद्व्याख्यामपि देवकार्यमवागच्छन्। एतत् 'जैकोब' महोदयस्य पुत्रः 'जोजेफ' नामा सर्वप्रथमं साग्रहं स्वसुहृदः कारावासिनो विशेषरूपेण अवागमयत् यत् 'स्वप्नानां व्याख्या साक्षाद् ईश्वरस्य कार्यम्' इति।

---

१. 'मेडाईबास' कृतस्य 'द ऐनालिसिस आफ ड्रिम्स' इत्यस्य 'ए० जे० पामरन्स' कृताद् आङ्ग्लानुवादाद् गृहीतोऽयं विषयः।

सुकरातोऽपि स्वप्नाः दैव्याः तदादेशा अवश्यं पालनीयाः' इत्यमंस्त । एतस्माद् हेतोः स स्वजीवनस्यान्तिमे समये कारायाम् ईश्वरप्रेरणया कवितारचनाप्रारम्भं चकार । इत्थं प्राचीना यूनाननिवासिनोऽधुनापि 'स्वप्नाः दिव्यादेशाः' इत्यमन्यन्त । अत एवानेके धार्मिकसम्प्रदायाः परिवर्तिताः नवीनाश्च जन्म लेभिरे ।

यद्यपि स्वप्नान् प्रतीयं प्राचीना मान्यता कदापि यवनसम्प्रदायेन न न्यूनीकृता तथापि पश्चिमदेशे भावनेयं कतिचिच्छताब्दचनन्तरं ख्याताऽभूत् । 'सिरीनस्य' 'पादरी' धर्माधिकारी साधुः 'सिनेसियस' नामा एव चतुर्थ्यां शताब्द्यां प्रादुरभूद् य एवमलिखत्--'न ममाश्चर्यमस्ति यत् कतिपये जनाः स्वान्वेषणस्याकरं स्वप्नमाध्यमेन समुपलब्धवन्तः, अन्ये च पूर्वमकवयोपि शयित्वा स्वप्ने संगीतदेव्या सह वार्तां विधाय कतिचित्कालानन्तरं यदा निद्रां जहुस्तदानीं ते काव्यकरणप्रतिभावन्तो बभूवुः । नात्राहं कथनस्यावश्यकतां मन्ये यत् स्वप्ना कियतो जनान् भाविन्या दुर्घटनाया सूचनया सम्यगबोधयन् कतिपये च जना रोगान् दूरीकर्तुमौषधविषयकान् स्वप्नान् ददृशुः । सर्वत आश्चर्यमय सर्वाधिकरहस्यमयञ्चैतत् तथ्यं यन्निद्रा जीवात्मने असीमितसहजज्ञानग्रहणाय निरावरणेन सूक्ष्मदृष्टिं ददाति । तस्यामवस्थायां पुरुषः भौतिकजगतः पारं गन्तुं शक्नोति तथा ज्ञानमयेन कोशेन तादात्म्यं स्थापयति । यस्मादेव पृथग्भूय स इयद् दूरम् इत्थं भ्रान्तो जातो यत् स इदमपि न जानाति यदहं कुत आगतोऽस्मीति ।

अनेनेदं द्रष्टुं शक्नुमो यदा वयं जागृमस्तदा सर्वदैवास्मान् नर एव आदिशति, यदा च स्वपिमस्तदा केवल ईश्वर एव एकाकी नः प्रकाशयति ।

त्रयोदशशताब्द्यां 'स्पेन' देशस्य चिकित्सको रासायनिको दार्शनिकश्च 'आरनल्ड नामा 'सिसली' देशस्य 'आरगन' देशस्य च राजसभयो राजकीयस्वप्नव्याख्याकाररूपेण नियुक्त आसीत् । स्वकीये स्वप्नविषयके पुस्तके[1] सोऽलिखद् यद् उदाहरणरूपेण स्वप्नेषु दृश्यमाना वृष्टिर्ज्ञापयितुं शक्नोति यदीश्वरः स्वप्नद्रष्टुः कृते ज्ञानराशिं प्रकाशयतीति । चतुर्दशशताब्द्या एको रहस्यवादी लिलेख यदेकः संन्यासी अवदत् यद् देवदूताः प्रायो मानवानां स्वप्ने दृश्यन्ते, न जागरणे यतो हि जाग्रदपेक्षया स्वापे मनुष्या बाह्यवस्तुवैविध्येनाल्पतरं विचलन्ति ।

पुनश्च प्राचीनकालमध्यकालमध्ये सर्वप्रथमं स्वप्नाः स्वकीयं देवादेशमयरूपं जहुः । इदानीं स्वप्नस्य व्याख्या केवलं सामान्यकैः स्थूलैर्नियमैरेभूयत । 'प्लूटार्क' स्यानुसारम् ईसापूर्वपञ्चमशताब्द्यामेव स्वप्नव्याख्यापुस्तकानि स्वप्नतालिकाश्च विद्यमाना आसन् यद्बलात् कोऽपि अनायासेन भविष्यवार्तां कर्तुमशक्नोत् भाविघटनाः सूचयितुं च समर्थ आसीत् ।

1. Exposetiones vision uni quse sunt in somnia ad utilitatum medicorum non medicem.

'अरस्तूः' ह्यियोक्रातश्च स्वप्नस्य देवादेशस्वरूपविषयकव्याख्यामामशङ्कताम्। 'अरस्तूः' स्वप्नस्योद्गमो मनुष्यप्रकृतावेव नतु तद्बहिः कुत्रचिद् इत्यमन्यत। तेनोक्तं यत् स्वप्ना एतस्या एव प्रकृतेः स्वाभाविकाभिव्यक्तय एव। स्वप्ना इमे प्राणिनां स्वप्नद्रष्टॄणां स्वानुभवैः स्वप्रवृत्तिभिः स्वकीयाशाभिः स्वजैविकप्रक्रियाभिश्चोद्भवन्ति, विशेषतः प्राणिनां रक्तप्रवाहै रक्तसंबद्धोष्मभिश्च।

कतिपयकालानन्तरम् 'अरस्तूः' स्वरचनायां भविष्यवाण्या सह संबद्धानां स्वप्नानां मनोवैज्ञानिकीं शारीरवैज्ञानिकीं च व्याख्यां कर्तुं प्रायतत किन्तु, तदाप्येतदेव तथ्यं निष्पन्नं यत्तेनापि 'भविष्यवाणीसंबद्धाः स्वप्नाः संभवन्ति' इत्यङ्गीकृतम्। वार्तेयं स्पष्टं साधयति यद् अरस्तू' महोदयोऽपि स्वमन्तव्यं प्राचीनयूनाननिवासिना-माध्यात्मिकपुरातनभित्तिष्वेव स्थापितवानिति।

केवलं 'नीरो' राज्ञः सचिवस्य 'पैट्रोनियस' नाम्नः समये प्राचीनयूनान-जगतोऽयमाध्यात्मिक आधारो विशीर्णो भग्नश्च जातः। तदनन्तरमेतत् स्वप्नविचार-जगत् विशृङ्खलितम्। 'पैट्रोनियस' महोदयः सगर्वं साग्रहं घोषितवान् 'नायं देवो नापि देवी न चैष देवादेशः यः स्वर्गात् स्वप्नान् पृथिव्यां प्रहिणोति. अपि त्वस्मास्वेव प्रत्येकव्यक्तिः स्वयं स्वप्नान् निर्मिमीते' इति। एषु वाक्येषु वयं पाश्चात्त्यजगतः सर्वप्रथमां प्रबोधस्य तर्कवादस्य चाभिव्यक्तिं द्रष्टुं शक्नुमः।

सत्यमेतद् यद् द्वितीयशताब्द्यां 'टैल्डिस' देशस्य 'आर्टिमिडोरस' महोदयो-ऽमन्यत यत्तम् 'अपोलो' नामा देवः स्वयं स्वप्नानध्येतुमाप्रेरयत्। अयम् 'अपोलो' स एव आसीद् यो 'लिडियन' नामकं पुरुषं स्वप्नविषये ज्ञाताः सर्वाः सामग्री-रेकत्रीकर्तुं संचेतुमाज्ञापयामास। लिडियनेन सर्वतः समन्वेषितविषयाः पञ्चसु स्वप्न-पुस्तकेषु ग्रथितास्तथापि 'आर्टीमिडोरस' महोदयोऽङ्गीकृतवान् यत् कतिपये दिव्यमूलाः स्वप्नास्तेभ्यो भिन्ना भवन्ति ये स्वप्ना दैनिककार्यकलापविषये भवन्ति तथा ये चेच्छामनुभवं शारीरिकक्रमं प्रकाशयन्ति।

'नीरो' राज्ञः समयादनन्तरं सप्तदशशताब्द्या अष्टादश शताब्द्याश्च प्रबोध-समयेऽपि ततोऽधिकं स्वप्नविषये किमपि नोल्लिखितमासीत्। वर्तमानानां स्पष्टवादिना-मग्रगण्यः 'टामस हाब्स' महोदयः पुनः 'स्वप्नाः शारीरिकोत्तेजना' इत्येवामंस्त न ततोऽतिरिक्तं किञ्चिदित्यमन्यत।

वाल्टेयर' महाशयः 'स्वप्नाः पूर्वमेव भाविनीं घटनां सूचयन्ति भविष्यवाणीं वा कुर्वन्ति' इति विश्वासम् अन्धविश्वासमेव केवलं मान्द्यमयं च स्वीकुर्वन् घृणादृष्ट्या-पश्यत्। स तु 'स्वप्नाः केवलं शारीरिकोत्तेजनानां वासनातिरेकाणाञ्चाभिव्यक्तयो भवन्ति' इत्येवामन्यत

'कान्ट' महोदयोऽपि अस्मान् प्रबोधितवान् यत् स्वप्नानां मूल्यन्यूनता न करणीया। एवं क्रियमाणे तु वयमनवधानतया प्रकृतेरेकं महद् रहस्यमुपेक्षामहे। स त्वेवमाशङ्कते यत् स्वापविचारधारा जाग्रज्जीवनस्य सर्वाधिकसत्यविचारधारातोऽधिकाः सत्या व्यापकरूपाश्च भवन्ति, यतो हि निद्रायां वयं शरीर (बाह्येन्द्रिय) गतानुभूतौ भागं न गृह्णीमः। अतस्तस्यामवस्थायामनुभूतानां स्पष्टतया ज्ञातता नास्ति। तस्मादेव च निद्रायां येऽनुभवा भवन्ति प्रबोधे (जागरणे) यदा प्राणी स्मरति, तदानीं तद्भिन्नतैवांशतो लभ्यते। सुप्तोत्थितो मानवो यत् स्मरति तत् पूर्णसुषुप्तौ वर्तमानं वस्तु नास्ति, अपितु स्मर्यमाणं वस्तु तत्कालसंबद्धमस्ति यदा मानवः स्वजागरणसमये स्वप्नविषयाणां वास्तविकजगता सह संबन्धं स्थापयति तदा स्वप्नसामग्री निरर्थिका प्रतीयते। एतदेव कारणं यत् स तदनन्तरं (प्रबोधे) कियदेव स्मर्तुं शक्नोति। स्वकीय-मानववैज्ञानिकचिन्तनेषु 'कान्ट' महोदयः स्वप्नस्य संबन्धम् अन्धविश्वासेन इन्द्रजालेन च पूर्णतया स्वीकुर्वन् तत्पश्चात् अंशतोऽजीर्णतया साकमप्यमन्यत।

एतदनन्तरं यदा रोमान्टिककवयः प्रेमकथाविचारकाश्चैकदा पुनः स्वप्नान् मैत्री-पूर्णप्रणाल्या समाहृतवन्तस्तदा चैकयुगीना प्रवहन्ती दिव्या स्वप्नकल्पया व्याख्या एवोनविंशशताब्द्या उत्तरार्धे यान्त्रिकभौतिकवादस्य संमुखात् पलायितुं विवशाऽभूत्। विमुखीभूय चेयं व्याख्या सर्वाधिकेषु घनीभूतेषु अन्धविश्वासेषु 'चार्लेटन्स' संप्रदाय-सहजविश्वासेषु च शरणं जग्राह। यदि प्रयोगात्मकज्ञानं वैज्ञानिकज्ञानं च सर्वाधिक-विचारान् जाग्रज्जीवनस्य सर्वातिशयसमीचीनानुभवान् वा द्रष्टुम् असमर्थे आस्ताम् तदा ते द्वे ज्ञाने तद् वस्तु रहस्यं वा व्याख्यातुं कथं समर्थे भवेतां यत् तद् वस्तु रहस्यं वा मस्तिष्ककोषे पिहितमस्ति। आणविकयन्त्रज्ञातॄणां समक्षे केवलाम् इमाम् एव एकाम् अद्भुतां वार्तां कथं सत्यापयितुं शक्येत यत्ते दयनीयाः (दुर्बलाः) पदार्थाः, ये रात्रौ प्रायोऽस्माकीनसकलतार्किकविचारशक्तिमुपहसन्ति। यदा कस्मिन्नपि समये आधुनिकवैज्ञानिकाः स्वप्नानां विषये विचारम् अकुर्वन् तदा तेऽस्मिन् विषये 'हर्बर्ट' महोदयस्य विचारमेवामन्यन्त। 'हर्बर्ट' महोदयः 'स्वप्ना अव्यस्थिता अंशतो जागरणाय क्रियाः, अथवा अपरप्रकारेण जाग्रदवस्था एव, इत्यङ्गीकृतवान्।

इतः परं 'मौरी' महोदयो व्यश्वसद् यद् यदा वयं जाग्रदवस्थासंबद्धानाम् अथवा तार्किकप्रणालीनां तुलना स्वाप्निकासंबद्धतार्किकप्रणाल्या सह कुर्मस्तदा एवं ज्ञानं भवति यत् स्वप्ने जीवनस्य कतिपये अंशा एव सक्रियाः शेषाश्च निष्क्रियाः इति।

एकोनविंशतिशताब्द्याश्चरमभागस्यैते विचाराः सम्यक्तया ख्यातिप्राप्तैः सहस्रद्वयवर्षपूर्वंजातैरुन्मुक्तैर्विचारैः सह साधु सादृश्यं लभमानाः संबध्नन्ति। अस्य सर्वश्रेष्ठमुदाहरणं 'सिसरो' महोदयेनैकस्मिन् व्याख्याने दत्तमेवं 'स्वप्ने यत् किमपि

अनर्थकं भयप्रदं विचित्रं दृश्यते ततोऽधिकं कुत्रापि न लभ्यते। स्वकीये पुस्तके 'दि डिविनेसने' नामके तेन स्वप्नस्य दैवी प्रकृतिर्नाङ्गीकृता, अन्ते च तेनैतदपि प्रतिपादितं यदधुना निश्चितं यतः स्वप्नानां, निर्माता परमेश्वरो नास्ति अथ च यतः पर्यवेक्षणेन स्वप्नेभ्यः किमपि यथार्थज्ञानं नोपलभ्यते। ततः सिद्धमेतद् यद् वयं स्वप्नेषु कमपि विश्वासं कर्तुं न शक्नुमः। एकोनविंशशताब्द्याः समाप्तेः प्राक् प्राकृतिकवैज्ञानिकाः स्वप्नाः शारीरिकभावनानां प्रतिभासेभ्यः कानिचिदप्यधिकानि वस्तूनि न सन्तीत्यमन्यन्त यथा 'सिसरो' समये स्वीकृतम्। एतेन तेषां तात्पर्यमिदम्—स्वप्नदृश्यानि स्वप्नसमये घटमानानाम् इन्द्रियानुभवानां मानसिकप्रतिबिम्बा एवावगन्तव्याः।

विंशतिवर्षानन्तरं 'मौरी' महोदयोऽमुं सिद्धान्तं दृढीकर्तुं प्रयासं व्यधात्, यत् स्वप्ना बाह्येन्द्रियानुभवोत्पन्नभ्रमेण उत्पद्यन्ते' इति। सोऽमृगयद् यत् स्वप्ने यस्य मनुष्यस्य ओष्ठे नासिकायां च पतत्रिपक्षं संस्पृशेत् तदा स स्वप्ने पश्यति यत्तस्य मुखे सान्द्रमसीलेपनं कृत्वा कर्कशतया तदुत्पाट्यते येन तस्य त्वक् खण्डश उद्धृता भवन्ती महत्कष्टं ददाति (दुःखाकरोति)। अन्यदा स्वपतस्तस्य कर्णसमीपे केनचित् कर्तनीं निधाय तस्या धारः सन्दंशिकया निशितोऽक्रियत तदानीं स्वप्ने मौरी' महोदयः सर्वप्रथमम् क्षुद्रघण्टिकानिनादं तदनन्तरं घटीयन्त्रस्य टन्टनध्वनिम् अशृणोत तथा तत्समये स स्वयमेव १८४८ ख्रिष्टीयजूनमासस्य व्यतीतान् दिवसानन्वभवत्।

सत्यम्, तदानीं नहि केवलं बाह्येन्द्रियसम्बन्धिनी उत्तेजना एव अपितु आन्तरिको शारीरिकी उत्तेजनापि स्वप्ननिर्माणस्य स्रोतसी अमानिषाताम्।

'वुण्टस्यानुसारम्'—नेत्रान्तःस्थचित्रपटाङ्कितानाम् आकृतीनाम् उत्तरकालिकानि स्मृतिवि[illegible]णि एव स्वप्ने असंख्यखगानां चित्रशलभानां च दर्शने कारणानि। अनन्तरं 'स्ट्रम्पिलः' फुफ्फुसस्य विकाशसंकोचाभ्याम् उत्पन्नया मानसिक्या उत्तेजनया उद्भूतैर्मनश्चित्रैर् उड्डयनस्य स्वप्नो जन्यते। अन्ते 'क्राब्स' महोदयो व्यश्वसद् यद् वस्तुतः स्वप्नाः शारीरिक्याः संवेदनाया प्रतीकरूपाणि सन्ति अर्थात् शारीरिक्यः संवेदनाः स्वप्ने सूक्ष्मरूपेण अभिव्यक्तीभवन्ति।

स्वप्नानां विषये विज्ञैः पाश्चात्त्यैर्यद् विचारितम्।
सदर्शितं तदेवात्र संक्षेपेण मयाऽधुना॥

# स्वप्नविषये यवनविचारकाणां मतम्

यवनधर्मिणां स्वप्नविषये संक्षेपेण मतमुपन्यस्यते—स्वप्ना नहि केवलं निद्राकाले एव प्रादुर्भवन्ति अपितु जाग्रत्कालेपि भवितुं शक्नुवन्ति। तथाहि 'हजरत मुहम्मद' महोदयस्य जाग्रद्दशायामेवैवं प्रतीतिरभूद् यत् स सशरीरो गगने समुड्डयन् निरन्तरमुपर्युपरि गच्छन् स्वर्गं नरकञ्चापश्यद्, या घटना 'मेराज' नाम्ना ख्याता।

निद्रैका दशाऽस्ति, या मनुष्यपशुपक्षिणां मस्तिष्काणां मस्तिष्कसम्बन्धिस्नायूनां च शैथिल्ये जायते। अत एव शयालवः प्राणिनः संज्ञाशून्याः ( विमूर्छिताः ) इव भवन्ति। कदाचित्तु निद्रायामपि ससंज्ञता वर्तते या 'गैवत' नाम्ना गीयते। विद्वद्भिः तस्यां दशायां यद् दृश्यते तद् 'मुशाहिदा' इत्यभिधीयते। कदाचित्त्वेवमपि भवति यत् सुषुप्तिदशा समुत्पद्यते, किन्तु मानवास्तदानीं न शेरते। तस्मिन् समये यत् किञ्चिद् दृश्यते तद् 'मुयायना' इति कथ्यते।

निद्रया प्राणिनां शरीरेन्द्रियधर्मा निष्क्रिया भवन्ति, न ते नासाभ्यां जिघ्रन्ति न कर्णाभ्यां शृण्वन्ति नाक्षिभ्यां पश्यन्ति न हस्ताभ्यां स्पृशन्ति। तदानीं तेषां मस्तिष्का अपि कर्मशीला न सन्ति, न ते किमपि स्मरन्ति नापि बुध्यन्ते न च कस्मिंश्चिद् विषये स्वमन्तव्यं प्रकटयितुं समर्था भवन्ति, अपि तु सर्वत्रैव विवशाः। एको विद्वत्समुदायो यो 'मुतक्लिमीन' इति संज्ञयाऽभिधीयते तस्यैवं विचारधारा यत्—स्वप्नः खल्वेकस्याः स्मृतेर्नाम तथा शयनावस्थायां यत् किञ्चिद् दृश्यते तज्जागरणावस्थायाम् अपि दृश्येत इति न कोपि नियमो, नाप्यावश्यकम्। तस्येदमपि कथनं यच्छयनावस्थायां काचनापरेच्छा भवति यद्बलाच्छयालुर्जनस्तस्मिन् समये ( निद्रासमये ) स्वप्नं पश्यति इति विषयो बुद्धिं नाटीकते, यतो हि श्रवणदर्शनास्वादगन्धग्रहणबोधनशक्तयः शयनावस्थायां तिरोभूता भवन्ति। तासां शक्तीनां लेशोऽपि तदानीं नावशिष्यते तथापि प्रतीयते यत् चिन्तनावगमनास्वादश्रवणदर्शनगन्धग्रहणेभ्यः नेत्रनासिकारसनाकर्णमुखमस्तिष्कातिरिक्तं किमपि गुप्त (आरगन) वस्तु वर्तते यच्छयनावस्थायां स्वकार्यं करोति। यद्यपि दार्शनिका इदं स्वीकर्तुं न तत्पराः सन्ति, किन्तु सूफी' मतस्य एकः समुदायः स्वीकरोतीदम्।

कस्यचिन्मतम्-स्वप्न एका स्मृतिर्या सर्वैरङ्गीक्रियते तथा चैषास्मृतिस्तदोत्पद्यते यदा शयनदशायां मस्तिष्कस्य स्नायवः शिथिला भवन्ति। यथाऽग्नेर्ज्वालामभितः

कदाचिच्चक्राकारमिव किमपि दृश्यते किन्तु स्पर्शकरणे तत्र किमपि नोपलभ्यते तथैव स्मृतिरपि तच्चक्रतुल्या तथा च स्वप्नोऽपि स्मृतिरेवास्ति। जागरणे यः स्वप्नो दृश्यते स त्वेदृश एव यथा कश्चन मनुष्यः कस्यचिद् वस्तुन आशां करोति तस्यां दशायां प्रसन्नताया विषादस्य वा यादृशी प्रतिच्छाया प्रादुर्भवति सापि स्वप्नसदृश्येवास्ति। कदाचिदेवमपि भवति यत् कश्चन मनुष्य आम्लवस्तु खादन्तं कमपि मनुष्यं पश्यति, तदा तस्य मुखाल्लालाः स्यन्दन्ते दन्ताश्चाम्ला भवन्ति। एवं खाद्यपदार्थान् दृष्ट्वा तानवाप्तुमभिलाषो जायते। किमपि पुस्तकं पठित्वा हृदये प्रसन्नताया विषादस्य आशाया दुराशाया दशापि उत्पद्यते।

'मुतक्लीमीन' समाजस्य कथनं यत् स्वप्न एका स्मृतिरस्ति या मिथ्यापि भवति कदाचित् सत्यापि भवति किन्तु नहि किमप्यावश्यकं यत् स्वप्नाः सर्वदा सत्या एव भवेयुः। स्वप्नाश्चन्द्रकुण्डलनानिभा इत्यपि वक्तुं शक्यते परन्तु चन्द्रपरिवेष-परिधेः कापि सत्यता नास्ति धूलिकणानां वायोश्चोपरि चन्द्रांशूनां निपतनात् चन्द्र-कुण्डलना जायते चन्द्रकिरणप्रभावात् धूलिकणाः स्वच्छाः प्रकाशवन्तो दृश्यन्ते।

स्वप्ने यत् किञ्चिद् दृश्यते तस्य सत्यत्वं नावश्यकम्, यदि कस्यचित् नरस्य हृदयचक्षुरुन्मिलद् वर्तते तथा च स सर्वदा स्वप्नान् न पश्यति तदा तु संयोगवशा-ज्जायमानास्तस्य स्वप्नाः सत्या भवितुं शक्नुयुः। स्वप्ने यत् किञ्चिद् दृश्यते तत्सर्वं छायासदृशमेव यस्य सत्यता नावश्यकी। स्वप्नद्रष्टॄणां स्थितिचिन्तनकार्योपरि स्वप्नस्य सत्यत्वमिथ्यात्वयो र्भारोऽधिकृतिः स्थितिश्च वर्तते।

बहूनां विदुषां विचारोऽस्ति यत् स्वप्नस्य कविताया आशायाश्च समाना स्थितिः। एतत्त्रये विश्वासं कर्तुं न किमप्यौचित्यमवलोक्यते। यथा कश्चन स्वकाव्ये कस्यचित् पदार्थस्य यादृशवर्णनं करोति न तादृशवर्णनमाचरति द्वितीयः, अपितु विरोधं प्रकटयते। यथा सर्वेषां नराणामाशाः पृथक्-पृथक् सन्ति तथैव जनानां स्वप्ना अपि पृथक् पृथगेव भवन्ति। स्वप्नदर्शक- कवि- आशान्वितानाम् जनानां स्थितय एव स्वप्न-काव्य-आशानां सत्यत्वासत्यत्वयोराधाराः सन्ति। यथा कश्चन एवमाशास्ते यन्मद्गेहे एतादृशो बालक उत्पद्येत तथैव तदाशानुसारं पुत्रजनिर्भवति। एवं कदाचित् कश्चित् स्वबुद्ध्या विचारयति 'कश्चिन्मह्यं किमपि प्रदास्यति' इति, तदनन्तरं यथार्थतः तद् वस्तु तेनावाप्यते अथवा स्वप्ने स्वयात्रां पश्यति, तदनन्तरं सत्यमेव यात्राऽवसरस्तदन्तिके समागच्छति। एतादृशघटनाघटने बहूनि कारणानि सन्ति तत्र महत्त्वपूर्णं कारणं यत् केचन जनाः प्रार्थनया, भक्त्या, आराधनया भगवन्नैकट्यं भजन्ते, तस्मात्तदीयाः स्वप्नाः सत्या भवन्ति। एवं केचन सज्जनाः सत्पुरुषा विश्व-सन्ति यदयं स्वबुद्ध्या यत् किमपि कथयिष्यामस्तत् सत्यं भविष्यति। कदाचित् कवेः कवितापि सत्या भवति।

केचन कथयन्ति—स्वप्नः, विवेकपूर्णकथनम्, आशाश्च न समाना भवन्ति। आशासु विश्वासो न करणीय इति। केचन वदन्ति स्वप्नः पक्षिपादोपरि भवति अर्थात् स्वप्नस्य न किमपि नैयत्यम्। 'हजरत मुहम्मद' महोदयस्य कथनमप्येतद्-नुकूलम्।

कदाचिदेतादृश्यो घटना जायन्ते, यासां प्रभावो हृदि मस्तिष्के च भवति। स्वप्ने तादृशघटनानां प्रभावो वर्तते। सुषुप्तिसमये मनुष्यस्य न तादृशी शक्तिरस्ति यत् स किमपि वस्तु नेत्राभ्यां पश्येत् कर्णाभ्यां शृणुयात् नासाभ्यां जिघ्रेत् करा़भ्यां संस्पृशेत्, तथापि अन्तश्चक्षुषा पश्यति बुध्यते प्रत्यभिजानाति। एतत् सर्वं कथं भवति, इति विचारणीयम्। वस्तुतस्तु इदमेव तथ्यम्—सुषुप्तिसमये मनुष्यस्य चैतन्यं निष्क्रियं संतिष्ठते किन्तु हृदयनेत्रं क्रियाशीलं विद्यते येन स सर्वं पश्यति बुध्यते च। अतः केषाञ्चिद् विदुषां मतम्—निद्रा बुद्धिश्चैकत्र संमिलिते न भवतः अपि तु सुषुप्तिदशायां रूपद्वयं वर्तते तत्रैकं 'रुइय्या' इतिपदबोध्यम् द्वितीयं 'नोह' इति पदाभिधेयम्। तत्र स्वप्नदर्शनदशाया वाचकः प्रथमः शब्दः, गाढनिद्राया मूर्छायाश्च वाचको द्वितीयः शब्दः। 'नोह' दशायां द्वितीयस्यां कामपि वार्तां ज्ञातुं प्रश्न एव नोत्तिष्ठति किन्तु प्रथमायां 'रुइय्या' दशायां शयालवः शेरते तत्र पश्यन्ति शृण्वन्ति बुध्यन्ते च तदानीं स्वस्वप्रकृतिहृदयव्यवहारानुसारं पश्यन्ति शृण्वन्ति बुध्यन्ते।

केचनैवं मन्यन्ते—'रुइय्या' दशायां यत् किञ्चिद् दृश्यते तद् बाहुल्येन सत्यं भवति यथा दर्पणे कस्यचिच्छाया दृश्यते या वस्तुतस्तत्र विद्यमानापि दर्पणस्वच्छता-वशात् तत्र सच्छाया तमागच्छति तथैव 'रुइय्या' दशायां स्वप्नद्रष्टारः स्वविचारानुसारं पश्यन्ति। एतदेव मध्यकालिकौ महाविद्वांसौ 'इमाम गदाली, इमाम राजी' नामानौ स्वीकृतवन्तौ। 'अरस्तू' महोदयः कथयति यत्—अस्मात् संसाराद् भिन्नोऽपरः संसारो यस्य सम्बन्ध आकाशेऽस्ति तत्र पार्थिवपदार्थानामनुपलब्धिः। तत्र ये मनुष्याः पशवः पक्षिणः सन्ति ते सर्वे आकाशीया एव। तान् सर्वान् 'आत्मनां मनुष्याः पशवः पक्षिणः' इति वदितुं शक्नुवन्ति। तेषां न केश्चित् सह विरोधो मित्रता वा अस्ति तथा च न ते सांसारिकमानवादितुल्या एव। ते पवित्राः सन्ति त एव मनुष्याणां स्वप्ने आगच्छन्ति, इति[१]।

संक्षेपतो मयाऽत्र स्वप्नविषये यवनानां सिद्धान्त उपन्यस्तः। स्वप्नानां शुभाशुभविचारस्तथा कः स्वप्नः कीदृश इत्याद्यखिलविचारः अरबीफारसीभाषायां बहुषु पुस्तकेषु वर्तते तत्सर्वं तत्रैव द्रष्टव्यम्। परिचयहेतवे कानिचित् पुस्तकानि

---

१– एतत्सर्वं यवनमतम् अरबीभाषायाम् (तहकीकुर रुइय्या) इति पुस्तकादस्माभिः संगृहीतम्। अस्य पुस्तकस्य कर्ता— मौलाना शाह अब्दुल अज्जीज मुहद्दीस देहलवी इति। पकाशनवर्षः १९०४ ई० अहमदी प्रेस देहली।

नाम्ना निर्दिश्यन्ते-- १-किताबुल उसूल २-किताबुततकसीम ३-किताबजामे ४-किताबेदस्तूर ५-किताबुलइरसाद ६-किताबुततावीर ७-कन्जुररूइया ८-बयानुत तावीर प्रभृतीनि विंशतिसंख्याकानि पुस्तकानि ।

गोरक्षस्य तपोभूमौ गोरक्षपुरमण्डले ।
मया त्रिपाठिना सम्यग् यावनं मतमीक्षितम् ।।

# वैज्ञानिकानां मते स्वप्ननिरूपणम्

स्वाप्निकं मतमाप्तानां मनोविज्ञानवेदिनाम् ।
सङ्क्षिप्य दर्शयत्यत्र रामनारायणः सुधीः ।।

वैज्ञानिकास्त्वित्थं प्रतिपादयन्ति—शारीरिकमानसिकोत्तेजनावशादेव जनाः स्वप्नाननुभवन्ति । शारीरिकोत्तेजना द्विविधा । एका-परिस्थितिजन्या, अपरा-विकार जन्या । यथा केनचित् कारणेन जना यदि कुत्सितस्थाने शेरते तदाऽवश्यमेव दुःस्वप्नं पश्यन्ति । एतस्य निदानन्तु एतदेव यत् पुरुषोऽचेतनावस्थायां तादृशदुःखं प्रतिकर्तुं न यतते । तस्मात्तस्य दुःखप्रदोत्तेजना दुःस्वप्ननिबन्धरूपा जायते । एवं मुखं पिधाय वस्त्रेण शयने क्रियमाणेऽपि दुःस्वप्नदर्शनं भवति, तत्रापि तादृशदुःस्वप्नदर्शनस्यैष हेतुः—यद् वस्त्रावरोधेन श्वासप्रश्वासद्वाराशुद्धवायोर्लाभाभावे तस्यैव दुर्गन्धिवायोः पुनः पुनः प्रवेशेन जायमाना दुःखप्रदोत्तेजना तादृशस्वप्ननिमित्तं वर्तते तस्याम-वस्थायाम् ।

अपि च—यदि कश्चिद् गीतं शृण्वन् शेते स सुस्वप्नमनुभवति, अथ यदि वैरं विधाय स्वपिति कश्चित्, स दुःस्वप्नं पश्यति । एवं शयनकाले यदि शीतप्रकोपः स्यात् सोऽपि दुःस्वप्नकारणम् । ईदृशस्थलेषु सर्वत्रैव परिस्थितजन्योत्तेजना कारणम् । पाश्चात्यः कश्चिद् विज्ञो मायरनामको विषयममुं नैकैः प्रयोगैरनुभूतवान् । यदि शयनावस्थायां पादतले जलसीकरप्रक्षेपः स्यात्तदा सोऽवश्यमेव वृष्टिस्वप्नं पश्यति ।

एवं विकारजन्या शारीरिकोत्तेजनाऽपि कारणम् । यथा ज्वरग्रस्तः पुरुषो दुःस्वप्नं विलोकयति । यदा कदा भाविरोगसूचकः आहोस्विद् भाविशुभाशुभसूचकः स्वप्नोपि दृश्यते ।

कस्यचिन्मते इमानि षट् कारणानि स्वप्नानाम् १. वायुप्रकोपः, २. पित्त प्रकोपः ३. श्लेष्माधिक्यम्, ४. देवाभिवेशः, ५. पौनः पुन्येन कस्यचित् कार्यस्याभासः, ६. भाविकार्यवशश्चेति । एतान्यपि शारीरिकोत्तेजनायामेवान्त-र्भवन्ति ।

मानसिकोत्तेजनापि द्विधा—एका जाग्रत्कालिकानुभवजन्या, द्वितीया चान्तरिकेच्छाजन्या। इमेऽपि स्वप्नकारणतां मुख्यतया भजेते।

एडलर-महाशयस्य आशयः—साधारणकार्यनिर्णयो ह्यज्ञातप्रवृत्तिभिश्चेतनमनसा भवति। कश्चिद् विशेषकार्याणां हेतुषु विषयेषु च सर्वतो विचारेण कठिनतयैव निर्णतुं यदा प्रवर्तेत तदा कार्यसिद्धौ सत्यामपि मनसि विक्षुब्धताऽऽयात्येवेति न कश्चनात्र सन्देहः। किन्त्वचेतनं हि मनः प्रायो जीवनेऽधिककार्यनिर्णयं करोति। तर्हि यदा कठिनकार्येव्यापृतं मनः किञ्चिन्निर्णेतुं न पारयति, आहोस्विन्निर्णयेन विक्षुब्धं भवति, तस्यामवस्थायां यद्यचेतनं मनस्तत् भावयितुं न प्रभवति, तदैवैतस्यामवस्थायां भयादेशस्वरूपं स्वप्नं प्रकटयति। एतादृक् स्वप्न उचितमार्गं प्रदर्शयति। यदा चेतनाऽचेतनयोर्मनसोर्विचारे प्रवृत्तौ वा विरोधो जायते, तदा प्राय एतादृशाः स्वप्ना भवन्ति।

वैज्ञानिका इत्थं कदापि न मन्यन्ते यत् केचन स्वप्ना भाविघटनासूचका इति, अपि तु केवलघटनासम्भावना स्वप्नेऽत्रलोक्यते। एतदपि तद्दृष्ट्या मनसः कल्पनामात्रमेव। अतः सत्यासत्योभयरूपा कल्पना भवितुमर्हति।

मनोवैज्ञानिकपन्थाः पाश्चात्यचिकित्सकानां विचार एव। तैस्त्वत्र स्वानुभूतिरेवावलम्ब्यते, न शास्त्रीया काचन सरणिः। अतोऽत्र तेषां स्वप्नविषयक विचारकदम्बकमुपस्थापयामः। आधुनिक-मनोवैज्ञानिक-पद्धत्यां प्रधानतया 'फ्रायड' महाशयः प्रसिद्धः। सोऽस्मिन् प्रथमविचारकः, तदनुयायिनश्च विषयस्य विकाशकर्तारः। स्वयं खलु सिगमण्डफ्रायड-महोदयः १८५६ ईशवीयशताब्द्यां फ्रावर्गनगरे जन्म लब्ध्वा यूरोपमहाद्वीपस्य नार्वेदेशीये वियेना नगरे सपरिवारमुषित्वा तत्रान्यत्र च शिक्षां दक्षताञ्च समुपलभ्य वियेना-विश्वविद्यालये व्याख्यातृपदमलङ्कुर्वन्नपि तदानीं मानसिकरोगाणां प्रसिद्धचिकित्सक आसीत्। विषयेऽस्मिन् सोऽनेकान् ग्रन्थान् प्रकाशितवान्। अयमेव स्वप्नविषये मुख्यो मनोवैज्ञानिकविश्लेषकः।

अस्य प्रधानशिष्यः 'कार्लं एब्राहम' महोदयोऽपि स्वविचारप्रदानद्वारा तां पद्धतिमुन्नीतवान्। तदनुयायिनौ 'एडलर' महोदयः, 'सी. जी. युंग महोदयश्च तत्सिद्धान्तनिष्ठावपि ततो भिन्नविचारधाराप्रवर्तकावास्ताम्। प्रायो ह्यस्मिन् विषये चिकित्सका एवैतन्मार्गवर्धितारः। अन्येऽप्यासन्, सन्ति भविष्यन्ति च बहवः, किन्त्वद्यावधि मुख्यतया फ्रायड-एडलर-युंग-महाशयानां विचारमेव पुरस्कृत्य विचारकाः प्रवर्तन्ते। तत्रापि स्वप्नविषये फ्रायड, युंग इत्येतावेव प्रसिद्धौ। अतोऽनयोः सिद्धान्तभेदमाकलय्य मनोवैज्ञानिकानां सरणिं विचारयामः।

फ्रायड-महोदयस्य मतमिदं यत् स्वप्नस्य कारणं सङ्कुचितमानसिकेच्छा-मात्रम् । प्रायो हि मानवाः स्वजीवनं सुखमयं निर्मातुं प्रत्यहमेव निरन्तरं किञ्चिद् विचारयन्ति । तदर्थं मानसिककल्पनयाऽनेकान् व्यूहान् रचयन्ति, विरचय्य च विनाशयन्ति च । इच्छैषा स्वाभाविक्येव मानवानाम् । किन्तु तासु समासामिच्छानां पूर्तिरसम्भवः एव । यतो हीच्छा नैतिकी चानैतिकी । नैतिकेच्छासु कासाञ्चित्पूर्ति-भवति, कासाञ्चित्तु सामर्थ्याभावान्न भवति । किन्त्वनैतिक्या इच्छायाः पूर्ति सामाजिक-धार्मिक-नैतिकप्रतिबन्धवशात् कथमपि कर्तुं न शक्नुवन्ति जनाः ।

ता एवापूर्णा इच्छा अचेतने मनसि स्थिताः सत्योऽर्धचेतनावस्थायां स्वात्मानं प्रकटयितुं यतन्ते । स एव स्वप्नः । वैज्ञानिका ऐकमत्येन स्वीकुर्वन्ति यच्चेतना-चेतनावस्थाद्वैविध्येन मनसो द्वैविध्यम् । तत्र चेतने मनसि सङ्कुचिता इच्छा अस्मिन्नेवावसरे क्रीडन्ति । यथा--राज्यरक्षकादिभिर्भीता दस्यवोऽन्तर्धौ स्वकार्य-माचरन्ति तथैवेच्छा अपि स्वकीयां पूर्ति स्वप्नावस्थायां प्राकट्येन भजन्ते जागरणेऽ-पूरिताः सत्यः प्रतिबन्धवशाद् दस्युवत् ।

फ्रायड महाशयस्तु—केवलं कामवासनैवाधिकतरं स्वप्नानां निबन्धनमित्य-गादीत् । जले बाहुतरणम्, पवने समुड्डयनम्, पर्वतारोहणम् कन्दरासु प्रवेशः बालकैः सह क्रीडनम्, इत्यादिस्वप्ना रूपान्तरेण कामवासनायाः तृप्तिसूचकाः । न हि केवलं कामवासनैव स्वप्नोत्पत्तिनिबन्धनम् अपि तु संसरणशीले जीवने यावतां स्थायि-भावानां निवृत्तिर्न जायते, तेऽप्युद्वेगात्मकस्वप्नजनकाः । यथा वैरेर्ष्यालोभादयो हि मृत्यु-युद्ध-प्रपतनादिभयङ्करस्वप्नदायकाः । एभिर्दूषितं मना विचित्रस्वप्नाननु-भवति । ईर्ष्यालुघृणी द्वेषी च प्रायस्तादृशान् स्वप्नान् पश्यन्ति ।

प्रायो हि यमनुलक्ष्य ये भावास्ते तम्, अन्यं वा प्रति स्वप्ना भवन्ति । यतो हि तेषां भावानां स्थानविपर्ययः संभवत्येव । यथा जागरणे यदुद्दिश्य घृणादयो वर्तन्ते, तदभावे तत्सम्बन्धिनमन्यप्राणिनं प्रति त एव भावाः संचरन्ति । आलम्बनं विना भावाभिव्यक्तिरेव न स्यात् । जागरणे पदार्थाः मनसा कल्पिता न सन्ति, किन्तु स्वप्ने कल्पिता एव । अतः स्वप्ने जागरणवत् स्थायिभावस्वरूपं नहि दृश्यते । तदा स्थायि-भावे वैलक्षण्यमेव प्रतीयते, यथा जगति यस्य दृष्ट्या यो हि घृणापात्रमस्ति, तद्विपरीतं वृत्तं स्वप्ने अर्थात् स्वप्ने स एव घृणापात्रमात्मानं विलोकयतीत्यादि । ईदृशी स्थिति-रस्माद् भवति यत् स्वप्ने स्वेच्छायामुत्तेजनाराहित्यम् ।

ब्राउनमहोदयो वदति-मनुष्येषु यावती जीवितुं प्रबलेच्छा तावत्येव प्रबला मृत्यावज्ञातेच्छा । इमामेवेच्छां निर्वाणेच्छां कथयति सः । इयमेवोत्तेजनाविरहितेच्छा । वस्तुतस्तु इयमेव विविधस्वप्नदर्शनमूलकारणम् । अयं महानुभाव इदमपि कथयति

यत् स्वप्नं विना निद्रापि न लगति। अतो निद्रादार्ढ्यायैतस्य परमावश्यकता नायं निद्राभङ्गकरः।

युंग महाशयस्यैष सिद्धान्तः—स्वप्नो हि वर्तमानां मानसिकस्थितिं तदावश्यकतां च प्रदर्शयति। मानसिकरोगिणाञ्च चिकित्सका विलक्षणान् स्वप्नान् पश्यन्ति। तेऽपि स्वप्नास्तेषां चिकित्साकार्ये साहाय्यं प्रददति। एषु स्वप्नेषु स्वास्थ्यहेतव इतिकर्तव्यताज्ञानं जायते। अत एव चिकित्सकः स्वकार्ये साफल्यमाप।

फ्रायडमहाशयस्तु—चेतनमनसो येच्छा जागरणे न पिपर्ति तस्याः पूर्तिः स्वप्नावसर एव भवति। एवमचेतनमनसोऽपीच्छापूर्तिस्तदैव जायते। यदीमा इच्छाः स्वप्ने न पिपृयुस्तदा व्यक्तिः पूर्णविश्रामं न लभेत। अतो गाढं शयितुमिच्छाभिव्यक्तिरावश्यकी। एवञ्च यदि संकुचितवासना स्वप्ने नाविर्भवेत् तदा जाग्रति स्वं प्रकटयितुं सा विकृतरूपमेवावलम्बेत। एतदर्थमपि स्वप्ने वासनाभिव्यक्तिरावश्यकीत्यगादीत्।

स्वप्नावस्थायामचेतनस्य मनस इच्छा स्वरूपं परिवर्तयतीत्यस्मिन् विषये फ्रायडमहोदयस्यैतत्कथनम्—चेतनमनसो नैतिकप्रतिबन्धेनाचेतनं मनः सदा बिभेति। अतोऽचेतनस्य मनसो गुप्तेच्छा चेतनमनसः प्रत्यक्षीकरणात्पूर्वमेव विविधप्रकारेण स्वाङ्गं व्यरचयत् सांकेतिकपत्रवत्। तस्मात्सेयमिच्छा स्वप्नावसरे प्रतिबन्धकेभ्य आत्मानमाकुञ्च्य मूर्तीकरण-रूपान्तरणाऽऽरोपणाऽऽकुञ्चनप्रसारणरूपसाधनैः स्वं प्रकटयति। तद् यथा—

मूर्तिकरणम्—अचेतनमनसो भाषा नहि शब्दमयी, किन्तु चित्रमयी। अतः स्वप्ने विचारः पर्यायेण प्रतिभासते। स्वप्ने काठिन्यं पर्वतवत् महाकृति प्रतीयते। तेन हताशा तमोमयी जायते, प्रसन्नतोत्साहश्च अलौकिकसौन्दर्यदृश्यप्रतीत्याऽवलोक्यते स्वप्ने। दृष्टान्तश्चात्र-कस्याश्चिन्नायिकाया एकेन विवाहितपुरुषेण सह प्रेम आसीत्। सा स्वप्ने एवं दृष्टवती यदेको जिराफनामकः अरबदेशीयजन्तुविशेषः किञ्चिद् वृत्तमभितः पर्याटीत्। स एकां मार्जारीं पादेनाताडयत्। अत्र वृत्तं वैवाहिक्या मुद्रिकायाः प्रतीकम्। जिराफस्तु परपुरुषप्रतीकात्मकोः, यः स्वप्नद्रष्ट्रीमवाच्यमवादीत्।

रूपान्तरणम्—सामाजिकाद्या नैकप्रतिबन्धव्यवस्थायाः प्रतिबन्धेनात्मानं गोपायितुं महत्त्वपूर्णसाधनमिदम्। रूपान्तरणे यं प्रति कोपः, अथवा अनैतिकविचारः, उत कामवासना वर्तते, ततोऽन्यव्यक्तिं प्रति इमाः सर्वा इच्छा उदीयमाना दृश्यन्ते। यथा—उपरतेऽपि पितृव्ये कश्चन युवकः पौनःपुन्येन स्वपितृव्यमृत्युं व्यलोकयत्। अत्र विश्लेषणे कृते सति स युवक आर्थिकव्यग्रतावसर एव एवंविधं स्वप्नमपश्यदिति सिद्धम्। पितृव्यस्तु तत्पितुः प्रतीकमात्रम्।

आरोपणम्—इदं हि रूपान्तरणस्य विविधरूपमेव। अत्र व्यक्तिः स्वेच्छां स्वमनोगतभावमपरस्मिन्नारोपयति। एवं परं सन्तापयितुं वाञ्छन्तो जनाः स्वप्ने परैः सन्तप्यमानं स्वमेव विलोकयन्ति। या स्त्री कामवासनां दधाति सा स्वप्नेऽन्य-व्यक्तिभिः पीडितामात्मानं विलोकयति। यः पुरुषो निन्दनीयविचारकः तिरस्कृतो वा, स स्वप्ने कस्यचिददृश्यपुरुषस्य धिक्शब्दं शृणोति, राज्यकर्मचारिणस्तं ग्रहीतुमागताः, तंश्च तस्य मृत्युदण्डो भवितेति वा पश्यति।

आकुञ्चनं विस्तारणञ्च—इच्छाया वास्तविकत्वमन्तर्धातुमिच्छाभिव्यक्तिं मनोऽनुकूलां विधातुं साधने चैते। कदाचिन्महती घटना जटिलेच्छा वा, अत्यल्प-स्वप्नाकारतां प्रपद्यन्ते, कदाचिदत्यल्पापि मानसिकेच्छा दीर्घकथानकरूपेण स्वप्ने प्रकटते। उदाहरणञ्चास्यैतत्—युवतिरेका स्वप्ने हाटकमय्यावुपानहौ दधतीमात्मानम-पश्यत्। मनोविश्लेषणे कृते सति एको लम्बायमानविचारो लघुस्वप्नस्यास्य कारणं निश्चितम्।

कदाचित् सा नायिका स्वसखीगेहं गतवती। तस्याः पतिस्तु धनवान् आसीत्। तस्मात्सा बहुमूल्यं वस्त्रं स्वर्णमयोपानहौ च पर्यधात्। स्वप्नदर्शिकायास्तु पतिर्निधनः। पूर्वं तत्सहचर्याः पत्या तस्या नायिकायाः सविधे विवाहसम्बन्धप्रस्तावोऽकारि, किन्त्वनया स प्रस्तावस्तिरस्कृतः। तदनन्तरं सहचरीवैभवं दृष्ट्वैर्ष्येति चात्मानं प्रति मनस्याक्रोशति सा। किन्तु तस्या नैतिकभावनैर्वाधाया आत्मभर्त्सनायाः प्रतिकूलाऽऽ-सीत्। यतो ईदृशी भावना पतिं प्रत्यसन्तोषं व्यञ्जयति। अतोऽस्या आन्तरिक-मानसेच्छा स्वं प्रकाशयितुं स्वप्नेऽवसरं प्राप। जाग्रति तादृशोपानहौ तस्यै दुर्लभे एव। अत इयं स्वप्नावस्थायां ततोऽपि वरे पादुके पर्यधात्।

अतः स्वप्नस्य दैनिककार्यं शारीरिकावस्थाः चेतनमनसोऽचेतनमनसोऽभिवा-ञ्छाश्च कारणानीति निष्कर्षं वदितुं वयं प्रभवेम।

मैकडुगलमहोदयस्तु स्वकीये पुस्तके फ्रायडमतमित्थंप्रतिपादितम्—

सर्वे स्वप्ना इच्छाभिव्यक्तिमात्रम्। बालानां प्रौढानां च कतिपये स्वप्नाः, यथा बुभुक्षायां भोजनसम्बद्धाः स्वप्ना अथवा यौनेच्छायां तत्सम्बद्धाः स्वप्नाः वस्तुतः आङ्गिकावश्यकतोद्भूताः सन्ति। किन्तु बाहुल्येन छद्मवेषेणोत्पन्नाः सन्तः ता इच्छाः प्रति सङ्केतं कुर्वन्ति या इच्छा अस्माभिः प्रसह्याऽचेतनं प्रति निपात्यन्ते। फ्रायड इदममन्यतः, यत् कदाचित् कदाचित् स्वप्नसामग्री ऐन्द्रियिकोत्तेजन'द्वारा निर्धारिता भवति। किन्तु तस्य स्पष्टं मतमस्ति यत् स्वप्नद्रष्टा स्वप्नसामग्र्या यां व्याख्यां करोति तद्व्याख्यानमधिकमहत्त्वपूर्णमस्ति। फ्रायडः तत्त्वमिदं न स्वीकरोति यत् स्वप्ना अकस्माद् घटिता भवन्ति अथवा स्वप्नसामग्री चार्थहीना भवति। फ्रायडस्येदमपि

मतमस्ति यदन्तर्हितभावनाग्रन्थयो ये बाहुल्येन यौनेच्छासंबद्धाः सन्ति त एव स्वप्ने प्रकटिता भवन्ति । फ्रायडकथनानुसारम् एतत्सर्वग्रन्थीनां निर्माणं वस्तुतः शैशवावस्थायामेव भवति ये कालान्तरेऽन्तर्हिताः सन्तः स्वप्नस्य रूपं गृह्णन्ति । स्वजाग्रदवस्थायां वयं चेतनाप्रहरिणोऽचेतनद्वारि स्थापयामः, किन्तु सुषुप्त्यवस्थायां यदेद यामिकत्व शिथिलीभवति तदा निगूढा इच्छा नानारूपं गृहीत्वा प्रकटिता भवन्ति । कदाचित् कदाचित्त्विमा इच्छाः स्वशुद्धविकृतरूपाभ्यां प्रादुर्भवन्ति यतः स्वप्नद्रष्टा स्वजाग्रदवस्थायां स्मृत्वा व्यग्रो भवति । इत्थं स्वप्नसामग्री प्रकारान्तरेणाचेतनस्य प्रकटीकरणप्रयासः । अनेनेदं स्पष्टं भवति यच्चेतनं स्वप्नसामग्रीनिर्माणे महत्त्वपूर्णं कार्यं करोति । एव स्वप्नप्रक्रिया प्रकारान्तरेण स्वप्नद्रष्टारमचतनस्य विघ्नकारिप्रभावात् साधु रक्षति ।

फ्रायडस्य मतमस्ति--शैशवावस्थायामन्तर्हितयौनभावनाः सुषुप्तावस्थायां प्राकट्यं प्राप्ता, व्यक्तिं सन्तोषयन्ति । एवं स्वप्नान् वयम् असामान्यसम्बद्धान् कर्तुं समर्था भवेम, यतो हि असामान्यव्यक्तयोऽपि स्वप्नवत् स्वयौनभावनाः अथवा जीवन प्रवृत्तीः ( लिबिडो ) विकृतिरूपेण प्रकटयन्ति यदा वास्तविकजीवनस्य यामिकता अल्पा भवति । फ्रायडः कथयति--स्वप्नः खल्वसामान्यताया अपरं लक्षण यत् केषाञ्चित् सामान्यप्राणिनां जीवने सुषुप्तावस्थायां दृश्यते । अथ च यदि वयं मनुष्याणां स्वप्नानां सङ्कलनं कुर्याम तदा अस्मान् प्रति तानि सर्वाणि ज्ञानानि प्राप्नुवन्ति यान्यसामान्यसम्बद्धानि सन्ति । यद्यपि स्वप्नसामग्र्याः सम्पूर्णा व्याख्या नहि संभवति तथापि स्वप्नद्रष्टुर्निःसङ्कोचाभिव्यक्तिरस्मान् प्रति स्वप्नस्य व्याख्याकरणे सहायतां कर्तुं प्रभवयिष्यति ।

स्वप्नविश्लेषकः स्वप्नस्थालग्नान्तरविषयोपरि स्वप्नद्रष्ट्रा सह चर्चां कुर्वन् विचारयति । अन्ततस्तस्मिन् मूलस्रोतसि गच्छति यत् स्वप्नस्य कारणमस्ति ।

स्वप्नसामग्र्या इयं विकृतिर् (छदम् रूपम्) अनेकस्मिन् रूपेऽभिव्यक्तोभवति, अथवाऽनेकप्रकारेण प्रभाविता भवति, यत्र कतिचिदेवं ज्ञातव्याः--

१. सामग्र्या एतत्प्रकारकं संघटन, यद् अग्राह्यं भवति ।

२. केषाञ्चित् तथ्यानां विलीनता, यतः सामग्री अर्थहीना प्रतीयते ।

३. सामग्र्याः परिष्कृतरूपेण प्रकटनम् ।

एवमर्धचैतन्यं यामिकरूपे विशेषतः सावधानं सद् मर्दितेच्छानां विकृतिरूपेण प्रकटनेऽनुमतिं ददाति । विकृतिरूपस्यान्वेषणमपि चार्धचैतन्यमेव करोति ।

---

1. Mcdougale An Outline of Abnormal Psychology.

फ्रायडः परिष्कारं विस्थापिताभिव्यक्ति मन्यते । स्वप्नद्रष्टा इच्छानामांशिक-सन्तुष्टिमात्रेण सन्तुष्टो भवति । इदं विस्थापनं वस्तुतोऽर्धचेतनस्य कार्यं किन्त्वचेतनं स्वयमर्धचेतनं प्रतार्य बहिर्निःसरणस्य चेष्टायां छद्मवेषेण प्रकटयति । एतदेव कारणं यत् स्वप्नसामग्री बाहुल्येन अस्पष्टा अतार्किका असम्बद्धा असंघटिता प्रतीयते । फ्रायडः 'इड[1], इगो[2], सुपर[3], इगो' इत्यत्र 'इगो' इति अर्धचेतनस्य देहल्यां द्वारपाल-रूपेण नियुक्तः, इति मन्यते । अतः इगो' स्वप्नेषु छद्मरूपेण अभिव्यक्तीभवति । 'इगो' सर्वं नैतिकबन्धनं परित्यज्य यौनप्रवृत्त्या सह तादात्म्यं स्थापयति । एतदेव नहि, अपि तु 'इगो' मातृपुत्रयोः भ्रातृभगिन्योः सम्बन्धेऽपि यौनसम्बन्धिमान्यतां विदधल्लक्ष्यते । यौनसम्बन्धातिरिक्तत्वेन घृणाप्रतिहिंसात्मीयजनमृत्युसबद्धा निषेधेच्छा अपि स्वप्नेषु स्थानं लभन्ते । इत्थम् 'इगो' स्वप्नेषु भूमिकात्रय निभालयति । १–प्रतिहाररूपेण २ नैतिकताः समस्तं बन्धनं त्यक्त्वा स्वनग्नरूपेण ३–छद्मवेष-रूपेण । फ्रायडः कथयति यद् 'इगो' कतिवारं भूमिकात्रयमिदम् एकस्मिन् स्वप्ने युगपन्निभालयल्लक्ष्यते ।

रघुनाथपदाम्भोजं ध्यायताऽमलचेतसा ।
रामनारायणेनेदं न्यस्तं वैज्ञानिकं मतम् ॥

---

१. इड = अज्ञानता ।
२. इगो = स्वाभाविकता ।
३. सुपर इगो = सामाजिकमान्यता ।

# आधुनिकवैज्ञानिकानां मतसमीक्षणम्

तत्रैवं विचारणीयम्—किं स्वाप्निकः प्रपञ्चो मिथ्या सत्य वेति ? तत्र विचारे कृते आधुनिकवैज्ञानिकानां सिद्धान्तेपि कश्चिन्नवीनो न विचारः प्रस्तुतो भवति। तत्र मन्ये आस्तिकदर्शनेषु मिथ्यात्वमेव स्वप्नप्रपञ्चस्य, यतो हि स्वप्नदृष्टान्तमादायैव वेदान्तिनः सकलप्रपञ्चस्य मिथ्यात्वं साधयन्ति। श्रुतिरपि—न तत्र रथा न रथयोगाः पन्थानो भवन्ति'। दृष्टान्तो हि वादिप्रतिवादिसम्मत एव भवति। कस्याश्चिदिच्छायाः पूर्तिः सत्येनैव पदार्थेन भवितुमर्हति। नहि मिथ्या-भूतेन अन्नादिना भोजनेच्छायाः पूर्तिं विधातुं कश्चित् समर्थो भवति। अत इच्छाया पूर्त्यर्थं स्वप्ने तत्त्वतः पदार्था अवलोक्यन्त इति न युक्तमुत्पश्यामः।

तत्र स्वाप्निकपदार्थानां योग्यदेश-कालादेरुपादानस्य निमित्तस्य चाभावात् केवलं काल्पनिका एव मनोविकारास्ते। तत्रैवं विधः प्रश्नः समुदेति -यदि निद्रायां स्वाभाविका विकारा एते स्युः, तदा सर्वेषां मानवानां स्वप्ना एकविधा एव भवेयुः। भवति च वैलक्षण्यं स्वप्नेषु। अतः किञ्चिद् कारण वक्तव्यम्। मनसि वर्तमाना ये संस्काराः पूर्वानुभवजन्यास्त एव अदृष्टरूपमुद्बोधकं समवाप्य तत्तद्विकारान् कल्पयितुं प्रभवन्ति। कुत्रचित्तु मनसः क्षोभेण ते विकारा जायन्ते। स च क्षोभः शारीरिक-रोगादिना, पित्तादिदोषेण तत्तत्परिस्थितिवशेन वा भवतु। अत एव कदाचिद् शत्रुजनानां दर्शनेन क्रोधवशात् मनसः क्षोभे जाते जाग्रदवस्थायां शत्रूणामभावेपि तैः सह युद्धादिरूपा मनोविकारा। प्रत्यक्षमनुभूयन्ते।

एवं सन्दिग्धेषु तत्तदनेकविधोपायविषयकसंस्काराः चित्तेषु वर्तमानाः सन्ति। तत्रादृष्टोद्बोधकवशात् कस्यचित् संस्कारस्योद्बुद्धस्य वशात् कश्चिदादेशरूपः स्वप्नो जायते। तत्र मिथ्याभूतेनापि स्वप्नेन मिथ्याभूतरज्जुसर्पेण भयादिवत् शुभा-शुभफलं सूच्यत इति नास्ति विप्रतिपत्तिः

किञ्च—वैज्ञानिकैरेकं चेतन मनोऽपरञ्चाचेतनं मनः स्वीक्रियते, तत्र विचार्य-ताम्, किमेकस्यामनोऽनेकानि मतानि वैज्ञानिकानां सम्मतानि केनापि दार्शनि-केनान्येन वा सामञ्जस्यं लभन्ते ? यद्येवमुच्येत मन एकमेव, किन्तु तस्य वृत्तिरेका क्रिया सम्पादनोन्मुखा चेतनपदेनाभिधीयते, अपरा च वृत्तिः पूर्वानुभूतसंस्कारगर्भा सुप्तेव तिष्ठति उद्बोधकाभावात्। यदादृष्टमुद्बोधकं समुत्पद्यते, तदा सापि क्रियो-

न्मुखा भवति। अथो या मनसः सुप्तेव वृत्तिर्वर्तते तदेव अचेतनं मन इति ? तदा शब्दमात्रेण भेदो दार्शनिकैरेषाम्  स्वाप्निकस्य विषयस्य सत्यत्वस्वीकर्तॄणां मतेऽपि तेषां देशकालादिसम्बन्धो मिथ्याभूत एवेत्यकामेनापि मन्तव्यः। अन्यथा स्वशिरश्छेदादेः स्वप्नस्यात्यन्तमसंभवापत्तेः। देशकालादिभेदानां मिथ्यात्वस्वीकारे तु यत्र क्वचनान्यत्र कस्यचिच्छिरश्छेदादिकं सत्यभूतमेव स्मृतं मिथ्याभूतेन संबन्धे स्वीयत्वेन प्रतिभासते इति सामञ्जस्यं समायाति। अतो वैज्ञानिकानां मतान्यपि शब्दभेदेन प्रकारान्तरेण वा दार्शनिकमतेष्वन्तर्भवन्ति इति निश्चप्रचं प्रतीयते।

तथा च प्रतिपुरुषं जाग्रत्स्वप्नसुषुप्त्याख्यासु अवस्थासु प्रतिभासमानः कश्चिद् विषयो वर्तते, इत्यत्र न कश्चिद् विवादः। तत्र सुषुप्तिकाले विशेषरूपेण कस्यचिद् वस्तुनः प्रतीतेरभावेऽपि सामान्यरूपेण अज्ञानाख्यो विषयः 'सुखमहमस्वाप्सम् न किञ्चिदवेदिषम्' इति प्रतीतिसाक्षिकः सार्वजनीनोऽनुभवो जायते। स्वप्नावस्थायां जाग्रदवस्थावद् विशेषरूपेण अनेके पदार्थाः प्रतिभासन्ते। तेषां सत्यत्वं मिथ्यात्वं वेत्यादिविचारः सत्यपि मिथ्यात्वे आकस्मिकः कारणजन्यो वा, निष्प्रयोजनः सप्रयोजनो वेत्यादिरूपेण विचाराः सर्वेषां मनसि प्रादुर्भवन्ति। अतस्ते विषयाः तत्तच्छास्त्रेभ्यः प्रमाणान्युद्धृत्य निबन्धेऽस्मिन् संक्षेपेण विवृताः।

तत्रेदमवश्यमङ्गीकर्तव्यमेव यत् स्वाप्नज्ञानस्य सत्यत्वपक्षेऽपि देशकालाद्यंशे संबन्धांशे वाऽवश्यं कुत्रचिदपि मिथ्यात्वमङ्गीकरणीयमेव। मिथ्यात्वपक्षेऽपि मिथ्याभूतानामेषां केषाञ्चिदपि शुभाशुभादिसत्यफलजनकत्वं संस्कारद्वारा सत्यपदार्थानां कारणत्वञ्च नापलपितुं शक्यते। सत्यपदार्था मिथ्याभूताः पदार्था जायन्ते, इत्यत्र प्रमाणत्वेन सहस्रशः श्रुतय एव तन्महर्षिभिः स्मृतिष्वमानीताः।

यवनसिद्धान्ते स्वप्नावस्थायां जीवस्य निष्क्रमणादिकमपि चर्चितं तत्सर्वं बृहदारण्यकादिष्वपि वर्णितम्।

प्रायो हि प्राचयपद्धतौ यावन्ति शास्त्राणि स्वप्नमधिकृत्य किञ्चित् प्रोक्तवन्ति तेषां समेषां सामञ्जस्येकत्र पर्यवसानञ्च समन्वयेन भवितुमर्हति। प्रथमतोऽत्र स्वप्नविषये द्विधा हि पन्थानौ सम्प्रति जनानां दृष्टिगोचरौ स्तः। तत्रैका पाश्चात्यसरणिराधुनिकी वैज्ञानिकपरम्परा द्वितीया पौरस्त्यसरणिः प्राचीना दर्शनपुराणादिप्रतिपादिता।

उभयत्र प्राधान्येनायं विशेषो यद् वैज्ञानिकाः स्वप्नस्य कारणेष्वेव तत्पराः फलानुसन्धानं भाविघटनावितानानुरूपं नापेक्षन्ते अपि तु पूर्वघटनाक्रमणदक्षास्ते जातस्य स्वप्नस्य कारणबाहुल्ये प्रकृत्यादिविचारं विशेषतो विदधति। पौरस्त्यास्तु विशेषतो स्वप्नस्य भाविफलेषु एव विचारसन्नद्धाः स्वप्नकारणविवेकसहकृता अपि

प्रधानतया फलविवेके एव संलग्ना अवलोक्यन्ते। न केवलं तत्र पुराणग्रन्था एवास्माकीना ईदृशा अपि तु बौद्धजैनादिग्रन्था भारत भूम्युद्भवा अपि तादृशं ब्रुवन्ति। अस्मिन्नेव कोटौ यवनग्रन्था अपि आयान्ति। एतेषां समेषां मते भाविशुभाशुभसूचकानां स्वप्नानां कारणमदृष्टमेव, इति निर्विवादम्। एतत् सर्वं तत्तन्मतविमर्शप्रकरणे प्रस्तुतग्रन्थावलोकनेन स्फुटीभविष्यति निगमागमसम्मतसम्प्रदायग्रन्थेषु।

# लेखक परिचयः

वन्द्ये वन्दारुभिः पूते मन्दाकिन्यादिवारिभिः ।
प्राकृतैर्गुणसन्दोहैः सुखदैर्विध्यसंयुते ॥१॥

भूषिते जन्मना स्वेन रामकृष्णतथागतैः ।
संस्तुतेऽमरलेखन्या व्यासवाल्मीकिशङ्करैः ॥२॥

देशे भारतवर्षेऽस्मिन् ज्ञानचारित्र्यशिक्षके ।
अस्त्युत्तरप्रदेशोऽयं क्षेत्रतो लोकतो महान् ॥३॥

तस्य पूर्वोत्तरे कोणे प्रकृत्या चारु संस्थितम् ।
नदीभिर्बहुभिर्व्याप्तं सस्यश्यामलतार्चितम् ॥४॥

सरय्वा उत्तरे तीरे दक्षिणे हिमशैलतः ।
गण्डक्याः पश्चिमे भागे राजते मण्डलं महत् ॥५॥

गोरक्षपुरनामेदं सरयूपारवासिनाम् ।
मूलस्थानं द्विजातीनां गोरक्षादितपःस्थलम् ॥६॥

गोरक्षपुरतोऽवाच्यां राजमार्गस्य सन्निधौ ।
सरयूपुलिनात् सार्धं गव्यूतावुत्तरे स्थितः ॥७॥

जगदीशपुरग्रामो रम्यश्च सुखदो लघुः ।
शाण्डिल्यान्वयजातानां द्विजानां यत्र संस्थितिः ॥८॥

तत्र जातो महोदारो गोकुलनाथसंज्ञकः ।
कृषिकर्मणि संसक्तः शान्तो दान्तश्च निश्छलः ॥९॥

चत्वारस्तनयास्तस्य जाताः सद्गुणभूषिताः ।
मिथः सौहार्दसम्पन्नाः पित्राज्ञापरिपालकाः ॥१०॥

व्रजराजः सुतो ज्येष्ठो दिवं यातो विवाहितः ।
कनिष्ठो रामदेवश्च वयस्यल्पे तनुं जहौ ॥११॥

श्रीलो व्रजविहारीति संज्ञामाप द्वितीयकः ।
ऋषिमा (रेशमां) दयिता तस्य याऽन्वर्थमभजत् सदा ॥१२॥

श्रीमान् बालविहारीति नाम्ना ख्यातस्तृतीयकः ।
धन्या (धन्ना) नाम्नी गुणैर्धन्या पत्नी तस्य महात्मनः ॥१३॥

गर्भाद् यस्याः समुत्पन्नो रामनारायणः सुधीः ।
बाल्ये मात्रा विहीनोऽसौ जातो दुर्दैवयोगतः ॥१४॥

मातृष्वस्रा दयामूर्त्या पितृव्यभार्ययोक्तया ।
लालितः पालितः सम्यक् सुतवत् परिवर्धितः ॥१५॥

सोऽसौ व्याकरणं शास्त्रं वेदान्तं शाङ्करं तथा ।
धर्मशास्त्रं च साहित्यं गुरुभ्यः समधीतवान् ॥१६॥

कृतवान् शारदासेवामधीत्याध्यापनेन च ।
लेखनेन निबन्धानां ग्रन्थानां तत्त्वदर्शिनाम् ॥१७॥

तस्य भार्या प्रिया साध्वी सहाया श्यामसुन्दरी ।
पुत्रो गिरिधरो वश्यः सुशीलः पितृवत्सलः ॥१८॥

चतस्रः कन्यका जाता ज्येष्ठा तत्र शशिप्रभा ।
कमला ललिता चैव कनिष्ठा विमला तथा ॥१९॥

नभोनेत्रनभोनेत्रमिते वैक्रमवत्सरे ।
तेनायं रचितः स्वप्नविमर्शः पूर्णतामगात् ॥२०॥

शास्त्रप्रकीर्णान् विषयान् विचिन्वता-
श्रीरामनारायणशर्मणा बुधा ।
सुगुम्फिता स्वप्नविमर्शमालिका-
विराजतां शङ्करकम्बुकण्ठके ॥२१॥

# समुद्धृतग्रन्थानां तालिका

| संख्या ग्रन्थ नाम | कर्तृनाम | प्रकाशक |
|---|---|---|
| १. सिद्धान्त कौमुदी | भट्टोजी दीक्षित | सीतारामशास्त्री, राजस्थान संस्कृत कालेज ग्रन्थमाला, मीरघाट, काशी, सं० १९९७ |
| २. अष्टाध्यायी | पाणिनि | रामलालकपूर ट्रस्ट, अमृतसर १९५७ |
| ३. निरुक्त | यास्क | श्रीवेंकटेश्वर स्ट्रीम प्रेस, बम्बई सं० १९८२ |
| ४. योगसूत्र | पतञ्जलि | चौखम्बा संस्कृत सीरीज वाराणसी, १९३५ |
| ५. सांख्यसूत्र | कपिल | आर्य साहित्य मण्डल लिमिटेड अजमेर १९६२ |
| ६. पैङ्गलोपनिषद् | | ईशादिविंशोत्तर शतोपनिषद् मोतीलाल बनारसी दास, वाराणसी, १९७० ई० |
| ७. शारीरकोपनिषद् | | ,, ,, |
| ८. सुबालोपनिषद् | | ,, ,, |
| ९. वराहोपनिषद् | | ,, ,, |
| १०. श्रीविद्यातारकोपनिषद् | | ,, ,, |
| ११. परब्रह्मोपनिषद् | | ,, ,, |
| १२. परमहंसोपनिषद् | | ,, ,, |
| १३. महोपनिषद् | | ,, ,, |
| १४. नारदपरिव्राजकोपनिषद् | | ,, ,, |
| १५. माण्डूक्योपनिषद् | | ,, ,, |
| १६. पञ्चदशी | विद्यारण्य | भार्गव पुस्तकालय काशी १९४८ |

| | | |
|---|---|---|
| १७. ब्रह्मसूत्रशाङ्करभाष्य | शङ्कराचार्य | निर्णय सागर प्रेस, बम्बई १९३४ |
| १८. तत्त्व बोधिनी | ज्ञानेन्द्र सरस्वती | सिं०कौ०, सीतारामशास्त्री, मोरघाट, बनारस १९९७ सं० |
| १९. चरक | अग्निवेश | चौखम्भा विद्याभवन १९६९ ई० वाराणसी |
| २०. रतिरहस्य | श्रीकोक्कोक | फ्री मैन एण्ड कम्पनी काशी १९२२ |
| २१. साहित्यदर्पण | आचार्य विश्वनाथ | नवल किशोर प्रेस, लखनऊ सं० १९९१ |
| २२. योगवासिष्ठ | वाल्मीकि | निर्णयसागर प्रेस, बम्बई १९३७ |
| २३. भाष्यप्रदीप | कैयट | सम्पादक, गुरुप्रसाद शास्त्री, राजस्थान सं कालेज, काशी १९३९ई० |
| २४. तन्त्रालोक | अभिनवगुप्त | निर्णय सागर प्रेस, बम्बई १९३३ |
| २३. शिवसूत्र | महेश्वर | श्रीनगर, काश्मीर १९१६ |
| २६. शिवसूत्रवार्तिक | भट्ट भास्कर | ,, ,, |
| २७. गरुडपुराण | व्यास | चौखम्भा संस्कृत सीरीज, वाराणसी |
| २८. लक्ष्मीतन्त्र | | अड्यार लाइब्रेरी, मद्रास १९५९ |
| २९. सिद्धान्त विन्दु | मधुसूदन सरस्वती | जयकृष्णदास हरिदास गुप्त चौखं-विद्याविलास प्रेस १९२८ ई० |
| ३०. अमरकोष | अमर सिंह | वैभव प्रेस, बम्बई सं. १९५३ |
| ३१. पञ्चीकरण | शङ्कराचार्य | गुजराती प्रिन्टिंग प्रेस, बम्बई १९३० |
| ३२. वेदान्त परिभाषा | धर्मराजाध्वरीन्द्र | श्रीवेंकटेश्वर स्टीम प्रेस, बम्बई सं० १९८५ |
| ३३. कैवल्योपनिषद् | | आनन्दाश्रम प्रेस, पूना १९२५ |
| ३४. ऐतरेयोपनिषद् | | न्यू इण्डियन प्रेस, कलकत्ता १९७४ |
| ३५. नृसिंहतापिन्युपनिषद् | श्रीमच्छंकराचार्य | आनन्दाश्रम प्रेस, पूना १९७४ |
| ३६. परमार्थसार | अभिनवगुप्त | श्रीनगर (कश्मीर), सं० १९७३ |
| ३७. ईश्वर प्रत्यभिज्ञा | उत्पलदेव | निर्णयसागर, बम्बई १९२१ ई० |
| ३८. मालिनी विजय | अभिनव गुप्त | श्रीनगर, काश्मीर १८२१ |

| | | |
|---|---|---|
| ३९. सर्वसारोपनिषद् | | ईशादिविंशोत्तरशतोपनिषद् मोतीलाल - बनारसीदास, वाराणसी १९७० ई० |
| ४०. वेन्दान्तसार | सदानन्द | निर्णय सागर प्रेस, बम्बई १९२५ |
| ४१. नैष्कर्म्मसिद्धि | सुरेश्वराचार्य | |
| ४२. बेदान्तकौमुदी | | |
| ४३. वृहदारण्यकोपनिषद् | | आनन्दाश्रम प्रेस, पूना १९५३ |
| ४४. ब्रह्मसूत्र | व्यास | निर्णयसागर प्रेस, बम्बई १९३४ |
| ४५. छान्दोग्योपनिषद् | | आनन्दाश्रम प्रेस, पूना १९३४ |
| ४६. कौषितिक्युपनिषद् | | वैदिक संशोधन मण्डल पूना १९५८ |
| ४७. गीता | व्यास | गीता प्रेस गोरखपुर २०३२ |
| ४८. याज्ञवल्क्यस्मृति | याज्ञवक्य | निर्णय सागर प्रेस, बम्बई १९३६ |
| ४९. अग्निपुराण | व्यास | सरस्वती प्रेस, कलकत्ता १८८२ |
| ५०. मेदिनीकोष | श्रीमेदिनिकर | चौखम्बा संस्कृत सीरीज, वाराणसी १९६८ ई० |
| ५१. विश्वप्रकाश | | |
| ५२. अनेकार्थ संग्रह | हेमचन्द्र | चौखम्बा सस्कृत सीरीज, सं १९८५ |
| ५३. ऋग्वेद | | भारत मुद्रणालय, औन्धनगर, सतारा प्रदेश १९४० |
| ५४. मनुस्मृति सटीक | मनु (कुल्लूकभट्ट) | निर्णय सागर प्रेस. बम्बई १९२५ |
| ५५. मीमांसादर्शन | जैमिनि | तिमिर नाशक प्रेस, काशी सं० १९४६ |
| ५६. महाभारत | व्यास | चित्रशाला प्रेस, प्रकाशन पूना १९२९ |
| ५७. माण्डूक्यकारिका | गौडपाद् | गीता प्रेस, गोरखपुर २०१६ |
| ५८. प्रश्नोपनिषद् | | वैदिक संशोधन मण्डल, पूना १९५८ |
| ५९ सुश्रुत | सुश्रुत | निर्णय सागर प्रेस, बम्बई शक १८६० |
| ६०. कठोपनिषद् | | आनन्दाश्रम प्रेस, पूना १९३५ |
| ६१. वाग्भट्ट (अष्टाङ्गहृदय) | वाग्भट्ट | चौखम्बा, वाराणसी सन् १९५९ |
| ६२. नैषधीयचरित | श्रीहर्ष | निर्णय सागर प्रेस, बम्बई, १९५२ |

| | | |
|---|---|---|
| ६३. भविष्यपुराण | व्यास | श्रीवेंकटेश्वरस्ट्रीम प्रेस, वम्बई १९५९ |
| ६५. योगयात्रा | वराहमिहिर | पं०श्रीकृष्ण दीक्षित, बाम्बे मशीन प्रेस मोहनलाल रोड, लाहौर १९४४ |
| ६६. अद्भुतसागर | वल्लालसेन | प्राभाकरी प्रेस, काशी सं० १९६३ |
| ६७. वृहद् यात्रा | वराहमिहिर | |
| ६८. गन्धर्वतन्त्र | | श्रीनगर, कश्मीर १९३४ ई० |
| ६९. वीरमित्रोदय | वीरमित्रमिश्र | चौखम्बा संस्कृत सीरीज, बनारस, १९१० |
| ७०. विष्णुधर्मोत्तर | व्यास | ओरियन्टल इन्स्टीयूट, बरौदा,१९५८ |
| ७१. मत्स्यपुराण | व्यास | वेंकटेश्वर प्रेस, बम्बई १८९५ ई० |
| ७२. चरकटीका | गङ्गाधर | |
| ७३. ऐतरेयारण्यक | सायणभाष्य सहित | आनन्दाश्रम प्रेस, पूना, १९४३ |
| ७४. ब्रह्मवैवर्तपुराण | व्यास | जीवानन्द भट्टाचार्य, कलकत्ता १८८८ |
| ७५. स्वप्नाध्याय | वृहस्पति | |
| ७६ वाल्मीकीय रामायण | बाल्मीकि | गीता प्रेस, गोरखपुर २०३३ |
| ७७. स्वप्नप्रकाशिका | दत्तराम (संकलित) | लक्ष्मी वेंकटेश्वर प्रेस, बम्बई १९८५ |
| ७८. मुहूर्तगणपति | गणपति | खेमराज-श्रीकृष्णदास, बम्बई सं० |
| ७९ कादम्बरी | वाणभट्ट | निर्णय सागर प्रेस, बम्बई, १९०८ |
| ७९. पराशरसंहिता | | (धर्मशास्त्र या हिन्दू ला कोड्स) भाग एल० सी० दास एलासियस प्रेस, कलकत्ता १९०९ |
| ८०. वेणीसंहार | भट्टनारायण | साहित्य भण्डार, मेरठ १९६० |
| ८१. धर्मसिन्धु | काशीनाथोपाध्याय | वेंकटेश्वर प्रेस, बम्बई सं० १९८४ |
| ८२. वृहज्ज्योतिःसार | श्रीवासुदेव गुप्त | चौखम्बा संस्कृत सीरीज, वाराणसी १९६० |
| ८३. परशुराम कल्प सूत्र | (रामेश्वर कृत वृत्ति) | ओरियण्टल इंस्टीटयूट बड़ौदा,१९५० |
| ८४. स्वच्छन्द तन्त्र | श्रीक्षेमराज | निर्णयसागर मुद्रणालय, श्रीनगर, १९३० |
| ८५. पाञ्चरात्र | | ओरियन्टल बुक एजेंसी, पूना १९५१ |

| | | |
|---|---|---|
| ८६. शार्ङ्गधर संहिता | शार्ङ्गधर | निर्णय सागर प्रेस बम्बई १९३१ |
| ८७. शतचण्डीयज्ञविधान | (अनुष्ठान प्रकाश) | वेंकटेश्वर स्ट्रीम प्रेस, बम्बई १९६३ |
| ८८. कालिका पुराण | व्यास | वेंकटेश्वर प्रेस, बम्बई |
| ८९. वायुपुराण | व्यास | बिब्लीओथीका इण्डिका, कलकत्ता १८८८ |
| ९०. मार्कण्डेयपुराण | व्यास | सनातनधर्म प्रेस, मुरादाबाद १९९२ |
| ९१. लिङ्गपुराण | व्यास | नूतन वाल्मीकी प्रेस, कलकत्ता |
| ९२. आदित्यपुराण | व्यास | आनन्दाश्रम पूना, शक १८११ |
| ९३. कालावली | व्यास | |
| ९४. पद्मपुराण | व्यास | आनन्दाश्रम प्रेस पूना, १८१४ |
| ९५. विष्णुपुराण | व्यास | गीता प्रेस, गोरखपुर २०२६ |
| ९६. देवल स्मृति | | दी बंगाल प्रिन्टिग वर्क्स, १ सीनागान स्ट्रीट, कलकत्ता २००९ |
| ९७. श्रीमद्भागवत | व्यास | गीता प्रेस, गोरखपुर २००८ |
| ९८. वृद्धपराशर संहिता | वृद्धपराशर | जीवानन्द विद्यासागर, कलकत्ता १८७६ |
| ९९. ब्रह्मोक्तयाज्ञवल्क्य संहिता | स्मृति सन्दर्भ ४ भाग | मनसुखराय मोय ५ क्लाइवरो, कलकत्ता १९५३ |
| १००. नारदस्मृति | नारद | |
| १०१. शौनकस्मृति | शौनक | |
| १०२. दुर्गासप्तशती | व्यास | गीता प्रेस, गोरखपुर २०३४ |
| १०३. शान्तिसार | | |
| १०४. वराहपुराण | व्यास | बंगाल एसीआटिक सोसाईटी, कलकत्ता |
| १०५. आश्वलायनगृह्यसूत्र | आश्वलायन | आनन्दाश्रम प्रेस, पूना १९३६ |
| १०६. आचारमयूख | नीलकण्ठभट्ट | गुजराती प्रिंटिंग प्रेस, बम्बई १९१५ |
| १०७. प्रायश्चित्तेन्दुशेखर | काशीनाथोपाध्याय | |

| | | |
|---|---|---|
| १०८ हायनरत्न | बलभद्र | खेमराज, बम्बई, सं० १९६१ |
| १०९ यशस्तिलकचम्पू | सोमदेव सूरि | महावीरजैन ग्रन्थमाला, १९६० |
| ११०. धर्माभ्युदय काव्य | उदयप्रभसूरी | भारतीय विद्याभवन, बम्बई १९४९ |
| १११. शान्तिनाथ काव्य | मुनिभद्र सूरी | धर्माभ्युदय प्रेस बनारस, वीर स० २४३७ |
| ११२. चण्डकौशिक | क्षेमेश्वर | वाचस्पत्य यन्त्र, कलकत्ता १९३१ |
| ११३. मेरुतन्त्र | | वेंकटेश्वर प्रेस, बम्बई, सं० सं० १९३५ |
| ११४. बृहत्पाराशरहोरा | पराशर | मास्टर खेलाड़ी लाल वाराणसी १९५२ ई० |
| ११५. बृहत् पाराशर होरा सारांश | | खेमराज, कल्याण बम्बई सं० १९८० |
| ११६ बृहज्जातक | वराह महिर | हरिकृष्णदास विद्याविलास सं० १९९९ |
| ११७. जातकपारिजात | वैद्यनाथ | चोखम्बा बनारस सं० १९९९ |
| ११८. सारावली | | |
| ११९. ब्र.सू.रामानुजभाष्य | रामानुज | परकालमठ, मैसूर, शक १८६१ |
| १२०. शैवपरिभाषा | ज्ञानशिवाचार्य | द सोनियर असिस्टैन्ट डाइरेक्टर एट द गवर्मेन्ट ब्रांच प्रेस, मैसूर १९५० |
| १२१. सिद्धान्त बोध | | |
| १२२. अथर्ववेद | विश्वेश्वरानन्द | वैदिक शोध संस्थान, होशियारपुर १९६२ |
| १२३. यजुर्वेद | | निर्णय सागर प्रेस बम्बई १९२९ |

| | | |
|---|---|---|
| १२४. मिलिन्द प्रश्न | | अतुला प्रेस, गरदान, श्रीलंका |
| १२५. योगिनी तन्त्र | | |
| १२६. मन्त्र महोदधि | | श्रीवेंकटेश्वर स्ट्रीम प्रेस, बम्बई १९६२ |
| १२७. सिद्धान्त सारावली | | |
| १२८. स्वप्न प्रदीप-वर्धमान सूरी | | |
| १२९. ताजिक नीलकण्ठी | नीलकण्ठ दैवज्ञ | ज्ञान सागर प्रेस, बम्बई, सं० १९६२ |
| १३० चण्डेश्वर | | |
| १३१. त्रिपुरा रहस्य | | सरस्वती भवन ग्रन्थमाला वा. स त्रि. वि. १८८६ शकाब्दे |
| १३२. स्वप्नविज्ञानम् | रामस्वरुप शास्त्री अलीगढ़ वि. वि. | आदर्श प्रेस, अलीगढ़ १९५९ |
| १३३. स्वप्न दर्शन | राजाराम शास्त्री | |
| १३४. संस्कृत काव्य में शकुन | डा० दीप चन्द्र शर्मा प्रधानाचार्य एन. ए. एस. कालेज, मेरठ। | साहित्य भण्डार सुभाष बाजार मेरठ १९६६ |
| १३५ वैदिक स्वप्नविज्ञानम् | पं० भगवद्दत्त वेदालङ्कार | गुरुकुलपत्रिका, गुरुकुल, हरिद्वार |
| १३६. महाकापालिक तन्त्र | | |
| १३७. आगम सिद्धान्त | | |
| १३८. नारदीय पुराण | व्यास | कलिकाता गिरीशविद्यारत्न प्रेस, १८९१ ई० |
| १३९. अनुरुद्धवृत्ति (सांख्यसूत्र) | अनिरुद्ध | |
| १४०. योगसूत्र-ज्ञानानन्दभाष्य | ज्ञानानन्द | भारतधर्म महामण्डल, वाराणसी सं. २०२१ |
| १४१. षड्विंशब्राह्मणम् | | प्रकाशक-जीवानन्द विद्यासागर, कलकत्ता १८८१ ई० |
| १४२ न्यायसूत्र भाष्य | वात्स्यायन | गुजराती मुद्रण यंत्रालय बम्बई, १९२२ |

| | |
|---|---|
| १४३. वैशेनिक सूत्र भाष्य प्रशस्तपाद | मेससं ब्रजभूषण दास एण्ड कम्पनी, बनारस १८८५ |
| १४४. पञ्चपादिका पद्मपादाचार्य | ई० जे० लाजरस प्रेस, काशी संवत् १९४८ |
| १४५. विवरण प्रमे संग्रह विद्यारण | अच्युत ग्रन्थमाला-काशो सं. १९९६ |
| १४६. सिद्धान्त लेश संग्रह अप्पयदीक्षित | अच्युत ग्रन्थमाला-काशो स. १९९३ |
| १४७. गूढ़ार्थ संग्रह परकालसंयमो | वेदान्तदेशिक बिहार सभा मैसूर १९३९ ई० |
| १४८. ब्र. सू. वल्लभभाष्य वल्लभ | निर्णय सागर प्रेस, बम्बई सं. १९८२ |
| १४९. प्रस्थानरत्नाकर पुरुषोत्तम | |
| १५०. ब्र.सू.वेदान्त पारिजात सौरभ (भाष्य) निम्बार्क | निम्बार्क पीठ महाजनी टोला इलाहाबाद सं. २०२० |
| १५१. ब्र.सू. विज्ञानामृतभाष्य विज्ञानभिक्षु | |
| १५२. सूतसंहिता (ब्रह्मगीता) व्यास | आनन्दाश्रम पूना, १९२४ ई० |
| १५३. मध्यामक वृत्ति | |
| १५४. मध्यान्त विभाग सूत्र भाष्य टीका | |
| १५५. स्याद्वाद रत्नाकर | |
| १५६. सूक्त मञ्जरी | |
| १५८. मल्लिनाथ चरितकाव्य विनय चन्द सूरी | धर्माभ्युदय प्रेस, बनारस, वीर सं. २४३८ |
| १५९. पद्मानन्द महाकाव्य अमरचन्द्र सूरी | ओरियन्टल इन्स्टिट्यूट बड़ौदा, १९३२ |
| १६०. पार्श्वनाथ चरित काव्य भावदेव सूरी, | धर्माभ्युदय प्रेस, बनारस, वीर सं. २३३८ |
| १६१. शान्तिनाथ काव्य मुनिभद्र सूरी, | धर्माभ्युदय प्रेस, बनारस, वीर सं. २४३७ |

| | | |
|---|---|---|
| १६३. हरिवंश | व्यास | चित्रशाला प्रेस, पूना १९२९ |
| १६३. भामती | वाचस्पति | ब्र. सू. शाङ्करभाष्य-निर्णय सागर प्रेस बम्बई १९३४ ई० |

1. तहकोकुर रुइय्या-मौलानाशाह अब्दुल अज्जोज मुहद्दास देहलवी,-अहमदी प्रेस, देहली १९०४
2. *The Analysis of Dream* –Writter Medard Bos, English Translated.
   By—A. J. Pamerans.
3. An Outline of Abnormal Psychology
   By—Medougale.
4. Dreams And Their True Meaning Page 12.
   By –M C Donel.
5. Encyclopedia of Religion and Ethics Vol. V, P. 37.
   By –James Hastings Tand, TClark, New York, 1911 and 1955
6. *Primitine culture*, 1903, Vol I, P 12.
   Writter -E B Tylor, John Murray, London 1903.
7. Ibid.
8. Ibid p. 121.
9. Ibid, p. 122.
10. Ibid Vol 23 ( 1910 9. 409.
11. Encyclopedia Britannica 9th Ed , Vol. 7, P. 293.
12. *R. E Enthoven*: Folk Lore Notes 1914 Vol. I. P. 102.
    British Indian Press Mazgaon Bombay. 1914.
13. Journal of American Eolk lore Vol. 31. ( 1918 ) P. 32.
    Published by the American Folk lere Society ( Varsiou Volumes )
14. Folk lore by Folk lore Society London Vol. 65-66 (1924-55), P. 336.
15. *B. A. Donaldson*: The Wild Rue 1938 P. 174.
    London Luzac and Co. 1938.

16. The Standard Dictionary of Folk lore Mythology And Legend 1949 Vol. I P. 224.
By—Naria Leach, Funch Wagnalls Company, New York. 1949.

17. *William Grasham Summer*: Folk ways 1934 P. 24.
Ginn and Compahy Boston, New Yord etc. 1934.

# ग्रन्थानां संकेतचिह्नानि

| ग्रन्थनामानि | संकेतस्वरूपम् |
|---|---|
| अनेकार्थसंग्रहः | अने० सं० |
| अथर्ववेदः | अथ०, अ वे० |
| अमरकोषः | अ० |
| अष्टाङ्गहृदयशारीरकस्थानम् | अ० हृ० शा० स्था०, अष्टा, हृ० |
| ईश्वरप्रत्यभिज्ञा | ई० प्र० |
| ऐतरेयोपनिषद् | ऐ० उ० |
| कठोपनिषद् | कठ०, क० उ०, |
| कात्यायनवार्त्तिकम् | वा० |
| कैवल्योपनिषद् | कै० उ० |
| कौषीतक्युपनिषद् | कौ० उ० |
| गरुडपुराणम् | ग० पु० |
| चरकसूत्रम् | च० सू० |
| चरक-इन्द्रियप्रस्थानम् | च० इ० प्र०, च० सं०, च० [illegible] |
| चित्रदोपप्रकरणम् | चि० दो० |
| छान्दोग्योपनिषद् | छा० उ० |
| जातकपरिजातम् | जा० पा० |
| तन्त्रालोकः | त० आ० |
| ताजिकनीलकण्ठी | ता० नी० क० |
| त्रिपुरारहस्यज्ञानकाण्डम | त्रिपुरा० र० ज्ञा० |
| तेजोविन्दूपनिषद् | तेजो० वि० उ० |
| धर्मसिन्धुः | धर्म० सि० |
| नृसिंहतापिन्युपनिषद् | नृ० ता० उ० |

| ग्रन्थनामानि | संकेतस्वरूपम् |
|---|---|
| नैष्कर्म्यसिद्धिः | नै० सि० |
| नैषधीयचरितम् | नै० च० |
| न्यायसूत्रम् | न्या० सू० |
| पञ्चदशी | प० द० |
| पञ्चदशीचित्रदीपप्रकरणम् | प० द० चि० प्र० |
| पञ्चदशीयोगानन्दप्रकरणम् | प० द० यो० प्र० |
| पञ्चतन्त्रमित्रभेदः | पञ्च० मि० भे० |
| पद्मपुराणम् | प० पु० |
| प्रशस्तपादभाष्यम् | प्र० भा० |
| प्रथमपरिच्छेदः | प्र० प० |
| प्रश्नोपनिषद् | प्र० उ० |
| पाणिनीयसूत्रम् | पा० सू० |
| पैङ्गलोपनिषद् | पैं० उ० |
| वृद्धपराशरसंहिता | वृ० प० सं० |
| बृहत्पाराशरहोरा | बृ० पा० हो० |
| बृहज्जातकम् | बृ० जा० |
| बृहदारण्यकोपनिषद् | बृ० उ० |
| ब्रह्मसूत्रशाङ्करभाष्यम् | ब्र० सू० शां० भा० सू० |
| ब्रह्मवैवर्तपुराणकृष्णखण्डः | ब्र० वै० कृ० खं०, ब्र० व० |
| मध्यमवृत्तिः | म० वृ० |
| महाभारतम् | म० भा०, म० भा० शा० प० |
| माण्डूक्योपनिषद् | मा० उ० |
| माण्डूक्यकारिका | मा० का० |
| मालिनीविजयः | मा० वि० |
| मीमांसादर्शनम् | मी० द० |
| मुहूर्तगणपतिः | मु० ग० |
| मेदिनीकोषः | मे० |

| ग्रन्थनामानि | संकेतरूपम् |
| --- | --- |
| यजुर्वेदः | यजु० |
| योगयात्रा | यो० या० |
| योगवार्तिकम् | यो० वा० |
| योगवासिष्ठम् | यो० वा० |
| योगसूत्रम् | यो० सू० |
| लक्ष्मीतन्त्रम् | ल० त० |
| वायुपुराणम् | वा० पु० |
| वाल्मीकीयरामायणम् | वा० रा० |
| वीरमित्रोदयराज्यप्रकरणम् | वी० मि० रा० प्र० |
| वेणीसंहारनाटकम् | वे० सं० |
| वेदान्तपरिभाषा | वे० प० |
| वेदान्तपारिजातसौरभम् | वे० पा० सौ० |
| वेदान्तसिद्धान्तकौमुदी | वे० सि० कौ० |
| व्याकरणवार्तिकम् | वा० |
| शतपथब्राह्मणम् | श० ब्रा० |
| शाङ्करभाष्यम् | शा० भा० |
| शारीरकोपनिषद् | शा० उ० |
| शिवसूत्रवार्तिकम् | शि० सू० वा०, शि० सू० |
| शैवपरिभाषा | शै० प० |
| श्वेताश्वतरोपनिषद् | श्वे० उ० |
| सर्वसारोपनिषद् | सर्व०सा० उ० |
| सर्वोपनिषद् | सर्व० उ० |
| संक्षेपशारीरकम् | सं० शा० |
| साहित्यदर्पणः | सा० द० |
| सांख्यसूत्रम् | सां० सू० |
| सिद्धान्तकौमुदी | सि० कौ० |
| सिद्धान्तबिन्दुः | सि० बि० |

| ग्रन्थनामानि | संकेतस्वरूपम् |
|---|---|
| सुबालोपनिषद् | सु० उ० |
| सुश्रुतसंहिताशारीरकस्थानम् | सु० सं० शा० स्था० |
| सुश्रुतसूत्रस्थानम् | सु० सू० स्था० |
| सूतसंहिता | सू० सं० |
| सूतसंहिता ब्रह्मगीता | सू० सं० ब्र० गी० |
| स्वप्नप्रकाशः | स्व० प्र० |

# शुद्धिपत्रम्

| पृष्ठसंख्या | पं० सं० | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| २ | १८ | परम | परम् |
| ३ | २१ | स्दप्न | स्वप्न |
| ४ | २ | तन्त्रै | तन्त्रे |
| ९ | १० | यद् | यत् |
| ९ | १५ | प्रमित्यशः | प्रमित्यंशः |
| ९ | १८ | कीत्यते | कीर्त्यते |
| ९ | २१ | उक्तञ्तैतन्मा | उक्तञ्चैतन् |
| १० | १३ | शैवपरिभाषायन्तु | शैवपरिभाषायान्तु |
| १३ | ८ | विचारपथथ··· | विचारपथ··· |
| १८ | १४ | द्वयङ्गलञ्च | द्व्यङ्गुलञ्च |
| २३ | १२ | गृहणात्यर्थान् | गृह्णात्यर्थान् |
| २८ | १७ | यच्छ्रुचतं | यच्छ्रुतं |
| २९ | १८ | गृहणतः | गृह्णतः |
| ३२ | ७ | स्वप्नद्रष्टा | स्वप्नद्रष्ट्रा |
| ३५ | २१ | वाल··· | वलि··· |
| ३६ | ७ | कृत्वोपधान | कृत्वोपधानं |
| ४० | २४ | उपहार | उपहारं |
| ४१ | १६ | स्वप्नेनाप | स्वप्नेनापि |
| ४१ | २० | सयुक्त | संयुक्त |
| ४२ | २९ | नृ० ना० उ० | नृ० ता० उ० |

| पृष्ठसंख्या | पं० सं० | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ४४ | ९ | सियं | स्त्रियं |
| ४३ | ११ | दुःख | दुःखं |
| ४८ | १२ | समदृष्टा | समयदृष्टा |
| ५० | १ | भथ | भय |
| ५० | ४ | चापलपादिकं | चापल्यादिकं |
| ५० | ४ | दृष्यन्ते | दृश्यन्ते |
| ५५ | ६ | भुक्तवा | भुक्त्वा |
| ५८ | १८ | अधिक म | आधिक्येन |
| ५९ | १९ | नन्दः | नन्द |
| ५९ | १९ | कथितं | कथितो |
| ५९ | २० | इच्छामि | इच्छसि |
| ६० | १२ | मांमानां | मांसानां |
| ६१ | १२ | पु ाणे | पुराणे |
| ६३ | १५ | हान्नि··· | देहान्नि··· |
| ६६ | २१ | जिहक्या | जिह्वया |
| ६९ | १४ | गोदेवाश्च | गोदेवांश्च |
| ७३ | १० | भणं | भक्षणं |
| ७४ | ५ | तर | तरणं |
| ७४ | १३ | भैरवश्चैव | भैरवैश्चैव |
| ७४ | १९ | तं | तंयथावद् |
| ७६ | ६ | गवां | गवांच |
| ७६ | ७ | प्रतरण | प्रतरणं |
| ७८ | १४ | पाकां | पाकः |
| ८० | १३ | चाङ्कशं | चाङ्कशं |
| ९२ | १ | विषलघनम् | विषमलंघनम् |
| ८३ | २२ | स्वादित्वा | खादित्वा |
| ९२ | १५ | रक्तवावससम् | रक्तवाससम् |

| पृष्ठसंख्या | प० सं० | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ९७ | २० | अधिरोरणं | अधिरोहणं |
| ९८ | १४ | नपतनं | निपतनं |
| १०१ | १७ | स्पप्ने | स्वप्ने |
| १०३ | १९ | निदनस्थाने | निदानस्थाने |
| १०८ | १८ | सोदति | सीदति |
| ११५ | ८ | ह्रीं | ह्रीं |
| १२२ | २३ | ममन्त्रैः | मन्त्रैः |
| १२७ | १५ | शाक्यत | शक्यत |
| १२८ | १८ | िमपि | किमपि |
| १३० | १५ | ध्वात्वा | ध्यात्वा |
| १४२ | ८ | तत्रव | तत्रैव |
| १४३ | ९ | मरुद्णाः | मरुद्गणाः |
| १४३ | ४ | मनुजापि | मन्त्रजपकर्तुः |
| १४४ | १५ | वेप्टनं | वेष्टनं |
| १४५ | १८ | व्याव्धयो | व्याधयो |
| १४५ | २? | दण्डयाणये | दण्डपाणये |
| १५१ | १९ | कीर्तंन्य | कीर्तयन् |
| १५२ | १२ | गज्य | गज |
| १५२ | २६ | प्रहलाद | प्रह्लाद |
| १५३ | २२ | दृस्ष्टस्य | दृष्टस्य |
| १५४ | १ | दोसै | दोषै |
| १५४ | २ | गृन्ह्यते | गृह्यन्ते |
| १५४ | १७ | व्याजितो | व्याधितो |
| १५४ | २२ | रित्याडेश | रित्यादेश |
| १५५ | ३ | स्वप्तानृ | स्वाप्नान् |
| १५५ | १७ | पूणत्वात् | पूर्णत्वात् |
| १५५ | १८ | प्राच्रीनवीना | प्राचीननवीना |

| पृष्ठसंख्या | पं० सं० | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| १५५ | २२ | द्यौषधानी | द्यौषधानि |
| १५६ | २ | पाचाभवे | पाचनाभावे |
| १५६ | ३ | दा ि | दपि |
| १५६ | ४ | तच्छ ा | तच्छा |
| १५६ | १० | त्मि ा | त्मिका |
| १५६ | ११ | शास्त्रादिता | शास्त्रोदिता |
| १५६ | ११ | पद्यपमे | यद्यपीमे |
| १५७ | ९ | यावता | यावती |
| १५८ | १२ | जीवात्मनेव | जीवात्मनो |
| १५८ | २१ | रूपिणा | रूपिणी |
| १५९ | १५ | भयाः | भयानि |
| १५९ | १७ | पापिन | पापिनं |
| १५९ | १७ | निःगृहणादि | निःगृह्णाति |
| १५९ | २८ | समाचस्य | समाजस्य |
| १६० | १ | निराकरण | निराकरणं |
| १६० | २७ | रूपात्पकौ | रूपात्मकौ |
| १६१ | २ | ट्यति | टयति |
| १६२ | ८ | स्वप्नामा | स्वप्नानामा |
| १६३ | १७ | अथर्वदेऽपि | अथर्ववेदेऽपि |
| १६४ | १३ | दरुण | वरुण |
| १६४ | २० | निम्म | निम्न |
| १६६ | २६ | मवाप्प | मवाप्य |
| १६६ | ६ | सह। | सह |
| १७२ | ७ | प्र ादौ | प्रेक्ष्यादौ |
| १७४ | १७ | वशत् | विशत् |
| १७५ | ४ | व्यञ्जितं | व्यक्तम् |
| १७५ | १५ | चान्यत्रं | चान्यत्र |

| पृष्ठसंख्या | पं० सं० | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| १७५ | १९ | दशायां | दशाया |
| १७७ | २६ | मनोऽन्यत्र | मनसोऽन्यत्र |
| १७९ | ७ | सहनर्या- | सहकार्या- |
| १८० | ६ | माचते | माचक्षते |
| १८० | १७ | पाञ्चान | पाञ्चालान |
| १८५ | १४ | क्षत्रियाः | क्षत्रियः |
| १८५ | ९ | भवत | भवति |
| १८७ | ११ | चा | चार |
| १८७ | २७ | तृती | तृतीय |
| १८८ | २३ | पर्ि रति | पतिरस्ति |
| १८६ | २० | त्रय | त्रयं |
| १९२ | ५ | प्रत्यवात् | प्रत्ययत्वात् |
| १९२ | ५ | प्रत्यवत् | प्रत्ययवत् |
| १९२ | ६ | प्रत्यवत् | प्रत्ययवत् |
| १९२ | १० | स्वप्दादिषु | स्वप्नादिषु |
| १९३ | १४ | प्रतिद्यं | प्रतिपाद्यं |
| १९३ | १५ | प्रतिद्यत्व | प्रतिपाद्यत्व |
| १९३ | १६ | प्रतिद्यरूपं | प्रतिपाद्यं |
| १९३ | २२ | चाभावन्नि | चाभावान्नि |
| १९५ | १० | भप्रदं | भयप्रदं |
| १९५ | १३ | जग्रद् | जाग्रद् |
| १९५ | २७ | अक्रियमणेषु | अक्रियमाणेषु |
| १९६ | ४ | प्रकटतं | प्रकटितं |
| १९६ | १७ | अतश्च | अन्तश्च |
| १९६ | २४ | शयीत् | शयीत |
| १८७ | ८ | गजादिक | गजादिकं |
| १९७ | १२ | लबन | लम्बन |

| पृष्ठसंख्या | पं० सं० | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| १९९ | १५ | श्रुतिर्रति | श्रुतिरपि |
| २०० | १९ | स्वप्नावस्थाया | स्व नावस्थायां |
| २०२ | ४ | स्या | तस्या |
| २०२ | १२ | अया | अस्या |
| २०२ | २८ | थनुपपत्ते | थानुपपत्तो |
| २०६ | २ | सूचत्वं | सूचकत्वं |
| २०६ | १४ | ाग्नीनां | माग्नीनां |
| २०६ | २१ | न्यरूप्यत | न्यरूपयत् |
| २०८ | १७ | शंश्रयः | संश्रयः |
| २०८ | २८ | क्षगात | क्षणात् |
| २११ | २६ | िल | किल |
| २१३ | १८ | त्व | त्वं |
| २१४ | ४ | विमानब्धि | रिमानाब्धि |
| २१७ | ७ | रत्नथं | रत्नस्थं |
| २१८ | ९ | कार्यं | कार्तं |
| २२२ | २० | नतक्त्रा | नतवक्त्रा |
| २२४ | १२ | विशाक्ष्या | विशालाक्ष्यां |
| २२५ | २२ | शुक्लन्धा | शुक्लगन्धा |
| २२६ | २२ | समाचश्च | समाजश्च |
| २२७ | २३ | पणि | पर्वणि |
| २३० | १७ | विर्नदिशेत् | विनिर्दिशेत् |
| २३० | २० | वाल्छति | वान्छति |
| २३० | २५ | श्लो ौ | श्लोकौ |
| २३१ | १० | स्वप्नां | स्वप्नानां |
| २३२ | १३ | आश्चर्यंयय | आश्चर्यमयं |
| २३२ | २० | दे स्य | देशस्य |
| २३३ | १ | मामशङ्कताम् | मशङ्कताम् |

| पृष्ठसङ्ख्या | पं० सं० | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| २३३ | ९ | इत्यमन्य | इत्यमन्यत |
| २३३ | ११ | नी | नीरो |
| २३५ | ३ | स्वप्नां | स्वप्नानां |
| २३५ | ११ | सोऽमृगयद् | सोऽमृगयत |
| २३५ | २१ | चि াणि | चित्राणि |
| २३६ | ६ | शैथिल्ये | शैथिल्यं |
| २३७ | ३ | त्वे ादृश | त्वेतादृश |
| २३८ | १० | तर्वं | सर्वं |
| २३८ | १६ | द्ानीं | तदानीं |
| २४० | २ | सक्षिप्य | संक्षिप्य |
| २४१ | २७ | भविष्यति | भविष्यन्ति |
| २४१ | २६ | स्वप्व | स्वप्न |
| २४२ | १९ | मना | मनो |
| २४४ | २८ | मन्यतः | मन्यत |
| २४५ | ९ | मचतनस्य | मचेतनस्य |
| २४५ | १४ | लक्षण | लक्षणं |
| २४६ | ५ | अर्थं | अर्धं |
| २४६ | ११ | नैतिकता ाः | नैतिकतायाः |

# 3rd generation efficacy in Oral Rehydration Therapy

COMPOSITION

| | | |
|---|---|---|
| Sodium Chloride I.P. | : | 9.278% |
| Potassium Chloride I.P. | : | 3.944% |
| Sodium Citrate I.P. | : | 7.781% |
| Glycine B.P. | : | 22.044% |
| Dextrose I.P. | : | 52.894% |
| Excipients | : | q.s. |

Colour: Tartrazine

## speedoral

### Oral rehydration therapy

37.8 g of Speedoral powder in 1 L solution supplies:

| | | m. mol/Litre |
|---|---|---|
| Sodium | : | 90 |
| Potassium | : | 20 |
| Chloride | : | 80 |
| Citrate | : | 10 |
| Glycine | : | 111 |
| Dextrose | : | 111 |

**se**

**ate Dehydration**
sureful in a standard
reviously boiled and

**evere Dehydration**
uresful in a standard
previously boiled and

**Dosage**

Depending upon the degree of dehydration

**Infants & Children**
**1 to 2 litres daily**

**Older Children & Adults**
**2 to 3 litres daily**

**Indications**

For the use in the treatment of diarrhoea and/or vomiting and in other conditions of fluid and electrolyte loss.

**Caution**

Impaired renal function; in cases of severe and continuing fluid loss, supplementation with parenteral fluids may be required.



In co-operation with